तत्रादिमा स्यात्करुणा मदन्ती स्यादायता रोहिणिका द्वितीया ।
मध्या तु रम्याऽत्र भवेत्तृतीया तस्यां स्थितो धैवत एष भाति ॥
श्रुत्यो निषादाश्रययोस्तु जाती वक्ष्यामि दुर्गाभिहिते क्रमेण ।
दीप्तोग्रिका स्यात्प्रथमोपदिष्टा मध्या मता क्षोभिणिका द्वितीया ॥
तस्यां निविष्टः स्वर एष नित्यं निषादनामाऽतितरां विभाति ।
एवं स्वराः सप्त तदाश्रयाश्च यथोपदेशं श्रुतयोऽधुनोक्ताः ॥ १४० ॥
शुद्धाः स्वराः षड्जमुखा निरुक्ता मुख्यानि रागैकनिदानभूताः ।

— विकृतस्वराः —

रागान्तरोत्पत्तिनिमित्तभूतान्स्वरान्वदामो विकृतान्क्रमेण ॥ १४१ ॥
आदित्यसंख्या विकृतस्वराश्च तेषां च लक्ष्म प्रतिपादयामः ।
तत्रादिमः स्याच्च्युतषड्जनामा तत्सारणायां विहितक्रमेण ॥ १४२ ॥
मन्द्रो निषादः स्वसमीपवर्ती मध्यस्थषड्जश्रुतिमाश्रयेत ।
त्यक्त्वा निजान्त्यश्रुतिमेष षड्जः स्वोपान्त्यभूतां श्रुतिमाश्रयेत ॥
तदन्तिकस्थो वृषभस्तदानीं गृह्णाति षड्जश्रुतिमन्तिमां चेत् ।
षड्जस्वरो द्विश्रुतितामुपेत्य तदा लभेत च्युतषड्जसंज्ञाम् ॥ १४४ ॥
यदा निषादः श्रयते श्रुती द्वे षड्जोपविष्टां च तदन्तरां च ।
त्यक्त्वा श्रुती द्विश्रुति तत्र युक्तः षड्जोऽच्युताख्यो गदितो मुनीन्द्रैः ॥
षड्जेऽच्युते तत्र तदन्यभूतां श्रुतिं श्रयेच्चेदृषभस्तदानीम् ।
स्वभावतस्त्रिश्रुतिरेव सोऽयं चतुःश्रुतिः सन्विकृताख्य एकः ॥
गन्धारसंज्ञः स्वसपीमभाजं श्रुतिं प्रयायाच्च्युतमध्यमस्य ।
साधारणाख्यां लभते तदानीं गान्धार एष श्रुतयः श्रुतीनां ॥ १४७ ॥
श्रुतिद्वयं चेदथ मध्यमस्य गन्धारनामा लभते तदानीम् ।
स्यादन्तराख्यः कथितो मुनीन्द्रैस्तन्मध्यमे च च्युतनामभाजि ॥
अन्त्यां श्रुतिं चेच्छ्रयते तदानीं गान्धारसंज्ञश्च्युतमध्यमः स्यात् ।
श्रुतिद्वयं चेदथ मध्यमस्य गान्धारकोऽसौ लभते तदानीम् ।
स्यादच्युतो मध्यम एष नित्यं स्वान्त्यश्रुतेरप्यथ तन्निमित्तात् ॥

श्रुतित्रयेणैव तु मध्यमाख्यग्रामे समेतं खलु पंचमाख्यः ।
तदाच्युताख्यः कथितो मुनीन्द्रैः स्वान्त्यश्रुतेः प्रच्यवनात्स्वरोऽयम् ॥
यदादशायां च्युतमध्यमस्य तदान्तिमां गच्छति पंचमोऽयम् ।
चतुःश्रुतिः सन्विकृताभिधानः स पंचमः स्यात्कथितो मुनीन्द्रैः ॥
स्याद्धैवतस्त्रिश्रुतिको यदा तु तुर्यश्रुतिं गच्छति पंचमस्य ।
चतुःश्रुतिः सन्विकृतो लभेत सधैवतो भेदमथैकमेव ॥ १५२ ॥
आद्यां श्रुतिं षड्जगतां निषादः समाश्रयेच्चेदथ कैशिकी स्यात् ।
षड्जश्रुतिद्वन्द्वमवाप्त एव प्रोक्तो निषादः किल काकलीति ॥ १५३ ॥
एवं स्वरा द्वादश ते निरुक्ताः सदाशिवाद्यै विकृताभिधानाः ।
शुद्धाः स्वराः सप्त विनिश्चिताः स्युस्ते द्वादश स्युर्विकृताश्च भेदाः ॥
रक्तास्तु ते विंशतिरेकहीनाः समस्तरागोद्भवहेतुभूताः ।



## — स्वरभेदनिर्णयः —

षड्जादिभेदा विधिनाऽथवा किंचाथर्वणप्रोक्तविधानतो वा ॥ १५५ ॥
गान्धर्वशास्त्रैकविचारणाद्वा युज्येत भेदोऽत्र कथं नु तेषाम् ।
अत्रोच्यते शास्त्रविचक्षणानां प्रत्यक्षगम्यः स च शास्त्रवेद्यः ॥ १५६ ॥
क्रुष्टादयः सप्त च सामवेदे षड्जादयः सप्त तथाऽत्र शास्त्रे ।
उदात्तनीचप्रचयादिभेदः संगीतशास्त्रेऽप्यनवेक्ष्य एव ॥ १५७ ॥
गान्धर्वशास्त्रे परिनिष्ठिता ये मतङ्गशार्दूलकयाष्टिकाद्याः ।
आदेवतिर्यङ्मनुजप्रमोदहेतु प्रभेदं कथयांबभूवुः ॥ १५८ ॥
तदुक्तमार्गेण विचारणायां नादे तिरश्चां प्रथते स भेदः ।
शिखावलश्चातकमेषकौ च क्रौञ्चान्यपुष्टावविदर्दुरेभौ ॥ १५९ ॥
सप्ताऽपि षड्जप्रमुखान्वदन्ति स्वरानसंकीर्णतया क्रमेण ।
स्वराश्चतुर्धा खलु वाद्ययं संवादी विवादी च तथाऽनुवादी ॥ १६० ॥
वाद्यादिमानामिह लक्षणानि क्रमाच्चतुर्णां प्रतिपादयामः ।
यस्मिंश्च गीते बहुधा निवृत्तिः स्वरस्य यस्यास्ति स एव वादी ॥
स एव राजा भवति प्रधानं श्रुत्यष्टकेनान्तरितस्त्वमात्यः ।
आदित्यसङ्ख्यैर्व्यवधीयमानः श्रुतिप्रभेदैरथ सोऽप्यमात्यः ॥ १६२ ॥

संवादिनौ द्वावपि सन्निविष्टौ श्रुत्यष्टकादूर्ध्वमितश्चतुर्थात् ।
निषादगान्धारपदाभिधेयौ पंचस्वरी रक्तिविघातकौ द्वौ ॥ १६३ ॥
अतो विवादीत्यभिधां लभेते स्वराविमावित्युदितौ मुनीन्द्रैः ।
सामान्यतः पंच विवादिनौ तौ परस्परं तौ च रिधौ सपत्नौ ॥ १६४ ॥
इदं च पक्षान्तरमभ्युपेत्य शार्दूलशास्त्रार्थविदो वदन्ति ।
ये वादिसंवादिविवादिभिन्नास्त्वमात्यराजानुगतिं प्रपन्नाः ॥ १६५ ॥
स्वरास्त एते त्वनुवादिनः स्युरिति प्रतीतं किल याष्टिकाद्यैः ।

— स्वर वंशादयः —

षड्जो भवेद्देवकुलप्रसूत स्तथैव गान्धारकमध्यमौद्वौ ॥ १६६ ॥
सपंचमः स्यात्पितृवंशजातो रिधौ भवेतामृषिवंशजातौ ।
निषाद एकोऽसुरवंशजातस्त्वेवं कुलं सङ्गदितं स्वराणाम् ॥ १६७ ॥
चतुःश्रुति ब्राह्मणजातिरेषु स्यात्त्रिश्रुतिः क्षत्त्रियजातिरुक्तः ।
यो द्विश्रुतिः स्यात्सभवेत्तुवैश्यः शूद्रौ मतौ काकलिकान्तरौ द्वौ ॥
पद्मप्रभः षड्ज इति प्रतीतः स पिञ्जरः स्यादृषभस्वरश्च ।
गान्धारनामा च सुवर्णवर्णः स्यान्मध्यमः कुन्दसमानवर्णः ॥ १६९ ॥
हरित्प्रभः स्यादथ पंचमश्च स धैवतो राजति पीतवर्णः ।
भवेन्निषादोऽपि च कर्बुराभ इतीरितो वर्णविभाग एषः ॥ १७० ॥
स्वरास्तु सप्तस्वपि जातवन्तो द्वीपेषु जम्ब्वादिषु षड्जमुख्याः ।
वह्निर्विधाता च निशाकरः च लक्ष्मीपतिश्चाप्यथ नारदश्च ॥ १७१ ॥
सप्त स्वरांस्ते ददृशुर्मुनीन्द्राः स तुम्बुरुर्यक्षपतिः क्रमेण ।
हुताशनः पद्मभवश्च वाणी हरो हरिश्चैव गणेश्वरश्च ॥ १७२ ॥
सहस्रभानुश्च यथाक्रमेण प्रोक्ताः स्वराणामधिदेवताः स्युः ।
अनुष्टुबाद्यस्य तथा परस्य गायत्रिका त्रिष्टुबथापरस्य ।
बृहत्यभिख्या खलु पंक्तिरुष्णिकछन्दांस्यतोऽन्त्यस्य जगत्यभिख्या ॥
सरी तु वीराद्भुतरौद्रभाजौ तथैव बीभत्सभयानके धः ।
गनी तु योज्यौ करुणे रसे स्तस्तौ हास्यशृङ्गारकयोर्मपौ च ॥ १७४ ॥
सप्तस्वराणामिति कीर्तितानि च्छन्दांसि देवा ऋषयो रसाद्याः ।

— ग्रामाः —

स मूर्छनाद्याश्रयतामुपेतो ग्रामः स्वराणां समुदायरूपः ॥ १७५ ॥
सामन्यलक्ष्मैतदिति ब्रुवन्ति संगीतशास्त्रार्थविदो मुनीन्द्राः ।
ग्रामेषु तेषु त्रिविधेषु षड्जग्रामाभिधानं प्रथमं वदन्ति ॥ १७६ ॥
ततो द्वितीयं खलु मध्यमादिं गान्धारपूर्वं च तृतीयमाहुः ।
गान्धारपूर्वो न महीतलेऽस्ति स गानयोग्यः खलु नारदादेः ॥ १७७ ॥
तुर्यश्रुतौ पंचम एष तिष्ठेत्स्वस्यां यदा तेन समन्वितोऽयम् ।
संघः स्वराणां समुपैति षड्जग्रामाभिधानं मुनिभिः प्रणीतम् ॥ १७८ ॥
स पंचमाख्यस्तु यदा तृतीयश्रुतौ स्वतुर्यश्रुतिमप्यपास्य ।
वर्तेत तत्संमिलितः स्वरौघः स्यान्मध्यमग्राम इति प्रतीतः ॥ १७९ ॥
गान्धारकश्चेद्रिमयोः श्रुती स गृह्णाति गृह्णाति च पश्रुतिं धः ।
श्रुतीश्रितश्चेत्सधयोर्निषादो गान्धारकग्राममम्ं गृणन्ति ॥ १८० ॥
षड्जो भवेदाद्यतया प्रधानं ग्रामेषु संवादिबहुत्वतश्च ।
अग्रेसरः स्यादथ मध्यमोऽपि लोपाच्छ्रुतेरौडवषाडवेषु ॥ १८१ ॥
तद्धेतुदेवान्वयसंभवत्वाद्गान्धारकाख्योऽपि भवेत्प्रधानम् ।
ग्रामत्रयेऽप्यत्र मतास्तु देवा विरिंचिलक्ष्मीशमहेश्वराः स्युः ॥ १८२ ॥
हेमन्तके ग्रीष्मऋतौ च वर्षाकाले क्रमात्ते खलु गानयोग्याः ।
पूर्वाह्णमध्याह्नपराह्णकालेष्वेते शुभाश्चैव भवन्ति योग्याः ॥ १८३ ॥
ग्रामत्रयं तु प्रतिपाद्य सम्यङ्निरूपयामः खलु मूर्छनादीन् ।
सप्तस्वराणां क्रमतोऽधिरोहावरोहणे ते खलु मूर्छना स्यात् ॥ १८३ ॥
ग्रामद्वये ता अपि सप्त सप्त चतुर्दशैता मिलिताः प्रभिन्नाः ।
सा मूर्छनासु प्रथमाथ षड्जग्रामे भवेदुत्तरमन्द्रकाख्या ॥ १८४ ॥
ततो द्वितीया रजनी तृतीयोत्तरायताथो खलु शुद्धषड्जा ।
स्यान्मत्सरीकृत्तत ऊर्ध्वमश्वक्रान्ता ततः स्यादभिरुद्गतान्त्या ॥ १८५ ॥
स्यान्मध्यमग्रामजमूर्छनाद्या सौवीरिका स्यादथ हारिणाश्वा ।
ततस्तृतीया तु भवेत्कलोपनता चतुर्थी त्वथ शुद्धमध्या ॥ १८६ ॥
मार्गी च पौरव्यथ हृष्यकान्त्येत्येवं निरुक्ताः किल याष्टिकाद्यैः ।
मध्यस्थषड्जेन तु मूर्छनाद्या प्रारभ्यते चोत्तरमन्द्रिकाख्या ॥ १८७ ॥

आरोहणं स्यादिह चानिषादमाषड्जमस्मादवरोहणं च ।
तत्र द्वितीया रजनी निषादमारभ्य चारोहणमत्रचोक्तम् ॥ १८८ ॥
आधैवतं स्यादवरोहणं तु स्याद्धैवतादत्र किलानिषादम् ।
आरभ्य मन्द्रस्थितधैवतं तूत्तरायतामूर्छनिका तृतीया ॥ १८९ ॥
आपंचमं रोहणमत्र कार्यमाधैवतं स्यादवरोहणं च ।

* * * * * *

आरभ्य मन्द्रस्थितमध्यमं चेत्स्यात्पंचमी तत्र च मत्सरीकृत् ॥ १९० ॥
आरोहणं गान्तमिहोपदिष्टमामध्यमं स्यादवरोहणं च ।
आरभ्य मन्द्रस्थितगं किलाशक्रान्ता भवेन्मूर्छनिकात्र षष्ठी ॥ १९१ ॥
आरोहणं मध्यगतर्षभान्तं गान्धारयध्मान्तमथावरोहः ।
आरभ्य चेन्मन्द्रगतर्षभान्तं सा मूर्छना स्यादभिरुद्गताख्या ॥ १९२ ॥
आषड्जमारोहणमुत्तमं स्यान्मन्द्रर्षभान्तः कथितोऽवरोहः ।
अथोच्यते लक्षणमत्र सम्यक्तन्मध्यमग्रामगमूर्छनानाम् ॥ १९३ ॥
आरभ्यते मध्यगमध्यमेन सौवीर्यसौ मूर्छनिकादिमा सा ।
आरोहणं तारगगान्तमस्यामामध्यमं स्यादवरोहणं च ॥ १९४ ॥
गान्धारमारभ्य तु मध्यगं चेत्सा हारिणाश्वा कथिता द्वितीया ।
आरोहणं तारगतर्षभान्तमामध्यगान्धार मथावरोहः ॥ १९५ ॥
आरभ्यते मूर्छनिका कलोपनता ततो मन्यगतर्षभेण ।
आरोहमातारगषड्जमाहुर्मध्यर्षभान्तं मुनयोऽवरोहम् ॥ १९६ ॥
मध्यस्थषड्जेन तु शुद्धमध्या प्रारभ्यते मूर्छनिका चतुर्थी ।
आरोहणं प्राहुरिहानिषादमाषड्जमस्मादवरोहणं च ॥ १९७ ॥
आरभ्य मन्द्रस्थनिषादमुक्ता स्यात्पंचमी मूर्छनिकात्र मार्गी ।
आरोहणं मध्यगधैवतान्तं तथा निषादावधिकोऽवरोहः ॥ १९८ ॥
आरभ्यते मन्द्रगधैवतेन पौरव्यसौ मूर्छनिकात्र षष्ठी ।
आरोहणं मध्यगपंचमान्तमत्रावरोहोऽपि च धैवतान्तः ॥ १९९ ॥
स हृष्यका मन्द्रगपंचमाख्यस्वरे समारम्भवती तथान्त्या ।
आरोहणं मध्यगमध्यमातं स्यात्पंचमान्तस्तु तथावरोहः ॥ २०० ॥
ग्रामद्वये सम्यगुदीरिताः स्युस्तन्मूर्छनास्त्वत्र चतुर्दशैव ।
षड्जस्य तु स्थानगते निषादे भवेद्द्रजन्याह्वयवमूर्छना सा ॥ २०१ ॥

स्थाने तु षड्जस्य तु धैवताद्यस्वरेष्ववस्थानमुपागतेषु ।
ता मूर्छनाः स्युः क्रमतस्तथैवोत्तरायताद्या इह वेदितव्याः ॥ २०२ ॥

स्वरांस्तु षड्जप्रमुखांस्तदूर्ध्वमुत्सारयेत्तत्र तथा क्रमेण ।
गान्धार आसेदुषि मध्यमस्यस्थानं तथा सा खलु हारिणाश्वा॥ २०३ ॥

तथर्षभादावपि तान्कलोपनतादिमान्मध्यमदेशभाजि ।
तान्मध्यमादींस्तु पुनस्तदूर्ध्वमुत्सारयेदित्यपि केचिदाहुः ॥ २०४ ॥

प्रत्येकमेताश्च चतुर्विधाः स्युः शुद्धास्तथा काकलिकासमेताः ।
ताः सान्तरास्तद्द्वयसंयुताश्च संभूय पंचाशदिमाश्च षट्च ॥ २०५ ॥

सप्तस्वथैतासु च मूर्छनासु प्राकारभेदाद्गणनां वदामः ।
षड्जाह्वयग्रामगमूर्छनासु षड्जो हि यां पूरयतेऽत्र संख्याम् ॥ २०६ ॥

तां मूर्छना पूरयतीहसंख्यां सौवीरिकादिष्विति तन्नयः स्यात् ।
ता मूर्छनाः सप्तविधाः स्वरेष्वाद्येन द्वितीयेन तृतीयकेन ॥ २०७ ॥

तुर्येण वा स्यादथ पंचमेन रम्भाच्च षष्ठेन च सप्तमेन ।
षड्भिः समेता इह मूर्छनायाः पंचाशदेताः खलु सप्तधेति ॥ २०८ ॥

एवं च सर्वास्वपि मूर्छनासु शतत्रयं द्वानवतिश्च संख्या ।

## — तानाः —

यथाक्रमोच्चारणतः स्वराणां त्यक्ते स्वरे सिध्यति शुद्धतानः ॥ २०९ ॥

तं च द्विधा षाडवमौडवं च तानं विदुर्दत्तिलकोहलाद्याः ।
स्वरं विनैकं खलु षाडवः स्याद्द्वाभ्यां विहीनः पुनरौडवः स्यात् ॥

वर्ज्यस्वरानत्र विशिष्य षड्जग्रामे तु सम्यक्प्रतिपादयामः ।
षड्जर्षभौ पंचमसप्तमौ च प्रयोगभेदेन च ते विवर्ज्याः ॥ २१० ॥

तद्वर्जितत्वेन चतुर्विधास्ते सप्तापि चाष्टोत्तरविंशतिः स्यात् ।
एवं च पंचस्वरयुक्ततानाः प्रयोगभेदात्पुनरौडवाः स्युः ॥ २११ ॥

सप्तापि ते पंचमषड्जहीनाः सप्तापि गान्धारनिषादवर्ज्याः ।
सप्तोज्झिताश्चर्षभधैवताभ्यामेवं तथैकाधिकविंशतिः स्युः ॥ २१२ ॥

एकोनपंचाशदितीह षड्जग्रामे भवेयुः किल शुद्धतानाः ।
तन्मध्यमग्रामिकशुद्धतानान्विविचिन्त्य सर्वान्प्रतिपादयामः ॥ २१३ ॥

त्रिंशत्सहस्रं च चतुःसहस्रमुपेयुषी पञ्चशतीं च पश्चात् ।
षष्टिश्च संख्या किल मूर्छनानामितीरिता गायकबोधहेतोः ॥ २२८ ॥

उक्तप्रकारेण तथौडवानां गान्धारके धैवतके च मुख्ये ।
एकस्वरीप्राथमिकक्रमेण चतुःसहस्री च शतानि चाष्टौ ॥ २२९ ।

चतुःस्वरावृत्तिककूटताने निषादसाहित्यविवर्जनाभ्याम् ।
शतानि सप्ताथ तथाष्टषष्टिः संख्याविशेषः कथितो मुनीन्द्रैः ॥ २३० ।

उक्तप्रकारेण चतुःस्वराणां त्यागात्तथा त्रिस्वरकूटताने ।
स्यान्मध्यमादित्वविवर्जनाभ्यां स....शतं षट्सहितं च लब्धम् ॥

तथा भवेद्द्विस्वरकूटताने द्वे विंशती स्तश्चतुरुत्तरे च ।
एकस्वरा मूलगताः स्वभेदाश्चतुर्दशैवेति विनिश्चितोऽर्थः ॥ २३२

यदिच्छया गायाकवैणिकानां क्रमेण वाप्युत्क्रमतोऽपि गाने ।
अनेन वेदाः प्रभवन्ति तानां (?) तत्रैव ताने पुनरुक्तिरुक्ता ॥ २३३

षड्जे भवेदुत्तरमन्द्रिकाद्या षड्जादिका माध्यमिकी चतुर्थी ।
स्याच्छुद्धमध्या च समानभेदस्तत्र.....................पञ्चमोऽस्ति ॥ २३४

चतुःस्वरीत्वं च समक्रमत्वं भवेत्समं पञ्चमवर्जनं च ।
स्युस्त्रिस्वरा द्विस्वरकास्तथैकस्वराश्च तानाः सदृशीकृतास्ते ॥ २३५

भवेद्द्वितीया रजनी तु षड्जग्रामे मता सा च निषादपूर्वा ॥
स्यात्पञ्चमी माध्यमिकी तु मार्गी पञ्चस्वरास्तत्प्रभवाः समाः स्युः ॥

चतुःस्वरास्त्रिस्वरकास्तथा द्विस्वरास्तथैकस्वरकाश्च तुल्याः ।
षड्जे तृतीया खलु मूर्छना योत्तरायता धैवतपूर्विका सा ॥ २३७

स्यान्मध्यमग्रामगपौरवी च स्यात्पञ्चमी धैवतपूर्विका च ।
तानास्तु षट्पञ्च चतुस्त्रिका द्विस्वरास्तथैकस्वरका सदृक्षाः ॥ २३८

तिसृष्वपीमासु च मूर्छनासु कूटाह्वयाः स्युः पुनरुक्ततानाः ।
एकाधिकाशीतियुता निरूनं चतुःसहस्राणि भवन्ति संख्याः ॥ २३९

तानान्द्विरुक्तानिह वर्जयित्वा पूर्णैरपूर्णैश्च सह क्रमैश्च ।
एषा मता स्यादवशिष्टकूटतानौघसंख्येति मता मुनीनाम् ॥ २४०

लक्षत्रयं सप्तदशोदितानि पुनः सहस्राणि पुनः शतानि ।
न वापि च त्रिंशदुपाश्रितानि तत्रैवमुक्ताः खलु कूटतानाः ॥ २४१

निश्चित्य संख्यामथ गायकानां तज्ज्ञानहेतुं कथयाम्युपायम् ।



## — मेरुप्रकरणम् —

एकं द्वयं च त्रितयं चतुष्कं पञ्चाथ षट्कं च निधाय सप्त ॥ २४२ ॥
द्वितीयमद्येन विवर्धनीयं तृतीयामेतेन विवर्धनेन ।
विवर्धितेनाथ तृतीयकेन तुर्यं तथेत्याद्युदितं क्रमेण ॥ २४३ ॥
पूर्वेण पूर्वेण पुरः पुरोऽङ्को विवर्धनीयः सकलस्तथैव ।
गण्यास्तु सर्वास्वपि मूर्छनासु चैकस्वराद्या इह कूटतानाः ॥ २४४ ॥
मूलक्रमं साधु निवेशयेत्प्राक्सप्तस्वरं वाथ च षट्स्वरं वा ।
पञ्चस्वरं वाथ चतुःस्वरं वा द्राक्त्रिस्वरं द्विस्वरमेव वापि ॥ २४५ ॥
चतुःस्वरं तत्र निवेश्य पूर्वं प्रस्तारभेदं प्रतिपादयामः ।
सरीगमौ च प्रथमं लिखित्वा षड्जादधस्तादृषभो विलिख्यः ।
षड्जस्त्वधस्तादृषभा द्विलिख्यः शिष्टौ गमौ पूर्ववदेवलेख्यौ ॥ २४६ ॥
मन्द्रस्थषड्जस्य तथाऽदिमत्वात्स्वरान्तरं प्राङ्न विलेखनीयम् ।
पूर्वस्वरो येन परादधस्ताद्विलेखनीयस्तत एष तानाः ॥ २४७ ॥
प्रस्तारमार्गेणकृतोऽत्र तानो रिसौ गमौ चेति मतो द्वितीयः ।
तमेव तानप्रकृतिं विधाय तानान्तरः स्यात्तदधो विलिख्यः ॥ २४८ ॥
विसृज्य षड्जमृषभं च पश्चाद्गान्धारतो यस्त्वृषभो विलेख्यः ।
मूलक्रमन्यायवशात्तु पूर्वं विलेखनीयौ च सगौ क्रमेण ॥ २४९ ॥
स्यान्मध्यमस्यापि च मध्यमोऽधो यथोपरिन्यायवशाद्विलेख्यः ।
लेख्यः स्वरो यद्युपरिस्थितःस्यात्तत्पूर्वकस्तत्र विलेखनीयः ॥ २५० ॥
एतावतान्यायवशेन तानाः सर्वेऽपि चान्ते क्रमतो विलेख्याः ।
प्रोक्ताः षडेवं खलु मध्यमान्तात्तथैवगान्ता रिषभान्तिमाश्च ॥ २५१ ॥
ततस्तुसान्ताः च षडेव तेन प्रोक्ताः चतुर्विंशतिरत्रतानाः ।
पञ्चस्वरी प्रस्तरणे भवन्ति पान्ताः चतुर्विंशतिरत्रमान्ताः ॥ २५२ ॥
गान्तर्षभान्ताश्च तथैवसान्ताः संख्याऽत्र विंशत्ययुतं शतं स्यात् ।
ते षट्स्वरी प्रस्तारणेऽत्र ताना धान्ताः च पान्ताः च तथैवमान्ताः ॥
गान्तर्षभान्ताः च ततैव सान्ता एकैकशो विंशतिकं शतं स्युः ।
आहृत्य विंशत्यधिका च सप्तशतीऽह संख्या गदिता मुनीन्द्रैः ॥

सप्तस्वरीप्रस्तरणेऽत्र ताना न्यन्ताः च धान्ताः च तथैव पान्ताः ।
मान्ताः च यान्ताः च तथर्षभान्ताः सान्ता च ये तद्गणनां वदामः ॥
एकैकशो विंशतियुक्त सप्तशतिं मिलित्वा तु भवेदमीषाम् ।
संख्या पुनः पञ्चसहस्रिकाऽत्र द्वे विंशती चेत्युदिता मुनीन्द्रैः ॥ २५६ ॥
दिङ्मात्रमेवाऽत्र निरूपितं स्याच्छिष्टाश्च तानाः पुनरेवमूह्याः ।
प्रस्तारलब्धा खिल तानसंख्या बोधायवक्ष्याम्यथ खण्डमेरुम् ॥ २५७ ॥



— खण्डमेरुः —

आद्यातु पंक्तिः किल सप्तकोष्ठा षट्कोष्ठिका चैव ततो द्वितीया ।
स्यात्पञ्चकोष्ठा च ततस्तृतीया तुर्याचतुष्कोष्ठ युताच वेद्या ॥ २५८ ॥
स्यात्पञ्चमी तत्र पुनस्त्रिकोष्ठा षष्ठी च कोष्ठद्वितयेन युक्ता ।
स्यात्सप्तमी पंक्तिरिहैककोष्ठा तासुक्रमादङ्क विलेखनं स्यात् ॥ २५९ ॥
आद्याद्यकोष्ठे विलिखेदिहैकं षट्स्वन्यकोष्ठेषु लिखेत्ततश्च ।
द्वितीयपंक्तेः प्रथमे तु कोष्ठे लिखेदिहैकं द्वितयं द्वितीये ॥ २६० ॥
ततस्तृतीये विलिखे त्षडङ्कतुर्ये चतुर्विंशतिलेखनं स्यात् ।
स्यात्पञ्चमे विंशतियुक्छतं च सविंशतिः सप्तशती च षष्ठे ॥ १६१ ॥
तृतीयपंक्तेः प्रथमे तु कोष्ठे चत्वार्यथ द्वादश तु द्वितीये ।
द्वितीयकोष्ठे पुनरष्टयुक्ते द्वेविंशती तत्र विलेखनीये ॥ २६२ ॥
चतुर्थकोष्ठे तु विलेखनीयं शतंद्वयं विंशति युग्मयुक्तम् ।
तदन्तकोष्ठे तु सहस्रमेकं शतानिचत्वारि च विंशती द्वे ॥ २६३ ॥
तुरीयपंक्तौ प्रथमे तु कोष्ठे त्वष्टादशाङ्कः प्रविलेखनीयः ।
द्वासप्ततिस्तत्र भवेद्द्वितीये शतत्रयं षष्ठियुतं तृतीये ॥ २३४ ॥
तुर्ये सहस्रद्वितयंशतेन षष्ठ्या च युक्तं प्रविलेखनीयम् ।
तत्रादिमे पञ्चमपंक्तिकायां कोष्ठेविलेख्यानवतिश्च षट् च ॥ २६५ ॥
द्वितीय कोष्ठेऽत्र चतुःशतीस्या दशीतियुक्ता प्रविलेखनीया ।
भवेत्सहस्रद्वितयं तथाऽष्टशती तथाऽशीतियुता तृतीये ॥ २६६ ॥
षष्ठ्याद्यकोष्ठे खलु षट्शतीस्याद्विलेखनीया च ततो द्वितीये ।
भवेत्सहस्रत्रितयं तथा षट्छनी समेतं प्रविलेखनीयम् ॥ २६७ ॥

कोष्ठेलिखेत्सप्तमपंक्तिकायां चतुःसहस्रं त्रिशतिं तथैव ।
सविंशकं तत्र पृथङ्निवेशः कस्मात्प्रमाणादवगम्यतेऽसौ ॥ २६८ ॥



## — तत्त न्याय: —

अत्रोच्यतेन्यायतयैवलब्धस्तन्न्यायमेव प्रतिपादयामः ।
पङ्क्तिद्वयाद्यस्थितमेकमेकं संयोज्यकुर्याद्द्वितय द्वितीये ॥ २६९ ॥
तृतीयपंक्तेः पुनराद्य कोष्टे द्वयं तदेव द्विगुणं निदध्यात् ।
पंक्ति प्रयाद्यङ्क समन्वयात्षट् द्वितीयपंक्तौ विलिखे त्तृतीये ॥ २७० ॥
तृतीयपंक्तौ विलिखेद्द्वितीये षडङ्कमेक द्विगुणं विदध्यात् ।
ततः षडंकं प्रतियोज्य तस्मिन्नष्टादशाद्ये विलिखेच्चतुर्थ्याः ॥ २७१ ॥



## — खण्डमेरुः —

| | | | | | | |
|---|---|---|---|---|---|---|
| 1 | | | | | | |
| | 1 | 2 | 6 | 24 | 120 | 720 |
| | | 4 | 12 | 48 | 240 | 1440 |
| | | | 18 | 72 | 360 | 2160 |
| | | | | 96 | 480 | 2880 |
| | | | | | 600 | 3600 |
| | | | | | | 4320 |



॥ रघुनाथभूपविरचिता ॥

॥ संगीतसुधा ॥



ततश्चतुर्थ्यर्थगताङ्क संख्यां हृत्वा चतुष्कं गतिरत्रलब्ध
द्वितीयपंक्तेस्तु चतुर्थकोष्टे लब्धाञ्च संख्यां विनिवेशयेच्च ॥ २७२ ॥

तामेव संख्यां द्विगुणं विधाय तृतीयपंक्तौ विलिखेत्तृतीये ।
तस्यां चतुर्विंशतिमेलनेन द्वासप्ततिस्तुर्य गतद्वितीये ॥ २७३ ॥

पुनश्चतुर्विंशतिमेलनेन षड्डुत्तरं स्यान्नवतिस्ततोऽथ ।
सा पञ्चमस्यादिमकोष्टसंख्या द्वितीयपंक्तेरथ पञ्चमे स्यात् ॥ २७४ ॥

शतं तु विंशत्यधिकं निविष्टं द्वैगुण्ययुक्तं विलिखेदधस्तात् ।
अत्रापि विंशत्यधिकं शतं च संयोज्य तस्मिन्विलिखेत्ततोऽधः ॥२७५ ॥

शतत्रयीं षष्टियुताञ्च लब्धां शतेन विंशत्यधिकेन युक्ताम् ।
द्वितीयके पञ्चमपंक्तिकायामशीतियुक्तञ्च चतुश्शतञ्च ॥ २७६ ॥

ताञ्चापि संख्यां विलिखेदधस्ताच्छतेन विंशत्यधिकेनयुक्ताम् ।
तां षट्छतिप्राप्य पुनश्चसम्यक् षट्पंक्तिनिष्ठादिमकोष्टसंख्या ॥२७७ ॥

संयोज्य सर्वां विलिखेत्समग्रं द्वितीय पंक्त्यन्तिमकोष्टदेशे ।
सविंशतिं सप्तशतीं च लब्धां संख्यामिमांञ्च द्विगुणां विधाय ॥ २७८ ॥

तृतीयपंक्त्यन्तिमकोष्टदेशे सहस्रमेकं च चतुश्शतीञ्च ।
द्वे विंशती चापि विलिख्य सम्यक्सविंशतिं सप्तशतीं प्रयोज्य॥ २७९ ॥

लब्ध्वा सहस्रद्वितयं शतञ्च षष्टिं च संख्या तदधोविलिख्य ।
सविंशतिं सप्तशतीं च तस्यां संयोज्य पश्चात्तदधो विलेख्यः ॥ २८० ॥

लिखेत्सहस्रद्वितयं तथाष्टशतीमशीत्या मिलितां क्रमेण ।
सविंशतिं सप्तशतीं पुनश्च संयोज्य तस्यां विलिखेत्ततोऽधः ॥ २८१ ॥

लब्धं सहस्रत्रितयं तथा षट्छतीयुतं संविलिखेदधस्तात् ।
सविंशतिं सप्तशतीं पुनश्च संयोज्य तस्यां विलिखेदधस्तात् ॥ २८२ ॥

चतुस्सहस्राणि शतंत्रयञ्च तस्यां लिखेद्विंशतिसंयुतञ्च ।
ताः सप्तपंक्त्यादिमकोष्ठसंख्या द्वेविंशती पञ्चसहस्रिकाच ॥ २८३ ॥

---

गान्धर्वशास्त्रे निपुणः कदाचिदुक्तेषु तानेषु विलिख्य कश्चित् ।
एतस्य संख्या कतमेति पृच्छेत्तस्योत्तरं तावदुदीरयामः ॥ २८४ ॥

उद्दिष्टशब्देन तदेवचोक्तं तस्याप्युपायः कथितो मुनीन्द्रैः ।
सगौ रिमौ चापि विलिख्य पृष्टः सरी गमौ चापि विलिख्यचोर्ध्वम् ॥

अथाद्यपंक्त्याः सकलेऽपि कोष्ठे निधाय लोष्टानि यथाक्रमेण ।
मूलक्रमात्तस्य पुनःस्वरस्य पृष्टोऽन्तिमस्यापि तथैकभावात् ॥ २८६ ॥

नचालयेदन्तिमकोष्ठलोष्टं तल्लोपनञ्चापि तथैवकार्यम् ।
कृते तु लोपे सरिगेति मूलक्रमेस्थितस्त्रिस्वरमात्रशिष्टः ॥ २८७ ॥

निर्दिष्टतानः सगरीति सिद्धस्तस्मिन्पुनर्लोष्टविचालनंस्यात् ।
मूलस्थगान्धारकतो द्वितीय उद्दिष्टतानान्त्यगतो यतो रिः ।
द्वितीयकोष्टे चलिते ह लोष्टे स्याद्द्वित्वसंख्या खलु तेन लब्धा॥ २८८॥

उद्दिष्टमूलक्रमयोः स गत्वा तत्रापि लोष्टं न विचालनीयम् ।
अद्याद्यकोष्ठस्थितमेकमंकं द्वित्वेन संयोज्य पुनस्त्रिसंख्या ॥ २८९ ॥

सगौरिमौ चेति तृतीयभेदं गृहाणचेत्युत्तरमत्रवाच्यम् ।
मगौ सरी चापि विलिख्य तानं मूलक्रमात्तत्र विलिख्यचोर्ध्वम् ॥२९०॥

उद्दिष्टतानान्तगतर्षभस्य मूलक्रमान्त्यस्य च मध्यमस्य ।
तृतीयभावेन तृतीयकोष्ठे लोष्टागते द्वादशकाङ्कलाभः ॥ २९१ ॥

त्यक्तर्षभं चाप्युभयत्र शिष्टान्स्वराँल्लिखेत्त्रीनुभयत्र साधु ।
उद्दिष्टतानान्तिमषड्जको हि मूलक्रमान्त्यस्वरतस्तृतीयः ॥ २९२ ॥

तस्मात्पुनर्लोष्टविचालनं स्यात्तृतीयकोष्टे चतुरङ्कयुक्ते ।
षड्जस्य लोपेऽप्युभयत्रजाते शिष्टावुभौ तत्र गमौ गमौच ।
उद्दिष्टतानान्तिमगः च मूलक्रमान्तिमान्मध्यमगाद्द्वितीया ॥ २९३ ॥

द्वितीयकोष्टे खलुतेन कार्यं त्वेके पुनर्लोष्टविचालनं च ।
आद्याद्यकोष्टे खलु लोष्टयुक्ते चैकाङ्कमादाय च योजयेत्तम् ॥ २९४ ॥

तल्लोष्टयुक्तोऽष्टगताङ्कयोगादष्टादशोऽयं कथितस्तुतानः ।
उक्तेषु तानेषु चतुः स्वरेषु त्वष्टादशं तानमधो विलिख्य ॥ २९५ ॥

प्रदर्शय त्वं यदि शास्त्रवक्तेत्युक्ते विलिख्याऽत्रनिरूपयामः ।
तदेव 'मष्टादश' मामनन्ति वक्ष्येऽधुनाष्टादशतानरूपम् ॥ २९६ ॥
तत्राद्यपंक्तेरपि कोष्ठकेषु चतुर्षु लोष्टानि निधायपूर्वम् ।
अत्राद्यपंक्तेस्तु चतुर्थकोष्ठे बिन्द्वङ्किते स्थापितमत्र लोष्टम् ॥ २९७ ॥
तस्याप्यधस्तात्तु षडङ्कयुक्तं विहायकोष्ठं तदधो नयेत्तत् ।
द्वितीयकोष्ठे तु तृतीयपंक्तेरादित्यसंख्याकसमन्विते च ॥ २९८ ॥
तत्रैव लोष्टं च निधाय पश्चाल्लोष्टान्तरस्याप्यथ चालनं स्यात् ।
तृतीयकोष्ठे विनिविष्टलोष्टं द्वितीयपंक्ते द्वितयाङ्कयुक्तम् ॥ २९९ ॥
द्वितीयकोष्ठं प्रविहाय तस्मात्तृतीयपंक्तेः प्रथमेतु कोष्ठे ।
लोष्टं निदध्याच्चतुरङ्कयुक्ते त्वाद्यद्वितीयस्थितलोष्टकं तु ॥ ३०० ॥
द्वितीयपंक्तेः प्रथमेतुकोष्ठे नीत्वाङ्कयुक्तेऽपि ततोनिदध्यात् ।
विचाल्यकोष्ठे (*) लोष्टकानि मौलिस्थलोष्टं न विचालनीयम् ॥ ३०१ ॥
सलोष्टकोऽष्टाङ्कसमन्वयेन भवेदिहाष्टादशतैव संख्या ।
एवं च संख्यावगमे च सिद्धे तानस्वरूपं प्रतिपादयामः ॥ ३०२ ॥
सरी गमौ चापि विलिख्य मूलक्रमं त्वधस्तस्य विलेखनीयः ।
यतस्तृतीये निहितस्तु लोष्टं ततस्तदन्ते त्वृषभो विलेख्यः ॥ ३०३ ॥
ततो रिलोपे सगमेति मूलं त्रिभिः स्वरैः शिष्यत एव सद्यः ।
तृतीयकोष्ठे यतएव लोष्टं भवेत्तृतीयो हि समध्यमात्सः ॥ ३०४ ॥
लब्धर्षभोपान्त्यतमो विलेख्यः षड्जस्य लोपः खलु मूलतः स्यात् ।
ततो द्वितीयाङ्कित कोष्ठलोष्ट द्वितीयकोष्ठे विनिवेशनेन ॥ ३०५ ॥
गान्धार एवात्र भवेद्द्वितीयः षड्जानुपूर्वं विनिवेशयेत्तम् ।
शिष्टं तु तं मध्यममादिभूतं विधायताने विनिवेशयेत्तु ॥ ३०६ ॥
ततस्तु तानो समगर्यभिख्यो विलिख्य सम्यक् परिदर्शनीयः ।
कृत्स्नस्यतानस्य निरूपणेतु ग्रन्थस्य भूयानिह विस्तरः स्यात् ॥ ३०७ ॥
कुशाग्रबुद्धेः कुशलस्य चैतत्सन्दर्शनेनाखिलतानबोधः ।

## — कूटतानाः —

मौलिस्थितैकाङ्कपरिग्रहेण ह्येकस्वरः स्यादयमेक एव ॥ ३०८ ॥

पंक्तिद्वयं चैकविमिश्रणेन द्वौ सम्मतौ द्विस्वरकूटतानौ ।
तृतीयपंक्त्यादिचतुष्टयेन प्राक् पंक्तिकैकैकविमिश्रितस्य ॥ ३०९ ॥

षडेव ते त्रिस्वरकूटतानाः क्रमेण चैवं प्रतिबोधनीयम् ।
चतुर्थपंक्त्यादिमकोष्ठदिव्यदष्टादशत्वाङ्कविमिश्रणेन ॥ ३१० ॥

उक्ताङ्कजालस्य चतुःस्वराणां तानाश्चतुर्विंशतिरत्रवेद्याः ।
तथैव तत्पञ्चमपंक्तिकादौ षड्त्तराया नवतेस्तु योगात् ॥ ३११ ॥

प्राक्पंक्तिजाद्यङ्कक दण्डितस्य पञ्चस्वरा विंशतियुक्छतं स्युः ।
षष्ठाद्यकोष्ठे स्थितषट्छतेन प्राक्पंक्तिकाद्याङ्कविमिश्रणेन ॥ ३१२ ॥

सविंशतिः सप्तशतीति वेद्या भवन्त्यमी षट्स्वरकूटतानाः ।
तथाऽन्त्य पंक्त्यादिमकोष्ठदेशे चतुः सहस्रीच शतत्रयी च ॥ ३१३ ॥

ततः च विंशत्यधिकं मिलित्वा षट्पंक्तिकाद्यांककदंबकेन ।
भवन्ति सप्तस्वरकूटताना द्वे विंशती पञ्च सहस्रिका च ॥ ३१४ ॥

एवंच सर्वास्वपि मूर्छनासु प्रत्येकमेवं किल कूटतानाः ।
यदृच्छयाऽप्युत्क्रमतोऽभिगीताः स्वरा मतास्ते खलु कूटतानाः ॥

---

## — षाडवशुद्धतानाः —

पञ्चाशतः षट्सहितस्य तासामनन्ततानप्रकृतित्वमुक्तम् ।
आरोहणेचाप्यवरोहणेच स्वरक्रमेणैव हि शुद्धतानाः ॥ ३१६ ॥

चतुर्युताशीतिक शुद्धतान नामानि वक्ष्ये श्रुतिसम्मतानि ।
संस्थासु सप्तस्वपि चादिमोऽग्निष्टोमस्तथैव प्रथमस्तुतानः ॥ ३१७ ॥

द्वितीयतानस्त्वतिपूर्वकोऽग्निष्टोमस्तृतीयः खलु वाजपेयः ।
स्यात्षोडशी तत्र मतश्चतुर्थः स्यात्पञ्चमस्तत्र हि पौण्डरीकः ॥ ३१८ ॥

षष्ठोऽश्वमेधः कथितस्तु तेषु स्यात्सप्तमस्तत्र च राजसूयः ।
षड्जेन हीना इति तेषु षड्जग्रामोद्भवाः षाडवशुद्धतानाः ॥ ३१९ ॥

---

आद्यो भवेत्स्विष्टकृदाह्वयोऽसौ सुवर्णकः स्याद्बहुपूर्वकोऽन्यः ।
स्याद्गोसवस्तत्र मखस्तृतीयो महाव्रताख्यस्तु भवेच्चतुर्थः ॥ ३२० ॥

स्यात्पञ्चमोविश्वजिदाह्वयोऽसौ स्याद्ब्रह्मयज्ञः कथितोऽत्र षष्ठः ।
ततः प्रजापत्यधिदेवताकयागाभिधः सप्तमएषतानः ॥ ३२१ ॥
एते क्रमेणर्षभहीनषड्जग्रामोद्भवाः षाडवशुद्धतानाः ।

---

आद्योमुनीन्द्रैः परिकीर्तितोऽश्वक्रान्तो रथक्रान्त इति द्वितीयः ॥ ३२२ ॥
तृतीयतुर्यावपि विष्णुसूर्यक्रान्ताभिधानौ कथितौ मुनीन्द्रैः ।
ततो गजक्रान्त इति स्मृतोऽन्यः षष्ठस्ततः स्याद्बलभित्समाख्यः ॥
स्यात्सप्तमस्तत्र च नागयज्ञः षाड्जे मताः पञ्चमहीनतानाः ।

---

आद्योमुनीन्द्रैः कथितोऽत्र चातुर्मास्याऽथ संस्थाख्य इति द्वितीयः ॥
शस्त्रोक्थसंज्ञौ तु तृतीयतुर्यौ सौत्रामणिः पञ्चमशुद्धतानः ।
चित्राह्वयस्तत्रच षष्ठतानश्चोद्भित्समाख्यस्तु च सप्तमः स्यात् ॥ ३२५ ॥
निषादहीनाः खलु तत्र षड्जग्रामोद्भवास्तत्र हि कूटतानाः ।

---

सावित्र्यभिख्यः प्रथमोऽर्धसावित्राख्यो द्वितीयस्तु ततस्तृतीयः ॥३२६॥
स्यात्सर्वतोभद्र इति प्रसिद्धस्त्वादित्यकानामयनश्चतुर्थः ।
अन्यो प्ययनो मतः स्यात्स्यात्सर्पकाणामयनस्तु षष्ठः ॥ ३२७ ॥
स्यात्सप्तमस्तत्रच कौण्डपायनाख्यो मुनीन्द्रैः परिकीर्तितोऽयम् ।
ते मध्यमग्रामिकषड्जहीनाः प्रवर्तिताः षाडवशुद्धतानाः ॥ ३२८ ॥

---

आद्योऽग्निचित्तत्र मतो द्वितीयः स्याद्द्वादशाहोऽथतृतीयतुर्यौ ।
उपांशुसोमौ कथितौ परोऽश्वप्रतिग्रहो बर्हिरितीह षष्ठः ॥ ३२९ ॥
स्यात्सप्तमः चाभ्युदयाख्य एते हीनर्षभा मध्यमशुद्धतानाः ।

---

आद्यस्तु सर्वस्वकदक्षिणा स्याद्दीक्षा द्वितीयस्त्वपरोऽपि सोमः ॥ ३३० ॥
समिच्चतुर्थस्त्वथ पञ्चमोऽपि स्वाहाकृतिर्नाम भजेत सोऽयम् ।
तनूनपात्षष्ठ इति प्रसिद्धो गोदोहनाह्वोऽपि च सप्तमः स्यात् ॥ ३३१ ॥
गान्धारहीना इति मध्यमाख्यग्रामोद्भवाः षाडवशुद्धतानाः ।

— औडवशुद्धतानाः —

वक्ष्यामहेऽथौडवशुद्धताननामानि (षाड्जानि) निरूपितानि ॥ ३३२ ॥

आद्यस्त्विडाख्यः पुरुषादिमस्तु मेधो द्वितीयोऽथ मतस्तृतीयः ।
श्येनः चतुर्थोऽपि च वज्रनामा भवेदिषुः पञ्चमतान एषः ॥ ३३३ ॥

षष्ठोऽङ्गिरास्सप्तम एष कङ्क एते हि षड्जेन च पञ्चमेन ।
रिक्ता मुनीन्द्रै रुदितास्तु षड्जग्रामोद्भवा स्त्वौडव शुद्धतानाः ॥३३४॥

ज्योतिर्युतस्तोम इहादिमः स्याद्दर्शो द्वितीयस्त्वपरस्तुतानः ।
स्यात्पौर्णमासस्त्वपरो मतोऽश्वप्रतिग्रहः पञ्चम ऐषतानः ॥ ३३५ ॥

रात्रिस्तु षष्ठोऽपि च सौभरस्तु स्यात्सप्तमश्चेति मताः क्रमेण ।
निषादगान्धारवियुक्तषड्जग्रामोद्भवा स्त्वौडवशुद्धतानाः ॥ ३३६ ॥

सौभाग्यकृत्स्यात्प्रथमोऽथ कारीर्यसौ द्वितीयस्त्वथ शान्तिकृच्च ।
मतस्तृतीयोऽथ तु पुष्टिकृत्स्यात्तुर्यः परः स्यादथ वैनतेयः ॥ ३३७ ॥

उच्चाटनस्तत्र भवेत्तु षष्ठो वशीकृतिः सप्तमइत्युपात्तः ।
एते रिपाभ्यां रहितास्तु षड्जग्रामोद्भवास्त्वौडवशुद्धतानाः ॥ ३३८ ॥

---

त्रैलोक्यपूर्वोऽपि च मोहनः स्यादाद्यो द्वितीयस्त्वथ वीरसंज्ञः ।
कन्दर्पपूर्वो वलशातनः स्यादन्यः चतुर्थस्त्वथ शंखचूडः ॥३३९॥

अन्यो गजच्छायतया प्रसिद्धो रौद्राभिधेयोऽपि च षष्ठतानः ।
विष्णुक्रम .... .... .... .... ॥ ३४० ॥

स्याद्भैरवः प्राथमिको द्वितीयः स्यात्कामदः चावभृथस्तृतीयः ।
अष्टाकपालश्चमसः चतुर्थः स्यात्पञ्चमः स्विष्टकृदाह्वयः च ॥ ३४१ ॥

षष्ठो वषट्कार इति प्रतीतः स्यात्सप्तमो मोक्षदनामधेयः ।
रिक्तानिगाभ्यामिति मध्यमाख्यग्रामोद्भवस्त्वौडव शुद्धतानाः॥ ३४२ ॥

---

नकेवलं मोदकरा जनानां ताना इमेऽभीष्टफलप्रदाः च ।
यद्यन्नामा भवतीह तानस्तत्तत्फलं साधयतीह सम्यक् ॥ ३४३ ॥

गानोपयुक्ताः खलु कूटतानाः संमूर्छनास्ते त्वथ शुद्धतानाः ।
औद्गात्रके कर्मणि चापिगाने ह्यथोपयुक्ता इति शास्त्रसिद्धाः ॥ ३४४ ॥

निरूपिताः सम्यगिति क्रमेण ग्रामौ तथा मूर्छनिकाक्रमाः च ।
ते शुद्धताना अपि कूटतानाः नामानि तेषामपि कीर्तितानि ॥ ३४५ ॥
स्वरस्वरूपं किल सप्रपञ्चं निरूपितं रागविभागसिद्ध्यै ।

## — साधारणविषयः —

प्रयोगभेदाद्विकृतिस्वराणां विचित्रितां गानसमानतां च ॥ ३४६ ॥
रागेषु संदर्शयितुं विविच्य साधारणं साधु निरूपयामः ।
स्वरैश्च जात्याश्च विशेषितं तत्साधारणं तत्र भवेद्द्विरूपम् ॥ ३४७ ॥

## — स्वरसाधारणम् —

समस्तरागैकनिदानभूतः स्वरादिसाधारणमाद्यमुक्तम् ।
चतुष्टयं काकलिकान्तराभ्यां षड्जेन योगादपि मध्यमेन ॥ ३४८ ॥
षड्जश्रुतिद्वन्द्वमवाप्त एषः प्रोक्तो निषादः किल काकलीति ।
स्वरद्वयस्याश्रयणादिसाम्यात्तदेव साधारणमामनन्ति ॥ ३४९ ॥
श्रुतिद्वयं चेदथ मध्यमस्य स्याद्गान्धारकोऽसौ लभते तदानीम् ।
स्यादन्तराख्यः कथितस्तदेव साधारणं द्विस्वरसाम्ययोगात् ॥ ३५० ॥
मन्द्रो निषादस्तु समीपवर्तिमध्यस्थ षड्ज श्रुतिमाश्रयेत ।
त्यक्त्वा निजान्त्यश्रुतिमेष षड्जश्चोपान्त्यभूतां श्रुतिमाश्रयेत ॥ ३५१ ॥
तदन्तिकस्थोप्यृषभस्तदानीं गृह्णाति षड्जश्रुतिमन्तिमां चेत् ।
स्यात्षड्जसाधारणमेतदेव स्वरद्वयस्यापि समानभावात् ॥ ३५२ ॥
गान्धारकश्चेदथ मध्यमस्य त्वाद्यां तथान्त्यामपि पञ्चमश्चेत् ।
श्रुतिं प्रगृह्णाति यदा तदैष साधारणं तत्खलु मध्यमस्य ॥ ३५३ ॥

## — जातिसाधारणम् —

एकस्वरांशासु भवेद्यदेकग्रामासु जातिष्वपि यत्समानम् ।
गानं तदेव प्रवदन्ति जातिसाधारणं गीतिविधानदक्षाः ॥ ३५४ ॥

अन्येऽपि केचित्प्रवदन्ति रागांस्ताञ्जातिसाधारणमित्यभिज्ञाः ।

एवंच साधारणभेद उक्तो निरूपितो यो निगयोः प्रयोगः ॥ ३५५ ॥
विघातकत्वादितरस्वराणां निषादगान्धारकयोः प्रयोगः ।
उच्चार्य षड्जं प्रथमं तु मध्ये तां काकलीं धैवतकं तदन्ते ॥ ३५६ ॥
गायेत्प्रयोगे पुनरीदृशी स्यान्नरक्तिहानि र्न च रागदोषः ।
केचित्तु पक्षान्तरमानयन्ति स्याद्धैवतस्थानगतोऽत्र षड्जः ॥ ३५७ ॥
यद्वा समुच्चार्य तु षड्जमादौ संस्पृश्य तां काकलिकां च मध्ये ।
विहाय षड्जंत्वथ धैवतं च शिष्टस्वरेष्वन्यतमंच गायेत् ॥ ३५८ ॥
इतीरितः काकलिका निषादप्रयोगभेदोऽपि निरूपितोऽथ ।
उच्चार्य तन्मध्यममेव पूर्वं संस्पृश्य गान्धारकभेदरीत्या ॥ ३५९ ॥
गान्धारकस्यान्तर संज्ञकस्य प्रयोग भेदोऽपि निरूपितोऽथ ।
उच्चार्य तन्मध्यममेव पूर्वं संस्पृश्य गान्धारकमन्तराख्यम् ॥ ३६० ॥
गायेत्ततश्चर्षभमेव चान्ते यद्वा पुनर्मध्यममेव गायेत् ।
तदुत्तरेष्वन्यतमस्वरं वा गायेत्तदा नैव च रतिहानिः ॥ ३६१ ॥

## — वर्णाः —

निरूप्य साधारणमत्र सम्यगथोच्यते वर्णगतस्वरूपम् ।
गानक्रिया स्यादथ वर्णसंज्ञा चतुर्विधः सोऽपि निगद्यतेऽत्र ॥ २६२ ॥
स्थायी तथाऽरोह्यवरोहिणौ च तथैव सञ्चार्यपि वर्णभेदाः ।
स्थायी तु गाने कथितो विलम्ब्य विलम्ब्य चैकस्य मुहुः स्वरस्य॥ ३६३॥
यथा त्रिरुक्ते स-स-से ति षड्जे स मध्यमे स्यान्म-म-मेति गाने ।
आरोहणं यत्र भवेत्स्वराणामारोहिवर्णः कथितः स एव ॥ ३६४ ॥
यत्रस्वराणामवरोहणं स्यात्तमेव विद्यादवरोहिवर्णम् ।
आरोहिणश्चाप्यवरोहिणश्च सञ्चारिवर्णस्तु विमिश्रणे स्यात् ॥ ३६५ ॥

## — अलङ्काराः —

वर्णप्रभेदं प्रतिपाद्य चात्रालङ्कारलक्ष्म प्रतिपादयामः ।
ताटंकहारप्रमुखै र्यथाऽलंकारं नितान्तै र्वनिता समिन्धे ॥ ३६६ ॥

उल्लासितान्तैरिह वर्णपंक्तिस्तथा प्रसन्नादिमुखैस्त्रिषष्ट्या ।
तं वर्णसन्दर्भविशेषमेव अलंकारमाहुर्मुनयोऽपि षष्टिम् ॥ ३६७ ॥



## — स्थायिगतालंकाराः —

तस्य त्रिषष्टिः कथिताः प्रभेदास्तत्राऽपि च स्थायिगतान्वदामः ।
आद्यन्तयोः स्यात्स्वर एक एव येषां हि ते स्थायिगता भवन्ति ॥३६८॥
एतादृशाः स्थायिगताः किलालंकाराः पुनः सप्तविधा भवन्ति ।
आद्यः प्रसन्नादिरिह प्रतीतो भवेत्प्रसन्नान्त इति द्वितीयः ॥ ३६९ ॥
ततस्तृतीयः कथितः प्रसन्नाद्यन्ताभिधानश्च ततश्चतुर्थः ।
प्रसन्नमध्यः क्रमरेचितस्तु स्यात्पञ्चमस्तत्रभवेत्तुषष्ठः ॥ ३७० ॥
प्रस्तारनामा प्रथितः प्रसादः स्यात्सप्तमः स्थायिगताः किलैते ।
अत्र ह्यलङ्कारनिरूपणे तु यो मूर्छनायाः प्रथमः स्वरः स्यात् ॥ ३७१ ॥
मन्द्रः स उक्तो द्विगुणः स एव तारोऽथवा स्यादिह पूर्वपूर्वः ।
मन्द्रोऽथ तारस्तु परः परःस्यान्मन्द्रः प्रसन्नश्च मृदुः समर्थः ॥ ३७२ ॥
तारश्च दीप्तश्च तथा समर्थौ मन्द्रं लिखेद्बिन्दु शिरस्कमत्र ।
तथोर्ध्वरेखा शिरसस्तु तारस्वर स्त्रिरुच्चारणतः प्लुतःस्यात् ॥ ३७३ ॥
मन्द्रं द्विरुच्चार्य सकृत्तु तारे गीते प्रसन्नादिमुदाहरन्ति ।
यथा,— स-स-सं ।
तारं द्विरुच्चार्य सकृत्तु मन्द्रे गीते प्रसन्नान्तमुदाहरन्ति ॥ ३७४ ॥
यथा,— सं-सं-स ।
गीत्वा तु मन्द्रं प्रथमं ततस्तु तारं च गायेत्पुनरेव मन्द्रम् ।
यस्मिन्नलङ्कारममुं प्रसन्नाद्यन्तं त्वलङ्कारविदो वदन्ति ॥ ३७५ ॥
यथा,—स-सं-स ।
तारं समुच्चार्य ततस्तु मन्द्रमन्ते च तारं पुनरेव गायेत् ।
प्रसन्नमध्यं तमुदाहरन्ति सर्वेऽप्यलङ्कारविदो मुनीन्द्राः ॥ ३७६ ॥
यथा,—सं-स-सं ।
कालत्रयाढ्यः क्रमरेचितः स्यात्कालस्वरूपं प्रतिपादयामः ।
आद्यन्तयो मूर्छनिकादिमश्चेत्तदन्तराले यदिमध्यमौ स्तः ॥ ३७७ ॥
तन्मध्यगः पञ्चम एष षष्ठः स सप्तमः तत्कथितस्तृतीयः ।

यथा,—स रि सं, स-ग-म-सं, स-प-ध-नि-सं ।

कालत्रयेऽस्मिन्यदि तारकोऽन्ते प्रस्तारमेतं प्रवदन्ति सन्तः ॥ ३७८ ॥

यथा,—स रि सं स ग म सं स-प-ध-नि-सं ।

आद्यः कलानां यदि तारकः स्यादन्त्यश्च मन्द्रस्त्रिसृणाममूषाम् ।

प्रसादनामा स भवेदितीहालङ्कारकाः स्थायिगता निरुक्ताः ॥ ३७९ ॥

यथा,—सं रि स, सं-ग-म-स, सं-प-ध-नि-स ।

— आरोहिगतालङ्काराः —

यथावदारोहिगतानथालङ्कारान्ब्रुवे द्वादशभिन्नभेदान् ।

विस्तीर्णसंज्ञः प्रथमो द्वितीयो निष्कर्षको बिन्दुरत स्तृतीयः ॥ ३८० ॥

अत्युच्चयोऽन्यो हसिताभिधानः स्यात्पञ्चमः प्रेङ्खितकस्तु षष्ठः ।

आक्षिप्तकं सप्तममत्र सन्धिः प्रच्छादनाख्यः पुनरष्टमः स्यात् ॥ ३८१ ॥

उद्गीथनामा नवमस्ततः स्यादुद्वाहिताख्यो दशमस्तु वेद्यः ।

त्रिवर्ण एकादश इत्युदीरितः स्याद्द्वादशो वह्निरिति प्रसिद्धः ॥ ३८२ ॥

एषां पुनर्लक्षणमत्र वक्ष्ये यथाक्रमं गायकबोधहेतोः ।

स्वरं समारभ्य तु मूर्छनाद्यं दीर्घान्स्वरान्यत्र मुहुर्विलम्ब्युः ॥ ३८३ ॥

आरोहयन्गायति चेत्क्रमेण विस्तीर्णनामा कथितः स एषः ।

यथा, सा–री–गा–मा–पा–धा–नि ।

ह्रस्वान्स्वरान्सप्तच यत्र गायेदारुह्यच द्वन्द्वमथैकमेकम् ॥ ३८४ ॥

निष्कर्ष एष त्रिरथो चतुर्वा गाने स्वराणामिह गात्रवर्णः ।

निष्कर्षभेदाः प्रवदन्ति केचिदेतौद्विधोक्तावपि गात्रवर्णौ ॥ ३८५ ॥

यथा, सस रिरि गग मम पप धध निनि ।

ससस रिरिरि गगग ममम पपप धधध निनिनि ।

ससस्स रिरिरिरि गगगग मममम पपपप धधधध निनिनिनि ॥

त्रिरादिमन्द्रंच सकृद्द्वितीयंत्रिर्वै तृतीयंच सकृच्चतुर्थम् ।

त्रिः पञ्चमं षष्ठमथो सकृच्च त्रिः सप्तमं गायतिचेत्सबिन्दुः ॥ ३८७ ॥

यथा, ससस रि गगग म पपप ध निनिनि ।

आद्यं तृतीयं पुरतः प्रगायेत् द्वितीयतुर्यौ च ततस्तृतीयम् ।

सपञ्चमं किञ्च तुरीयषष्ठौ ततः परं पञ्चमसप्तमौ च ॥ ३८८ ॥

षष्ठञ्च गायेत्क्रमशो यदा तमत्युच्चयाख्यं मुनयो वदन्ति ।

यथा, सग-रिम-गप-मध-पनि ।

आद्यं सकृद्द्विश्च ततोद्वितीयं त्रिश्चेत्तृतीयञ्च चतुर्थतुर्यम् ॥ ३८९ ॥

तं पञ्चधा पञ्चममत्र षोढा षष्ठं ततोऽन्त्यं किल सप्तकृत्वः ।

आरुह्य गायेद्धसिताभिधानालङ्कारमेतं प्रवदन्ति सन्तः ॥ ३९० ॥

यथा,

स, रिरि, गगग, मममम, पपपपप, धधधधधध,

निनिनिनिनिनिनि ।

आद्यं द्वितीयौ तदनु द्वितीयतृतीयकौ किञ्च तृतीयतुर्यौ ।

ततस्तुरीयं सहपञ्चमेन समन्वितं पञ्चमतश्च षष्ठः ॥ ३९१ ॥

षष्ठं यदागायति सप्तमेन स प्रेङ्खितस्तं क्रममाहुरेके ।

यथा, सरि रिग गम मप पध धनि ।

आद्यं तृतीयञ्च ततस्तृतीयं सपञ्चमं पञ्चमसप्तमौच ।

आरुह्य गायेत्क्रमशो यदा तमाक्षिप्तसंज्ञं मुनयो वदन्ति ॥ ३९२ ॥

यथा, सग, गप, पनि ।

स्यात्त्रिस्वराद्या तु कला तदन्त्यं स्वरं समारुह्य भवेद्द्वितीया ।

तदन्त्यमारभ्य पराच सन्धिःप्रच्छादनोऽतस्त्रिकलान्वितः स्यात् ॥

यथा, सरिग, गमप, पधनि ।

---

कालत्रये त्रिस्वरभाजि यस्मिन्नावर्त्तित स्त्रिः प्रथमस्वरस्तु ।

संगीयते चेत्क्रमशस्तमेनं मुद्गीथनामानमुशन्ति सन्तः ॥ ३९४ ॥

यथा, ससस सरिग । मम मपध ।

स्वरत्रयी भाजित(त)त्त्रयेऽस्मिन्नावर्त्तितो मध्यगतः स्वरस्त्रिः ।

संगीयते यत्र किल क्रमात्तमुद्वाहिताख्यं प्रवदन्ति सन्तः ॥ ३९५ ॥

यथा, सरिरिरिग, मपपपध ।

अन्त्यस्वरे यत्र कलाद्वये त्रिरावर्त्तितः स्यात्सभवेत्त्रिवर्णः ।

यथा सरिगगग, मपधधध ।

स्वरद्वयं यत्र कलाद्वये त्रिरावर्त्यते वेणिमसुंवदन्ति ॥ ३९६ ॥

यथा, ससस, रिरिरि, गगग, ममम, पपप, धधध,

उद्गीथ उद्वाहितके त्रिवर्णे वेण्यां निषादो नकदापि गेयः ।

उक्तास्तथारोहिणि वर्णकेऽलङ्काराः पुनर्द्वादश ते विविच्य ॥ ३९७ ॥

एते ऽवरोहक्रमतो मताश्चावरोह्यलङ्कारगताः प्रगीताः ।
यथा, विस्तीर्णालङ्कारे, निधपमगरिस ।



## — सञ्चारिगतालङ्काराः —

एवं किलारोह्यवरोहिभेदालङ्कारजालानि निरूपितानि ।
अतः परं गायकबोधहेतोः सञ्चार्यलङ्कारभिदां वदामः ॥ ३९८ ॥

मन्द्रादिराद्यो भवतीह मन्द्रमध्यो द्वितीयस्तु ततस्तृतीयः ।
मन्द्रान्तिमः किञ्च भवेच्चतुर्थः प्रस्तारनामाथ परः प्रसादः ॥ ३९९ ॥

व्यावर्तकोऽन्यत्स्खलितः परःस्यात्ततोऽष्टमोऽसौ परिवर्तसंज्ञः ।
आक्षेपकोऽन्यो दशमस्तु बिन्दुरुद्वाहितोऽन्योऽथ पुनः किलोर्मिः ॥

त्रयोदशश्चापि समस्ततोऽन्यः प्रेङ्खश्च निष्कूजितकःपरः स्यात् ।
श्येनः परः सप्तदशः क्रमःस्यादुद्घाटितोऽष्टादशकस्तथैव ॥ ४०० ॥

स्याद्रञ्जितोऽन्योऽप्यथ सन्निवृत्त प्रवर्त्तको विंशतिमः प्रतीतः ।
वेणुः परः स्याल्ललितस्वरो द्वाविंशोऽथ हुङ्कार इति प्रतीतः ॥ ४०१ ॥

भवेच्चतुर्विंशतमा प्रतीतः सह्लादमानस्त्ववलोकितोऽन्त्यः ।
पञ्चाधिका विंशतिरेवमेते सञ्चार्यलङ्कारतया प्रसिद्धाः ॥ ४०२ ॥

---

अथो यथोद्देशमुदीरितानामाचक्ष्महे लक्षणमप्यमीषाम् ।
आद्यं तृतीयञ्च ततो द्वितीयं गीत्वा कलायां पुनरादिमायाम् ॥ ४०३ ॥

द्वितीयतुर्यौ च ततस्तृतीयं तृतीयकं पञ्चमकं चतुर्थम् ।
तुरीयषष्ठावपि पञ्चमञ्च सपञ्चमं सप्तमतश्च षष्ठम् ॥ ४०४ ॥

एवं भवे यत्रगानकलासु मन्द्रादिरयं प्रदिष्टः ।
यथा, सगरि, रिमग, गपम, मधप, पनिध ।

तृतीयमाद्यञ्च ततो द्वितीयं तुर्यं द्वितीयञ्च ततस्तृतीयम् ।
तं पञ्चमञ्चापि तृतीयतुर्यौ षष्ठं चतुर्थं त्वथ पञ्चमञ्च ॥ ४०५ ॥

तं सप्तमं पञ्चमषष्ठकौच गायेत्कलास्वासु स मन्द्र मध्यः ।

यथा, गसरि, मरिग, पगम, धमप, निपध ।

गायेद्द्वितीयं तु ततस्तृतीयमाद्यं ततःतत्र तृतीयतुर्यौ ॥ ४०६ ॥

अथ द्वितीयञ्च ततश्चतुर्थं तं पञ्चमञ्चापि पुनस्तृतीयम् ।
तं पञ्चमं षष्ठमथो चतुर्थं षष्ठं तथा सप्तमपञ्चमौ च ॥ ४०७ ॥

एवं विधं यत्र कलासु गानं भवेत्स मन्द्रान्त इति प्रतीतः ।
यथा, रिगस, गमरि, मपग, पधम, धनिप ।

आद्यं तृतीयञ्च ततो द्वितीयं तुर्यौ तृतीयं त्वथ पञ्चमञ्च ।
चतुर्थषष्ठं त्वथ पञ्चमञ्च तं सप्तमं गायति चेत्कलासु ॥ ४०८ ॥

स्वरद्वयेनैव युतासु तासु प्रस्तारनामा प्रथितः स एषः ।
यथा, सग, रिम, गप, मध, पनि ।

आद्यद्वितीयौ पुनरेव चान्त्यं ततो द्वितीयं च पुनस्तृतीयः ॥ ४०९ ॥

पुनर्द्वितीयञ्च तृतीयतुर्यौ पुनस्तृतीयञ्च ततश्चतुर्थम् ।
तं पञ्चमं प्राप्य पुनश्चतुर्थं तं पञ्चमं षष्ठकपञ्चमौ च ॥ ४१० ॥

षष्ठं पुनः सप्तमषष्ठकौ च गायेत्क्रमाद्यत्र स तु प्रसादः ।
यथा, सरिस, रिगरि, गमग, मपम, पधप, धनिध ॥ ४११ ॥

चतुःस्वरास्तत्र कलामिदध्याद्गत्वा तृतीयं तदनुद्वितीयात् ।
तुर्यं ततश्चादिममेव गायेत्ततो द्वितीयाच्च पुनश्चतुर्थम् ॥ ४१२ ॥

तृतीयकात्पञ्चमकं पुनश्च गायेद्द्वितीयं तु कलाद्वितीया ।
अथोतृतीयादपि पञ्चमञ्च पुनश्चतुर्थादपि षष्ठमेव ॥ ४१३ ॥

पुनस्तृतीयं तु कलातृतीया तुर्यं च षष्ठं त्वथ पञ्चमाच्च ।
तं सप्तमञ्चापि पुनश्चतुर्थं व्यावर्तसंज्ञं तमुदाहरन्ति ॥ ४१४ ॥

यथा, सगरिमस, रिमगपरि, गपमधग, मधपनिम ।

आद्यं तृतीयंतदनु द्वितीयं द्विस्तुर्यकं किञ्च ततो द्वितीयम् ।
तृतीयमाद्यञ्च पुनश्च गायेदष्टस्वरासौ प्रथमाकलेष्टा ॥ ४१५ ॥

द्वितीयतुर्यौ तु ततस्तृतीयं तं पञ्चमं द्विश्च तृतीयतुर्यौ ।
गायेद्द्वितीयञ्च यदा द्वितीया कलेयमष्टस्वरमेलनेन ॥ ४१६ ॥

तृतीयमादावपि पञ्चमञ्च तुर्यं पुनः षष्ठमनन्तरं द्विः ।
तुर्यं पुनः पञ्चमकं तृतीयं भवेत्कलाष्टस्वरयुक्तृतीयम् ॥ ४१७ ॥

तुरीयषष्ठावथ पञ्चमञ्च द्विसप्तमं पञ्चमषष्ठतुर्यान् ।
गायेद्यदेयंतु कला चतुर्थी तं पञ्चमं सप्तमषष्ठकौ च ॥ ४१८ ॥

द्विरादिमं षष्ठकसप्तमौच तं पञ्चमं गायति सा कलान्त्या ।
एवं विधाः पञ्चकलाश्च यत्रालङ्कार एष स्खलिताभिधानः ॥ ४१९ ॥

यथा, सगरिम मरिगस रिगमप पगमरि गपमध धमपग
मधपनि निपधम पनिधस सधनिप ।

आद्यं तृतीयञ्च ततश्चतुर्थं गायेद्यदासा प्रथमा कलास्यात् ।
द्वितीयतुर्यावथ पञ्चमञ्च गायेद्द्वितीया तु मता कलेयम् ॥ ४२० ॥

तृतीयमादावथ पञ्चमञ्च षष्ठञ्च गायेत्तु कलातृतीया ।
तौ तुर्यषष्ठावथ सप्तमञ्च गायेद्यदासा त्रिकला चतुर्थी ॥ ४२१ ॥

तं पञ्चमं सप्तममादिमञ्च स्वरं यदा गायति पञ्चमीयम् ।
एवं कलाः पञ्च भवन्ति यत्रालङ्कार उक्तः परिवर्त एषः ॥ ४२२ ॥

यथा, सगम, रिमप, गपध, मधनि, पनिस ।

आद्यस्वराणां त्रितयं कलाद्या स्वरेषु सप्तस्वपिच क्रमेण ।
द्वितीयमारभ्य भवेत्तृतीया तृतीयमारभ्य ततस्तृतीया ॥ ४२३ ॥
चतुर्थमारभ्य तुर्या स्यात्पञ्चमाद्या किल पञ्चमीसा ।
षष्ठं समारभ्य तथादिमान्ता षष्ठीकलेयं गदिता मुनीन्द्रैः ॥ ४२४ ॥
तास्त्रिस्वरा यत्रकलाः षडेवाक्षेपाभिधानं तमुदीरयन्ति ।

यथा, सरिग, रिगम, गमप, मपध, पधनि, धनिस ।

गीत्वा त्रिराद्यं तदनु द्वितीयं स्पृष्ट्वाग्निवद्गायति चादिमञ्चेत्॥ ४२५ ॥
साद्या कला त्रिस्तदनु द्वितीयं स्पृष्ट्वातृतीयं तु पुनर्द्वितीयम् ।
गायेद्यदा साहि कलाद्वितीया गायेत्तृतीयं त्रिरथो चतुर्थम् ॥ ४२६ ॥
स्पृष्ट्वा पुनर्गायति चेत्तृतीयमेषा तृतीयातु कलाप्रदिष्टा ।
त्रिस्तुर्यमुद्गायति पञ्चमन्तु स्पृष्ट्वाथतुर्यं यदि सा चतुर्थी ॥ ४२७ ॥
त्रिः पञ्चमं गायति षष्ठकन्तु स्पृष्ट्वा पुनः पञ्चममेव सान्या ।
त्रिः षष्ठमादावथ सप्तमञ्च स्पृष्ट्वा पुनर्गायति यत्र षष्ठम् ॥ ४२८ ॥
षष्ठी कलास्यादथ सप्तमं त्रिराद्यन्तु संस्पृश्य तु सप्तमञ्च ।
पुनश्च गायेद्यदि सप्तमी सा प्रोक्ता कला यत्र हि बिन्दुरेषः ॥ ४२९ ॥

यथा, ससससरि रिरिरि रिग, गगगं गम, ममम मप,

पपप पध, धधध धनि, निनिनि निस ।

गीत्वा स्वरांस्त्रीन्क्रमतोऽवरुह्य द्वितीयकं गायति चेत्कलाद्या ।

अथ द्वितीयं च तृतीयतुर्यौ गायेद्द्वितीयं यदिसाद्वितीया ॥ ४३० ॥

तृतीयतुर्यावथ पञ्चमञ्च तुर्यं पुनर्गायति सा चतुर्थी ।

तं पञ्चमं षष्ठकसप्तमौच षष्ठं यदा गायति पञ्चमीयम् ॥ ४३१ ॥

षष्ठं यदा सप्तममादिमञ्चेत्तं सप्तमं गायति सात्र षष्ठी ।

ताः षष्ठकला यत्र भवन्ति सोऽयमुद्वाहिताख्यः कथितो मुनीन्द्रैः ॥

यथा, सरिगरि, रिगमग, गमपम , मपधप, पधनिध, धनिसनि ।



॥ रघुनाथभूपविरचिता ॥

॥ संगीतसुधा ॥

(*Continued from page 210*).



आद्यश्चतुर्थस्तु यदाभवेत्त्रिराद्यः सकृत्किञ्च सकृच्चतुर्थः ।
साद्याकलाः स्युस्तदनुद्वितीया त्रिःपञ्चमाः किञ्च सकृद्द्वितीयः॥ ४३३॥

स्यात्पञ्चमश्चापि सकृद्द्वितीया कला तृतीया त्रिरपीह षष्ठः ।
तृतीयषष्ठौ च सकृत्तृतीया कला चतुर्थादपि सप्तमस्त्रिः ॥ ४३४ ॥

सकृन्मतौ तुर्यकसप्तमौ चेदेषा चतुर्थी तु कलोपदिष्टा ।
स्यात्पञ्चमोऽत्र प्रथमस्वरश्चेत्तौ पञ्चमाद्यावथ पञ्चमीयम् ॥ ४३५ ॥

एताः कलाः पञ्चभवन्ति यत्र तमूर्मिनामा तमुदीरयन्ति ।

समममसम । रिपपपरिप । गधधधगध ।

मनिनिनिमनि । पससससपस ॥

स्वरेषु सप्तस्वपि चाद्यमादावरभ्य गायेच्चतुरः स्वरांश्चेत् ।
आरोहणेनाप्यवरोहणेन साष्टस्वराः प्राथमिकी कलास्यात् ॥ ४३६ ॥

द्वितीयमारभ्य तथाद्वितीया तृतीयमारभ्य तथा तृतीया ।
चतुर्थमारभ्य तथा चतुर्थी स्यात्पञ्चमाद्यापि च पञ्चमीसा ॥ ४३७ ॥

एताः कलाः पञ्चभवन्ति यत्र त्रयोदशः स्यात्तु समाभिधानः ।

सरिगम मगरिस । रिगमप पमगरि ।

गमपध धपमग । मपधनि निधपम ।

पधनिस सनिधप ।

क्रमेण च व्युत्क्रमतो यदाद्याद्वितीयकौ गायति सा कलाद्या ।
तथा द्वितीयञ्च तृतीयमेवं चतुःस्वरा सा तु कला द्वितीया ॥ ४३८ ॥

तृतीयतुर्यौ यदि चैवमेव चतुःस्वरा सा तु कला तृतीया ।
तृतीयतुर्यौ यदि चैवमेव तदा भवेत् सा तु कला चतुर्थी ॥ ४३९ ॥

तुर्यं तथा पञ्चममेवमेव चतुःस्वरा पञ्चमिकाकलेयम् ।

तं पञ्चमं षष्ठमथैवमेव चतुःस्वरास्तत्र कला हि षष्ठी ।
षष्ठं यदा सप्तममेवमेवं चतुःस्वरा सप्तमिका कलेयम् ॥ ४४० ॥

एताः कलाः सप्तभवन्ति यत्र प्रेङ्खाभिधं तं मुनयो वदन्ति ।
सरिरिस, रिगगरि; गममग, मपपम, पधधप, धनिनिस,
निससनि ।

भेदस्तु तारः प्रथमो द्वितीयं पुनश्च मन्द्रः प्रथमस्तृतीयः ।
पुनश्च तारः प्रथमो यदिस्यात् पञ्चस्वरास्याद्यकला प्रतीता ॥ ४४१ ॥

तारो द्वितीयश्च ततस्तृतीयो मन्द्रो द्वितीयश्च ततश्चतुर्थः ।
तारो द्वितीयश्च पुनर्यदिस्यात्पञ्चस्वरा सा तु कला द्वितीया ॥ ४४२ ॥

तारस्तृतीयोऽथ भवेच्चतुर्थो मन्द्रस्तृतीयोऽप्यथ पञ्चमश्च ।
तारस्तृतीयः पुनरेव यत्र पञ्चस्वरा सा तु कला तृतीया ॥ ४४३ ॥

तारश्चतुर्थः किल पञ्चमः स्यान्मन्द्रश्चतुर्थः पुनरेव षष्ठः ।
तारश्चतुर्थस्तु पुनर्भवेच्चेत्पञ्चस्वरा सा तु कला चतुर्थी ।
तारः पुनः पञ्चमकोऽथ षष्ठस्तारः पुनः पञ्चमकस्ततोऽन्त्यः ॥ ४४४ ॥

तारः पुनः पञ्चमको यदिस्यात्पञ्चस्वरा पञ्चमिका कलेयम् ।
तारस्तु षष्ठोऽथ च सप्तमश्च तारस्तु षष्ठः पुनरादिमश्च ॥ ४४५ ॥

तारस्तु षष्ठः पुनरेवचेत्स्यात् पञ्चस्वरा सप्तमिका कलेयम् ।
एताः कलाः सप्तभवन्ति यत्र निष्कूजितं तन्निगदन्ति सन्तः ॥ ४४६ ॥

सरि सगस, रिग रिमरि, गम गपग, मप मधम,
पध पनिप, धनि धसध ।

स्वरांश्च गीत्वा चतुरःक्रमात्तत्संवादिनौ द्वावपि यत्र गायेत् ।
आद्या कलेयं कथिता द्वितीयमारभ्य गायेच्चतुरः स्वरांश्चेत् ।
संवादिनौ द्वावपि सा द्वितीया तृतीयमारभ्य चतुःस्वरीं चेत् ॥ ४४७ ॥

संवादिनौ द्वावपि चेत्तृतीया चतुर्थमारभ्य चतुःस्वरीं च ।
संवादिनौ द्वावपि चेच्चतुर्थी श्येनस्त्विमा यत्र कलाश्चतस्रः ॥ ४४८ ॥

यथा, सरिगम सप, रिगमप रिध, गमपध गनि, मपधनि मस ।
आद्यात्स्वरा द्विस्वरिकादिमात्र स्वरा द्वितीयाथ चतुःस्वरान्या ॥
कालत्रयेणान्तिमका कलान्या तथाद्वितीयाच्च कलात्रयेण ॥ ४४९ ॥

महाकला तत्र भवेद्द्वितीया तृतीयमारभ्य कला त्रयेण ।
महाकला तत्र भवेत्तृतीया चतुर्थमारभ्य कला त्रयेण ॥ ४५० ॥
महाकला तत्र भवेच्चतुर्थी स्यात्पञ्चमात्तत्र कला त्रयेण ।
महाकला पञ्चमिकातु यत्र महाकलाः पञ्चभवेत्क्रमोऽयम् ॥ ४५१ ॥

यथा, सरि सरिग सरिगम । रिग रिगम रिगमप । गम गमप गमपध । मप मपध मपधनि । पध पधनि पधनिस ।

आद्यात्स्वराद्द्वन्द्वमथ प्रयोगाच्चतुःस्वरीं पञ्चमतोऽवरुह्य ।
गायेद्यदा साद्यकला द्वितीयात्स्वरद्वयं प्राप्य ततस्तु षष्ठात् ॥ ४५२ ॥
यदावरोह्य कलाद्वितीय तृतीयमारभ्य तथा स्वरौ द्वौ ।
गीत्वा यदा सप्तमतोऽवरोहे कला तृतीया कथिता किलैषा ॥ ४५३ ॥
चतुर्थमारभ्य यदास्वरौ द्वौ गीत्वा तथाद्यादवरुह्य गायेत् ।
तुर्या कलेयं कथिता कलाभिरेताभिरुद्घाटितमीरयन्ति ॥ ४५४ ॥

यथा, सरि पमगरि, रिग धपमग, गम निधपम, मपं सनिधप ।

मन्द्रं यदाद्यञ्च ततस्तृतीयं ततो द्वितीयं द्विरिमांश्चगायेत् ।
आद्यं पुनर्मन्द्रमियं कलाद्याः मन्द्रद्वितीयश्च ततस्तृतीयम् ॥ ४५५ ॥
ततस्तृतीयं द्विरिमांश्च गायेन्मन्द्र द्वितीयं च कला द्वितीया ।
मन्द्रात्तृतीयादथ पञ्चमञ्च पुनस्तुरीयं द्विरिमांश्च गायेत् ॥ ४५६ ॥
मन्द्रतृतीयश्च कला तृतीया तुरीयकं षष्टकपञ्चमौ च ।
गायेद्द्विरेतानथ मन्द्रतुर्यं कला तृतीया कथितेयमार्यैः ।
मन्द्राद्यथा पञ्चमगात्तथान्त्यं षष्ठं द्विरेतान्मृदुपञ्चमञ्च ॥ ४५७ ॥
गायेत्कला सा किल पञ्चमीस्यात्षष्ठं मृदोरादिमसप्तमौ च ।
गायेद्द्विरेतानथ मन्द्रषष्ठं षष्ठीकलारञ्जित एषताभिः ॥ ४५८ ॥

यथा, सगरि सगरिस, रिमग रिमगरि, गपम गपमग, मधप मधपम, पनिध पनिधप, धसनि धसनिध ।

आद्याद्यदा पञ्चममत्र गायेत्तुर्यात्स्वरात् त्रीन्क्रमतोऽवरोहेत् ।
साद्या कलास्यात्तदनुद्वितीयात् षष्ठं तु गायेदथ पञ्चमात् त्रीन् ॥ ४५९॥
यथाऽवरोहे तु कला द्वितीया तृतीयमारभ्य यदा किलान्त्यम् ।
षष्ठाद्यदा त्रीनवरुह्य गायेत्तदा तृतीया तु कलोपदिष्टा ॥ ४६० ॥

तुर्यं किलाद्यं किलसप्तमादीन् स्वरान्यदा त्रीनवरुह्यगायेत् ।
तुर्या कला सा किल सन्निवृत्ता प्रवर्तनामात्र कलाभिराभिः ॥ ४६१ ॥

यथा, सपमगरि, रिधपमग, गनिधपम, मसनिधप ।

गायेद्द्विराद्यं तदनु द्वितीयं तुर्यं तृतीयं च तदा कलाद्या ।
गायेद्द्वितीयं द्विरथो तृतीयं तं पञ्चमं तुर्यमियं द्वितीया ॥ ४६२ ॥

गायेद्द्वितीयं द्विरतः चतुर्थं षष्ठं पुनः पञ्चमकं तृतीया ।
तुर्यं द्विरादावथ पञ्चमान्त्यं षष्ठं च गायेद्यदि सा चतुर्थी ॥ ४६३ ॥

द्विपञ्चमं षष्ठमथादिमान्त्यौ गायेद्यदा पञ्चमिका कलेयम् ।
पञ्चस्वराभिस्तु कलाभिराभिः परिष्कृतो वेणुरिहैकविंशः ॥ ४६४ ॥

यथा, ससरिमग, रिरिगपम, गगमधप, ममपनिध, पपधसनि ॥

गीत्वादिमौ द्वौच ततःचतुर्थं द्वितीययाद्यं च यदाप्रगायेत् ।
आद्या कलेयं तदनुद्वितीय तृतीयकौ पञ्चमकं तृतीयम् ॥ ४६५ ॥

गायेद्द्वितीयं च कला द्वितीया तृतीयतुर्यावथ षष्ठतुर्यौ ।
गायेत्तृतीयं च कला तृतीया तुर्यं तथा पञ्चमसप्तमौ च ॥ ४६६ ॥

तं पञ्चमं तुर्यमपि प्रगायेत्तुर्या कलेयं कथिता मुनीन्द्रैः ।
तं पञ्चमं षष्ठमथादिमं च षष्ठं तथा पञ्चममेव गायेत् ॥ ४६७ ॥

सापञ्चमीस्यात्तु कलाभिराभि र्द्वाविंशकोऽयं ललितस्वराख्यः ।

यथा, सरिमरिस, रिगपगरि, गमधमग, मपनिपम, पधसधप ॥

आद्यं द्वितीयं च पुनस्तमाद्यं गायेद्यदा सा प्रथमा कलास्यात् ।
गीत्वा स्वरांस्त्रीन् क्रमशो द्वितीयमाद्यं च गायेद्यदि सा द्वितीया ॥४६८॥

गायेद्यदाद्यांश्चतुरस्तृतीयाद्यथावरोहे कथिता तृतीया ।
क्रमात्स्वरान्पञ्च यदावरोहेद्यारभ्य तुर्यादवरोहयेच्च ॥ ४६९ ॥

कलाचतुर्थीयमुदीरिता स्यादाद्याद्यदारोहणमाच षष्ठात् ।
भवेत्तथा पञ्चमतोऽवरोहः सा पञ्चमी सद्भिरुदीरिता स्यात् ॥ ४७० ॥

आद्याद्यदारोहणमान्तिमंस्यात्षष्ठं समारभ्य तथावरोहः ।
षष्ठी कलाद्य पुनरादिमान्तमारोहणं सप्तमतोऽवरोहः ॥ ४७१ ॥

स्यात्सप्तमी ताभिरमुं कलाभि र्हुङ्कारनामानमुशन्ति सन्तः ।

यथा, सरिस, सरिगरिस, सरिगमगरिस, सरिगमपमगरिस,

सरिगमपधपमगरिस, सरिगमपधनिधपमगरिस,
सरिगमपधनिसनिधपमगरिस ॥

अत्रादिमं मन्द्रमतस्तृतीयं द्वितीयमाद्यं पुनरेव मन्द्रम् ।
आद्या कलेयं हि मृदुद्वितीयं तुर्यं तृतीयं च मृदुद्वितीयम् ॥ ४७२ ॥

गायेद्यदा सा हि कला द्वितीया मन्द्रं तृतीयं त्वथ पञ्चमं च ।
तुर्यं तथा मन्द्रतृतीयमन्ते गायेद्यदा सा हि कला तृतीया ॥ ४७३ ॥

मन्द्रं चतुर्थं त्वथ षष्ठकंच तं पञ्चमं मन्द्रतुरीयमन्ते ।
गायेद्यदा सा तु कला चतुर्थी तं पञ्चमं मन्द्रमथान्तिमं च ॥ ४७४ ॥

षष्ठं तथा पञ्चममेव मन्द्रं गायेद्यदा पञ्चमिका कलेयम् ।
मन्द्रं च षष्ठं पुनरादिमान्त्यौ षष्ठं च मन्द्रं पुनरेवगायेत् ॥ ४७५ ॥

षष्ठी कलास्याच्च कलाभिराभिस्तं ह्रादमानं निगदन्ति सन्तः ।

यथा, सगरिस, रिमगरि, गपमग, मधपम, पनिधप, धसनिध ॥

आद्यं तृतीयं च ततस्तुरीयं तुर्यं द्वितीयं पुनरादिमं च ।
गायेद्यदा सैव कलादिमास्याद् द्वितीयतुर्यावथ पञ्चमं च ॥ ४७६ ॥

तं पञ्चमं किञ्च तृतीयमेव गायेद्द्वितीयं च यदि द्वितीया ।
तृतीयमादावथ पञ्चमंच षष्ठं पुनः षष्ठतुरीयकौ च ॥ ४७७ ॥

गायेत्तृतीयं च यदा तृतीया चतुर्थमादावथ षष्ठमन्त्यम् ।
अन्त्यं पुनः पञ्चमतुर्यकौ च गायेद्यदा सा हि कला चतुर्थी ॥ ४७८ ॥

तं पञ्चमं सप्तममाद्यमाद्यं षष्ठं पुनः पञ्चममेव गायेत् ।
सा पञ्चमीस्यादखिलाभिराभिर्युक्तः कलाभिस्त्ववलोकितः स्यात् ॥

यथा, सगममरिस, रिमपपगरि, गपधधमग, मधनिनिपम,
पनिससधप ॥

आरोहमार्गेण निरूपितोऽयं सञ्चार्यलङ्कारगणः समस्तम् ।
तथाऽवरोहेण च दर्शनीयः सर्वेऽप्ययं बुद्धिमदग्रगण्यैः ॥ ४८० ॥

---

## — प्रसिद्धालङ्काराः —

सप्तापि संगीतविदां मतेऽलङ्कारान्प्रसिद्धानितरान्वदामः ।
आद्यो भवेत्तेषु च तारमन्द्रः प्रसन्नइत्याह्वयतः प्रतीतः ॥ ४८१ ॥

विदुर्द्वितीयं किल.मन्द्रतारं प्रसन्नमावर्तकमन्यमाहुः ।
तुरीयमाहुः किल संप्रदानः स्यात्पञ्चमोऽयं विधुताभिधानः ॥ ४८२ ॥
षष्ठं च विद्यादुपलोलकाख्यमुल्लासितं सप्तममामनन्ति ।
साधारणं लक्षणमेतदेषां स्वरान्द्वितीय प्रमुखानुपेत्य ॥ ४८३ ॥
प्रवर्तमानासु कलासु तासु नपूर्वपूर्वग्रहणं कदाचित् ।

---

— तारमन्द्रप्रसन्नः —

तारादथाद्यान्मृदुकाष्टमान्तमारुह्य गायेत्पुनरादिमं चेत् ॥ ४८४ ॥
आद्या कलेयं तदनुद्वितीयं तारं समारभ्य ततोऽष्टमान्तम् ।
आरुह्यगायेत्तदनु द्वितीयं कला द्वितीया कथितेयमार्यैः ॥ ४८५ ॥
तारात्तृतीया मृदुताष्टमान्तमारुह्य गायेत्तु पुनस्तृतीयम् ।
कला तृतीया किल तारतुर्यादारुह्य सप्तापि यदाष्टमान्तम् ॥ ४८६ ॥
गायेत्तुरीयंच तदा तुरीया तारात्ततः पञ्चमतोऽष्टमान्तम् ।
आरुह्यचेत्पञ्चममेव गायेत्सा पञ्चमीस्यादथ तारषष्ठात् ॥ ४८७ ॥
आरुह्य सप्त(भि) यदाष्टं गायेच्चषष्ठं यदि सैव षष्ठी ।
आरभ्यचेत्सप्तममष्टमान्तमारुह्य गायेदपि सप्तमं च ॥ ४८८ ॥
सा सप्तमीस्यादिह तारमन्द्र प्रसन्ननामा हि कलाभिराभिः ॥ ४८९ ॥

यथा, सरिगम पधनिसस, रिगमपधनिसरिरि,
गमपधनिसरिगग, मपधनिसरिगमम,
पधनिसरिगमपप, धनिसरिगमपधध,
निसरिगमपधनिनि ॥

---

— मन्द्रतारप्रसन्नः —

आद्यात्तुमन्द्रात्पुनरष्टमंतु गीत्वावरोहेण पुनश्चगायेत् ।
सैषा द्वितीयाच्च मृदोस्तृतीयाद्गीत्वाष्टमं सप्तमतोऽवरोहेत् ॥ ४९० ॥
सैषा चतुर्थी तु मृदोश्चतुर्थाद्गीत्वाष्टमं सप्तमतोऽवरोहेत् ।
सा पञ्चमी पञ्चमतस्तु मन्द्राद्गीत्वाष्टमं सप्तमतोऽवरोहेत् ॥ ४९१ ॥
षष्ठी कलास्यादथ मन्द्रषष्ठाद्गीत्वाष्टमं सप्तमतोऽवरोहेत् ।
.... .... .... .... .... सा सप्तमीति प्रथिता कलेयम् ॥ ४९२ ॥

एवं कलाः सप्तभवन्ति मन्द्रतारप्रसन्नस्तु कलाभिराभिः ॥

यथा, ससंनिधपमगरिस, रिरिंसंनिधपमगरि, गगंरिंसंनिधप-
मग, ममंगंरिंसंनिधपम, पपंमंगंरिंसंनिधप, धधंपंमंगंरिं-
संनिध, निनिंधंपंमंगंरिंसंनि ॥

---

## — आवर्तकः —

द्विरादिमं द्विश्च ततो द्वितीयं द्विरादिमं किञ्च सकृद्द्वितीयम् ।
आद्यं सकृद्गायति सा कलाद्या द्विर्द्विर्द्वितीयं च तृतीयकं च ॥ ४९३ ॥

द्विस्तु द्वितीयंच सकृत्तृतीयं द्वितीयकं गायति चेत् द्वितीया ।
तृतीयतुर्यौ च ततस्तृतीयं द्विर्द्विस्सकृत्तुर्यतृतीयकौ च ॥ ४९४ ॥

गायेद्यदा सात्र कला तृतीया तुर्यं ततः पञ्चममेव तुर्यम् ।
द्विस्त्रिस्सकृत्पञ्चमतुर्यकौ च गायेद्यदा सा तु कला चतुर्थी ॥ ४९५ ॥

तं पञ्चमं षष्ठकपञ्चमौ च द्विस्त्रिः सकृत्षष्ठकपञ्चमौच ।
गायेद्यदा पञ्चमिका कलेयं षष्ठं पुनः सप्तमषष्ठकौ च ॥ ४९६ ॥

द्विर्द्विः सकृत्सप्तममेव षष्ठं गायेद्यदा सैव कलेह षष्ठी ।
तं सप्तमं चादिम सप्तमौ च द्विस्त्रिस्सकृत्सप्तममादिमं च ॥ ४९७ ॥

सा सप्तमी सप्तकलाभिराभिरावर्तकाख्यो गदितस्तृतीयः ।

यथा, ससरिरिससरिस, रिरिगगरिगरि, गगममगगमग,
ममपपममपम, पपधधपपधप, धधनिनिधधनिध,
निनिससनिनिसनि ॥

---

## — सम्प्रदानः —

आद्यो द्वितीयः पुनरेवचाद्यो द्विर्द्विर्यदिस्यात्प्रथमा कलेयम् ।
द्विर्द्विर्द्वितीयश्च तृतीयकश्च पुनर्द्वितीयो यदि सा द्वितीया ॥ ४९८ ॥

द्विर्द्विस्तृतीयश्च तुरीयकश्च पुनस्तृतीयो यदि सा तृतीया ।
द्विर्द्विस्तुरीयो यदि पञ्चमश्च पुनस्तुरीयो यदि सा तुरीया ॥ ४९९ ॥

द्विर्द्विस्तथा पञ्चमषष्ठकौच सपञ्चमश्चेदिह पञ्चमीयम् ।
षष्ठस्तथा सप्तम षष्ठकौच द्विर्द्विर्यदा सा च कला तु षष्ठी ॥ ५०० ॥

स सप्तमश्चादिम सप्तमौ च द्विर्द्विर्यदा सप्तमिका कलेयम् ।
कलाभिराभिः खलु षट्स्वराभिः समन्वितः सिध्यति सम्प्रदानः ॥
यथा, ससरिरिसस, रिरिगगरिरि, गगममगग, ममपपमम,
पपधधपप, धधनिनिधध, निनिससनिनि ॥

---

## — विधृतः —

गायेदुभावाद्य तृतीयकौ द्विःसंमेलितौ चेत्प्रथमाकलेयम् ।
द्वितीयतुर्यौ मिलितौ यदाद्विर्गायेत्तदा सैव कला द्वितीया ॥ ५०२ ॥
युतं तृतीयं किल पञ्चमं द्विरुभौ यदा गायति सा तृतीया ।
तुरीयषष्ठौ मिलितौ यदाद्विर्गायेत्तदा सैव कला तुरीया ॥ ५०३ ॥
तं पञ्चमं सप्तममप्युभौ द्विर्युतौ यदा गायति पञ्चमीयम् ।
चतुःस्वराभिः कथिताभिराभिः समन्वितः स्याद्विधृताभिधानः ॥५०४॥
यथा, सग सग, रिम रिम, गप गप, मध मध, पनि पनि ।

---

## — उपलोलकः —

अथ द्वितीयौ मिलितौ तृतीयद्वितीयकौ द्विर्द्वितयं कलाद्या ।
युक्तौ द्वितीयश्च तृतीयकश्च द्विस्संयुतौ तुर्यतृतीयकौ द्विः ॥ ५०५ ॥
यदा द्वितीया तु कला तृतीयतुर्यौ युतौ पञ्चमतुर्यकौ च ।
द्विर्द्विर्यदा सैव कला तृतीया तुर्यो यदा पञ्चमकौ युतौ द्विः ॥ ५०६ ॥
द्विश्चान्वितौ षष्ठकपञ्चमौ च कलाचतुर्थीयमुदीरितास्यात् ।
यदायुतौ पञ्चमषष्ठकौ द्विस्तथायुतौ सप्तमषष्ठकौ द्विः ॥ ५०७ ॥
सा पञ्चमी सप्तमषष्ठकौ द्विर्द्विश्चान्विता चादिमसप्तमौ चेत् ।
षष्ठीकलेयं कथिताभिराभिस्समन्वितं स्यादुपलोलकाख्यः ॥ ५०८ ॥
यथा, सरिसरिगरिगरि, गमगमपमपम; मपमपधपधप,
पधपधनिधनिध, धनिधनिसनिसनि ।

---

# ॥ सङ्गीतसुधा ॥

## — उल्लासितः —

द्विरादिमो यत्र सकृत् तृतीयादिमो तृतीयश्च कलादिमा सा ।
द्विः स्याद्द्वितीयोऽथ सकृत्तुरीय द्वितीयतुर्या यदि सा द्वितीया॥५०९॥

स्याच्चेत्तृतीयो ऽप्यथ पञ्चमश्च तृतीयका पञ्चमकः सकृत्त ।
तथा तृतीयोऽथ तुरीयको द्विर्गेयः सकृत्पष्ठतुरीय पष्ठाः ॥ ५१० ॥

तुर्याकला द्विर्यदि पञ्चमः स्यात्ससप्तमः पञ्चम सप्तमो च ।
सकृद्यदा पञ्चमिका कलेय मुल्लासिताख्यः कथिताभिगाभिः ॥ ५११ ॥

यथा, ससगसग, रिरिमरिम, गगपगप
ममधमध, पपनिपनि ।

त्रिषष्टि सङ्ख्याः कथिताः किलालङ्कारा मता याष्टिककोहलाद्यैः ।
अन्येऽप्यनन्ताः पुनरेवमूह्या नोक्तामया विस्तरभीरुणा ते ॥ ५१२ ॥

ज्ञानं स्वराणामथ रागलाभः स्थाय्यादि वर्णाङ्गविचित्रता च ।
प्रयोजनान्येवमुदीरितानि पूर्वैरलङ्कारनिरूपणस्य ॥ ५१३ ॥

---

## — जाति निरूपणम् —

कृतेऽप्यलङ्कारनिरूपणेऽथालङ्कार्यजातीश्च निरूपयामः ।
यस्मादमूभ्यः प्रभवन्ति रागास्तस्मादिमा जातय इत्युपात्ताः ॥ ५१४ ॥

शुद्धास्तु षाड्जी पुनरार्षभी च गान्धारिका माध्यमिका ततश्च ।
स्यात्पञ्चमी धैवतिका ततस्तु नैषादिका सप्त च जातयः स्युः ॥ ५१५ ॥

साधारणं लक्षणमत्र शुद्धजातिप्रपञ्चस्य निरूपयामः ।
यस्यास्तु जाते र्व्रजति ग्रहोंऽशो न्यासोऽप्युपन्यास इति प्रभेदम् ॥
नाम स्वरः सा किल शुद्धजातिर्वक्ष्यामहे वैकृतजातिलक्ष्म ।
न्यासे स्थिते तत्परलक्ष्महीना प्रकीर्तिता सा विकृता तु जातिः ॥५१७॥

संपूर्णता संमिलितग्रहांशापन्यासकेष्वेकविवर्जनेन ।
ता जातयः स्युर्विकृताश्चतस्र स्त्यागे द्वयोः षड्जभिदानिरुक्ताः ॥५१८॥
त्यागे त्रयाणामिह ताश्चतस्र स्त्यागे चतुर्णां पुनरेकिकैव ।
भेदा इमे पञ्चदशैष षाड्ज्या जातेर्महद्भिः प्रतिपादिताः स्युः ॥ ५१९ ॥
तत्राष्टपूर्णत्वगुणेन हीनाः सप्तापरे तत्परिवर्जिताः स्युः ।
पूर्णत्वहीनाः पुनरष्ट ते च द्विधा भवन्त्यौडव षाडवाभ्याम् ॥ ५२० ॥
आहत्य पूर्णत्वविवर्जितास्ते षडुत्तराः स्युर्दशतेति सप्त ।
अन्त्येन हीना इति विंशतिस्तु त्रयाधिकास्त्वार्षभि जातिभेदाः ॥५२१॥
आरभ्य जातिं पुनरार्षभीं तु नैषादिकान्ताः कथिताः क्रमेण ।
षट् च त्रयोविंशतिधा मिलित्वा गत्वोत्तर त्रिंशदिदं शतं ताः॥ ५२२ ॥
षड्ज्याः पुनः पञ्चदशोक्त भेदाः शतं त्रिपञ्चाशदिदं मिलित्वा ।

---

## — विकृत जातयः —

संसर्गतो वैकृतजातिकानां जाता इहैकादश जातयः स्युः ।
स्यात्षड्जकैशिक्यभिधादिमात्र षड्जादिमोदीच्यवती द्वितीया ॥
भवेच्च षड्जादिम मध्यमान्या गान्धारकोदीच्यवती चतुर्थी ।
स्याद्रक्तगान्धार्यपराऽथ कैशिक्युदीच्यवा मध्यमपूर्विकान्या ॥५२४॥
कर्मारवी त्वष्टमिकोपदिष्टा गान्धारपञ्चम्यपरा प्रतीता ।
आन्ध्री दशम्यत्र च नन्दयन्ती चैकादशी तज्जनिकं वदामः ॥ ५२५ ॥

---

## — द्विजातिजाः —

षाड्ज्या च गान्धारिकया च जाता स्यात्षड्जकैशिक्यभिधा तु जातिः।
षाड्ज्या तथा मध्यमया च जाता षड्जादिमा मध्यमिकाऽत्र जातिः ॥
गान्धारिकापञ्चमिकोपजाता गान्धारपञ्चम्यभिधा च जातिः ।
गान्धारिकार्षभ्युदिता तथाऽऽन्ध्री वक्ष्यामि जातित्रयसंभवांश्च ॥५२७॥

---

## — त्रिजातिजाः —

षाड्जी च गान्धार्यथ धैवती च षड्जादिमोदीच्यवतीं विदध्युः ।

नैषादिका पञ्चमिकार्षभी च कर्मारवीं सञ्जनयन्ति जातिम् ।
गान्धारिका पञ्चमिकार्षभी च तां नन्दयन्तीं जनयन्ति जातिम् ॥५२८॥

— चतुर्जातिजाः —

जातिं ब्रुवे जातिचतुष्टयी च गान्धारिका धैवतिका च षाड्जी ।
सा मध्यमा चापि च जातिरेता गान्धारिकोदीच्यवतीं विदध्युः॥५२९॥
गान्धारिका धैवतिकाभिधाना सा पञ्चमी मध्यमिका च जातिः ।
एताः पुनः सम्मिलिताश्चतस्रस्ता मध्यमोदीच्यवतीं विदध्युः ॥ ५३० ॥
गान्धारिका पञ्चमिकाभिधाना नैषादिका मध्यमिका च जातिः ।
ता रक्तगान्धार्यभिधां विदध्युस्तां पञ्चजातिप्रभवां वदामः ॥ ५३१ ॥

— पञ्चजातिजः —

षाड्जी च गान्धार्यथ मध्यमा च नैषादिका पञ्चमिका च जातिम् ।
तां कैशिकीं कुर्युरिमा मिलित्वा वक्ष्याम्यथ ग्रामविभागमासाम् ॥

— ग्रामविभागः —

सप्तैव तासु प्रभवन्ति षड्ज ग्रामात्तु नामानि वदामि तासाम् ।
षड्जादिमोदीच्यवती च षाड्जी सा षड्जकैशिक्यपि षड्जमध्या ॥
नैषादिका धैवतिकार्षभी च ता मध्यमग्रामभवास्तु शिष्टाः ।
संपूर्णता मौडुवषाडवत्वे विभज्य तासां प्रतिपादयामः ॥ ५३४ ॥
गान्धारपञ्चम्यथ षड्जकैशिक्याख्याश्च कर्मारविकाह्वयश्च ।
स्यान्मध्यमोदीच्यवतीति चैताः सद्भिर्नियुक्ताः किल नित्यपूर्णम् ॥
षाड्जी तथान्ध्री किल नन्दयन्ती गान्धारिकोदीच्यवती तथैव ।
संपूर्णतां षाडवतां च यान्तीत्येताश्चतस्रो मुनिनोपदिष्टाः ॥ ५३६ ॥
दशावशिष्टास्तु भजन्ति सर्वाः संपूर्णतां षाडव ? षाडवत्वे ।
स्यात्पञ्चमी मध्यमिकाख्यषड्जमध्यासु साधारणता स्वराणाम् ॥
षड्जो यदांशो भवतीह षड्जसाधारणं नाम तदावगम्यम् ।
अंशौ यदा मध्यमपञ्चमौ स्तः साधारणं मध्यमपूर्वकं स्यात् ॥ ५३८ ॥

साधारणं जातिषु चैतदल्पनिषादगान्धारवतीषु बोध्यम्
न केवलं जातिषु किंत्वदोऽल्पनिषादगान्धारयुतेऽपि रा
भवेन्नषड्जादिममध्यमायां साधारणं चापि निगाल्पताः
तत्रापि जातिर्विकृता स्वराणां साधारणस्याश्रयतां प्रय

---

## — अंशस्वराः —

अंशस्वराणां कथयामि सङ्ख्यामतः परं जातिविशेषभाज
गान्धारपञ्चम्यथ नन्दयन्ती सा मध्यमोदीच्यवतीति तिस
एकांशभाजस्त्वथ धैवती च गान्धारकोदीच्यवती च जा
सा पञ्चमी द्व्यंशयुतास्तु तिस्रः षड्जादिकैशिक्यपि चार्षभ
नैषादिका द्व्यंशयुतास्तु तिस्रः षड्जादिकोदीच्यवती तथा
कर्मारवीऽमाश्चतुरंशिकाः स्युर्गान्धारिका मध्यमिका च
सारक्तगान्धार्यथ ताश्चतस्रः पञ्चांशयुक्तास्त्वथ कैशिकी
षडंशयुक्ताः पुनरेकिकैव सप्तांशिकैका किल षड्जमध्या
त्रिषष्टिरष्टादश जातिषु स्युरंशास्तु संख्यावशतोऽवगम्याः
त्रिषष्टिरंशाः परिपूर्णतायां द्वेविंशती सप्त च षाडवत्वे
त्रिंशत्किलांशाः पुनरौडुवत्वे व्यवस्थिताश्चेत्थमिहावधार्या

---

## — रागाणां त्रयोदश लक्षणम् —

पूर्वोक्तजातिष्वपि तद्भवेषु रागेष्वनुस्यूततया स्थितं तत्
त्रयोदशात्रापि भवन्ति भेदा वक्ष्यामहे लक्षणमत्र सम्यक् ।
त्रयोदशानामपि लक्षणानां उद्देशमादावुपदर्शयामः
ग्रहाभिधानः प्रथमः परोऽशस्तारस्तृतीयोऽथ परस्तु मन्द्रः
स्यात्पञ्चमो न्यास इति प्रतीतोऽपन्याससंज्ञां लभते च षष्ठः
सन्न्यासकः सप्तम एष वेद्यो विन्यासनामा पुनरष्टमः स्यात्
बहुत्वमन्यत्पुनरल्पतान्या त्वेकादशोऽप्यन्तरमार्गनामा
स्यात् द्वादशः षाडवनामधेय स्त्रयोदशः स्यात्पुनरौडुवाख्यः

---

— ग्रहः —

गीतस्य जातिप्रमुखस्य यः स्यादाद्यस्वरोऽसौ ग्रहनामधेयः ॥ ५५० ॥
यो व्यञ्जको रक्तिगणस्य गेये यस्यापि संवाद्यनुवादिनौ च ।
बहुर्विदार्याह्वयगीतखण्डे व्यवस्थितौ येन च तारमन्द्रौ ॥ ५५१ ॥
वादी च संवाद्यपि यः स्वयं स्याद्यस्यानुवादी पर एव यत्र ।
सन्यासविन्यासविधाश्च जाताऽपन्यासतान्यास्त्रिविधा ग्रहत्वम् ॥

---

— अंशः —

यश्चप्रयोगे बहुलश्च वादी तमंशनामानमुदीरयन्ति ।
आवर्त्यमानत्वमनेकधास्या द्गीतादिषु स्यादिह मुख्यलक्ष्म ॥ ५५३ ॥
ग्रहत्वमस्य प्रतिपादितं प्राक् ग्रहांशयो स्तर्हि कुतोविभेदः ।
अत्रोच्यते यत्परमेष वादी वादी च संवाद्यपि स ग्रहस्यात् ॥ ५५४ ॥

---

— तारः —

तारव्यवस्थां तदनुब्रवीमि योमध्यमस्थाय गतोंऽशकोऽस्मात् ।
तारस्थितांस्तान्परतः स्वरान्द्रागारुह्य गायेच्चतुरो न चान्यान् ॥ ५५५ ॥
चतुर्षु युक्तोऽपि च गण्यतेऽत्र तस्यापवादः परिकीर्त्यतेऽत्र ।
आतारषड्जं किल नन्दयन्त्या मारोहणंस्यान्न ततः परस्तात् ॥ ५५६ ॥
अंशो यदा मध्यमगस्तु षड्ज स्तारस्थितात्पञ्चमतः प्रगायेत् ।
स्वरान्यथेष्टं न ततः परस्ता दन्येषु वांशेषु भवेद्विगेपा ॥ ५५७ ॥

---

— मन्द्रः —

मन्द्रव्यवस्था मधुना ब्रवीमि यो मध्यमस्थाय गतोंऽशकोऽस्मात् ।
मन्द्रस्थितादेव ततोऽवरोहेत् पक्षान्तरं तत्र निरूप्यतेऽथ ॥ ५५८ ॥
व्यत्यासतो ग्रामयुगे निरुक्तौ न्यासादिमौ ... .... ... निरुक्तौ ।
मन्द्रान्निषादान्मृदुगात्तु षड्जग्रामेऽथवा पूर्वग धैवतोऽन्त्यः ॥ ५५९ ॥
न्यस्यान्मृदोर्गादपि मध्यमाख्यग्रामे तु पूर्वस्त्वृषभस्तथान्त्यः ।

---

— न्यासः —

यन्न्यस्यते त्यज्यत एव गीतिरस्मिन्निति न्यास इति प्रतीतः ॥ ५६० ॥
गीते समाप्तिं विदधाति योऽसौ न्यासः सचैकाधिकविंशतिः स्यात् ।

— न्यासस्वराः —

षड्ज्यादिमानामिह जातिकानां नामस्वरन्यासतयोपदिष्टाः ॥ ५६१ ॥
न्यासे तु षड्जादिममध्यमायां नामस्वरौ षड्जकमध्यमौ द्वौ ।
उदीच्यवानां त्रितयेऽपि तासां न्यासं पुनर्मध्यममामनन्ति ॥ ५६२ ॥
न्यासस्तु कैशिक्यभिधानजातौ निषादगान्धारक पञ्चमास्ते ।
सा षड्ज कैशिक्यपि तत्र रक्तगान्धारिकाख्यानवती तथान्ध्री ॥५६३॥
गान्धारपञ्चम्यथ नन्दयन्ती गान्धारकन्यासतयात्र वेद्याः ।
कर्मारवी सा खलु पञ्चमान्ता न्यासास्त एकाधिक विंशतिः स्युः ॥

— अपन्यासः —

भवेदपन्यासतया प्रतीतो यो गीतखण्डस्य समापकः स्यात् ।
कर्मारवी मध्यमिका तथान्ध्री नैषादिका चार्षभिका च जातिः ॥५६५॥
अंशस्वरान्पञ्चसु तासु सन्तो वदन्त्यपन्यासतया प्रतीतान् ।
उदीच्यवानां त्रितयेऽपि षड्जोऽपन्यासमासां त्विति धैवतञ्च ॥ ५६६ ॥
या रक्तगान्धार्यपि मध्यमः स्यात्तस्यामपन्यासतया प्रतीतः ।
गान्धारिकायामपि तत्र जातौ सपावपन्यासतया प्रतीतौ ॥ ५६७ ॥
या षड्जकैशिक्यपि तत्र जातौ षड्जो निषादोऽपि च पञ्चमश्च ।
या पञ्चमी जातिरभूदिहापि न्यासा निषादर्षभपञ्चमाः स्युः ॥ ५६८ ॥
गान्धारपञ्चम्यभिधानजातौ रिपावपन्यासतया प्रतीतौ ।
षाड्ज्या मपन्यासतया गपौ स्तौ या धैवती स्याद्रिमधाश्च तस्याम् ॥
या नन्दयन्ती खलु जातिरस्यां मपावपन्यासतया प्रतीतौ ।
या षड्ज कैशिक्यपि तत्र जातौ मतास्त्वपन्यासतया रिवर्जाः॥५७० ॥
स्वरानपन्यासतया वदन्ति सतापि तस्यामृषभेण युक्ताः ।
नैषादिका चार्षभिका च जाती तयोरिहांशत्रितयं पृथक्स्यात् ॥ ५७१ ।

कर्मारवी जातिरिहान्ध्रिका च प्रकीर्तिते ते चतुरंशयुक्ते ।
अंशास्तथा पञ्चममध्यमाया मेकोनिका विंशतिरासु चांशाः ॥ ५७२ ॥
एतासु पञ्चस्वपि चांशकास्तेऽपन्यासतां यान्ति तथैव नान्यः ।
पञ्चापि जातीरपि वर्जयित्वा त्रयोदशस्वप्यथ जातिषूक्ताः ॥ ५७३ ॥
अनंशभूता हि भवन्ति सप्तस्वंशास्त्वपन्यासतया स्वरास्ते ।
पञ्चाशदाहत्य षडुत्तरास्तेऽपन्यासभावं दधते स्वरास्तु ॥ ५७४ ॥
स्वरास्तु सप्तापि च तत्र षड्जैः कैशिक्यभिख्यावति जातिभेदे ।
भवन्त्यपन्यासकसप्तपक्षे पञ्चाशदेते किल सप्तयुक्ताः ॥ ५७५ ॥

— सन्यासविन्यासौ —

योंशाविवाद्यादिमगीतखण्डसमाप्तिकारी कथितः स गीते ।
सन्यासनामाथ भवेत्स्वरो यस्त्वंशा विवाद्येव विदारिकायाः॥ ५७६ ॥
प्राप्तः पदप्रान्तमिह स्वरोऽसौ विन्यासनामा कथितो मुनीन्द्रैः ।

— बहुत्वम् —

आवृत्तितो लङ्घनतो बहुत्वं द्वेधा तयोर्वादिगतं किलाद्यम् ॥ ५७७ ॥
संवादिनिष्ठं भवति द्वितीयमलङ्घनाख्यं तदवर्जनेन ।

— अल्पत्वम् ॥

द्वेधाप्यनभ्यासबिलङ्घनाभ्या मल्पत्वमेतद्द्वयमप्यनंशे ॥ ५७८ ॥
वर्ज्येप्यधो लंघनमत्र चेत् षट्स्वरा यदा केचिदुदीरयन्ति ।
पक्षे तु तस्मिन्किल लंघनं तं न्यासादिकेष्वेव वदन्ति केचित् ॥ ५७९ ॥

— अन्तरमार्गः —

न्यासादिमस्थानमपास्य मध्ये मध्येऽल्पभावं भजतां स्वराणाम् ।
विचित्ररूपांशक सङ्गतिर्या समीरितः सोऽन्तरमार्ग एषः ॥ ५८० ॥
जातिष्वसौ स्याद्विकृतासु भूयस्तथैव रागेषु समुद्भवेषु ।

— षाडवः —

स्वराः प्रयोगे षडवन्ति ये तु त एव पूर्वैः षडवा निरुक्ताः ॥ ५८१ ॥
जातं किलैतेष्विति षाडवाख्यामाप्नोति गीतं खलु षट्स्वरं तत् ।

— औडवः —

उडूनि वान्तीत्युडवाभिधानं व्योमेरितं तत्खलु पञ्चमं स्यात् ॥ ५८२ ॥
भूतेषु तस्मादिह पञ्चसंख्या जातौ च संख्या पुनरस्ति येषाम् ।
अमी स्वरास्ते स्वरनामधेया जाताश्च ते यत्र तदेव गीतम् ॥ ५८३ ॥
मुनीश्वरैरौडुवितामिधानं निरूपितं याष्टिककोहलाद्यैः ।

— विशेषः —

यल्लोपतः षाडवता स्वरस्य तस्याल्पतायामिह पूर्णतायाम् ॥ ५८४ ॥
लोपेन यस्यौडुवतां तु गीते संपूर्णभावेऽल्पतरत्वमस्य ।
तस्याल्पतानस्य लुपा न कार्या स्याल्लङ्घनं नाल्पतरत्वमस्य ॥ ५८५ ॥
पूर्वोदितात्पाल्पतरप्रयुक्ते वाधो भवेत्पञ्चमिकाख्यजातौ ।
गान्धारकः षाडवकृन्निषादो व्यापादयेदौडुवमत्र जातौ ॥ ५८६ ॥
तयोरिहाल्पाल्पतरप्रयोगः प्रसज्जते तत्तु निषिध्यतेऽत्र ।
ततो निषादो बहुलस्ततोऽस्यां गान्धारकोऽप्यल्पतरो न हि स्यात् ॥
विधिः किलाल्पत्व बहुत्वयोः स्यादत्यन्तमप्राप्ततया त्वपूर्वा ।
स्यात्पञ्चमीनामनि तत्र जातौ समाल्पभावस्य विधिस्त्वपूर्वः ॥ ५८८ ॥
तत्रापि चान्यत्र किल प्रसक्तौ काचिद्विधिः स्यात्परिसंख्ययैव ।
अस्यां निषादस्य तयाल्पभावव्यावर्तितं स्याद्बहुलत्वमेव ॥ ५८९ ॥
सामान्यतो लक्षणमेवमुक्तं षड्जादिकानामपि जातिकानाम् ।
विशेषतो लक्ष्म वदामि तासां ग्रहांशमुख्यैः सहितं समस्तैः ॥ ५९० ॥

— षड्जी जातिः —

पञ्च स्वरास्तत्र भवन्ति षाड्ज्यामंशो निषादर्षभवर्जनेन ।
निषादलोपादिह षाडवत्वं गान्धारकांशेन निषादलोपः ॥ ५९१ ॥

संवादिनौ तौ हि निगौ प्रदिष्टौ विवादिसंवादिगतेऽस्ति लोपः ।
गान्धारकेंऽशे सति पूर्णता स्या त्क्वचिन्निषादस्य च काकलीत्वम् ॥

षाड्ज्यां भवेत्सङ्गतिरत्र षड्जगान्धारयोर्धैवतषड्जयोश्च ।
स्यात्सङ्गती रागविविक्तिहेतुः सङ्गः कृतः स्यात्सगयोर्विरोधात् ॥५९३॥

अत्रान्तरत्वांशतया तयोस्तु समप्रधानत्ववशेन सङ्गः ।
षाड्ज्यां भवेन्मूर्छनिकात्र षड्जग्रामोत्तरायायतिकैव मेलः ॥ ५९४ ॥

स्यात्षट्पितापुत्रक एव तालस्त्रेधा किलैकत्रिचतुष्कलात्मा ।
यदा भवेदेककलः स चित्रमार्गस्तथा मागधिका च गीतिः ॥ ५९५ ॥

भवेद्यदायं द्विकलस्तु गीतिः संभाविता वार्त्तिक एव मार्गः ।
चतुष्कलश्चेत्स तु दक्षिणः स्यान्मार्गस्तदानीं पृथुला च गीतिः॥ ५९६ ॥

नैष्कामिकाया भवति ध्रुवाया गाने पुनर्नाटकपूर्वकाङ्के ।
जातेरमुष्या विधियोगयुक्ताः कला भवन्त्यष्ट गुरुस्वरूपाः ॥ ५९७ ॥

जाताविह द्वादश संभवन्ति रागो वराटी परिदृश्यतेऽस्याः ।
न्यासस्तु षड्जो भवतीह जातौ गपावपन्यासतया प्रतीतौ ॥ ५९८ ॥

---

— प्रस्तारः —

सा सा सा सा पा नि ध पा ध नि
तं भ व ल ला ट

रि ग म गा गा सा रि ग ध स धा
न य ना म्बु जा धि

रि ग सा री गा सा सा सा सा
कं

धा धा नि ध नि स नि ध पा सा सा
न ग सू नु प्र ण य

नि ध पा ध नि रि गा सा गा
के लि स मु द्र

सा धा धा नी सा सा सा सा
वं

सा सा गा सा     मा मा मा मा
स र स कृ     त ति ल क

सा प स   मा   ध नि   नि ध पा   गा रि ग
पं     का   नु   ले   प

गा गा गा गा   सा सा सा सा
नं

धा सा री   ग रि   सा मा मा मा
प्र ण मा     मि का   म

धा नी   पा ध नि   री गा   री सा
दे   हें     ध ना   न

रि ग सा   री गा   सा सा सा सा
लं

---

— गीतम् —

तं भवललाटनयनाम्बुजाधिकं नगसूनुप्रणयकेलिसमुद्भवम् ।
सरसकृततिलकपङ्कानुलेपनं प्रणमामि कामदेहेन्धनानलम् ॥

---

— आर्षभी जातिः —

अथार्षभीलक्ष्म वदामि तस्यामंशा निषादर्षभधैवतास्ते ।
निषादगान्धारकयोश्च योगः स्वरैः परैः पञ्चमलङ्घनं च ॥ ६०० ॥
षड्जस्य लोपेन हि षाडवत्वमिहौडुवत्वं सपयोर्विलोपात् ।
स्यान्मूर्छना तत्र विशुद्धषड्जा चच्चत्पुटः स्याद्द्विकलोऽत्र तालः ॥
अष्टौ कलाः पूर्ववदेव चास्या ध्रुवादिके यो विनियोग उक्तः ।
न्यासः पुनः स्यादृषभस्ततोऽस्यामंशोऽप्यपन्यासतया प्रतीतः ॥
निषादगान्धारकयोर्बहुत्वमल्पत्वमस्यामितरस्वराणाम् ।
रागौ तु देशीमधुकर्यभिख्यावस्यास्तु गाने स्फुटतां भजेताम् ॥ ६०२ ॥
तयोर्द्वयोः स्यादृषभो यतोंऽश स्ततस्तृतीयस्वरतोचितैव ।

---

— प्रस्तारः —

री गा सा रि गा मा रि म. गा रि रि
गु ण लो च ना धि
रि रि नि ध नि ध गा रि म मा प नी
क म नं त म म र
मा धा नी धा पा पा सा गा
म ज र म क्ष य
नि ध नि रि ग रि स ध ग रि रि री
म जे यं
रि म ग रि स ध स स रि स रि ग मा मा
प्र ण मा मि दि व्य
नि ध पा रि रि रि प ग रि स ध सा
म णि द र्प णा म
रि स रि स रि ग रि ग मा मा मा ग रि
ल नि के तं
पा नि नि म ग रि स ध ग रि ग रि
भ व म मे यं

---

— गीतम् —

गुणलोचनाधिकमनन्तममरमजरमक्षयमजेयम् ।
प्रणमामि दिव्यमणिदर्पणामलनिकेतं भवममेयम् ॥ ६०४ ॥

---

॥ रघुनाथभूपविरचिता ॥

## ॥ सङ्गीतसुधा ॥



### — गान्धारी जातिः —

गान्धारिकालक्षणमुच्यतेऽथ तस्यां विहायर्षभधैवतौ द्वौ ।
अंशास्वराः पञ्च भवन्ति शिष्टा न्यासस्तु गान्धार इति प्रतीतः ॥

सपावपन्यासतया प्रतीतौ न्यासांशताभ्यामितरस्वराणाम् ।
आरोहणं धादृषभान्तमस्यां लोपाद्भवेत्षाडवतर्षभस्य ॥ ॥ ६०६ ॥

स्यादौडुवं तद्द्विधयोस्तु लोपान्न पञ्चमेंऽशे किल षाडवः स्यात् ।
नैवौडुवं षड्जनिषादकौ वा अंशौ यदा मध्यमपञ्चमौ च ॥ ॥ ६०८ ॥

स्यान्मूर्छना पौरविकात्रयादि चच्चत्पुटः पूर्ववदेव तालः ।
भवेत्तृतीये किल नाटकाङ्के गाने ध्रुवाया विनियोजनं स्यात् ॥

गान्धारपूर्वोऽपि च पञ्चमश्च देशी च वेलावलिका च रागाः ।
गान्धारकांशे त्वसमानभावा तस्यास्तु गाने स्फुटतां प्रयाति ॥ ६०९ ॥

---

### — प्रस्तारः —

1. गा गा    सा नी    सा    गा गा गा
   प    तं

2. गा गम    पा पा    ध प    मा नि ध    नि स
   र ज    नि व    धू    मु    ख

3. नि ध प नि    मा म प रि    गा गा गा गा
   वि    भ्र    म    दं

4. गा ग म पा    प ध    पा मा नि ध    नि सा
   नि शा    म    य व    रो    रु

5. नि ध प नि    मा म प    रि मा गा मा सा
   त    व    मु ख    वि ला    स

6. गा सा गा गा गा ग म गा गा
व पु श्चा रु म म ल
7. गा ग म पा पा ध पा मा नि ध नी सा
मृ दु कि र ण
8. नि ध प नि मा प म रि गा गा गा गा
म मृ त भ वं
9. रि गा मा प ध रि गा सा सा
र ज त गि रि शि ख र
10. नी नी नी नी नी नी नी नी
म णि श क ल शं ख
11. गा ग म पा पा ध प मा नि ध नि स
व र यु व ति दं त
12. नि ध प नि मा म प रि गा गा गा गा
पं क्ति नि भं
13. नी नी पा नी गा मा सा मा
प्र ण मा मि प्र ण य
14. गा सा गा गा गा ग म गा गा
र ति क ल हा प नु
15. गा पा मा मा नि ध नि स नि ध प नि
दं
16. मा प रि ग गा गा गा गा गा गा
श शि नं (इति विसार जाति)

---

— गीतम् —

एतं रजनिवधूमुखविभ्रमदं निशामय वरोरु
तव मुखविलासवपुश्चारुममलमृदुकिरणममृतभवम् ।
रजतगिरिशिखरमणिशकलशङ्खवरयुवतिदन्तपंक्तिनिभं
प्रणमामि प्रणयरतिकलहापनुदं शशिनम् ॥ ॥ ६१० ॥

---

## — मध्यमा जातिः —

अथोच्यते लक्ष्म तु मध्यमायास्त्वंशास्तु गान्धारनिषादवर्जाः ।
स्यादत्र षड्जस्य च मध्यमस्य बाहुल्यमल्पः पुनरत्र गः स्यात् ॥६११॥
गान्धारलोपादिह षाडवं स्यात्तथौडुवं स्यान्निगयोस्तु लोपात् ।
स्यान्मूर्च्छनास्यामभिरुद्गताख्या तथार्षभाद्या पुनरत्र तालः ॥ ६१२ ॥
चच्चत्पुटः स्याद् द्विकलः कलाष्टौ कला द्वितीयाङ्गतध्रुवायाम् ।
गाने तथा स्याद्विनियोजनं स्यान्न्यासः पुनर्मध्यम एव तत्र ॥ ६१३ ॥
अंशास्त्वपन्यासतया प्रतीताः पञ्चापि गान्धारनिषादवर्जाः ।
आन्धालिका देश्यपि शुद्धपूर्वा सषाडवं तत्र विभान्ति रागाः ॥६१४॥

---

## — प्रस्तारः —

1. मा मा मा मा पा ध नि नी ध प
   पा तु भ व मू
2. मा प म मा सा मा गा री री
   र्ध जा न नं
3. पा मा रि म गभ मा मा मा मा
   कि री ट
4. मा नि ध नि स नि ध प म प ध मा मा
   म णि द र्प णं
5. नी नी री री नी री री पा
   गौ री क र प
6. नी म प मा मा सा सा सा सा
   ल्ल वां गु लि सु
7. गा नी सा गा ध प सा ध नि सा
   ते जि तं
8. पा सा पा नि ध प मा मा मा मा
   सु कि र णं

---

— गीतम् —

पातु भवमूर्धजाननं किरीटमणिदर्पणम् ।
गौरीकरपल्लवाङ्गुलिस्तुतेजितं सुकिरणम् ॥ ॥ ६१५

---

— पञ्चमी जातिः —

लक्ष्मोच्यते पञ्चमिकाभिधाया जातेर्निपावंशतयात्र वेद्यौ ।
स्वरा भवेयुः सगमास्तु तस्यां तथैव योगो रिमयोरपि स्यात् ॥ ६१६
न्यासो भवेत्पञ्चमिकस्तथापन्यासा निषादर्षभपञ्चमाश्च ।
गान्धारमारभ्य तथा निषादमारोहणं स्यादिह पूर्णतायाम् ॥ ६१७
गान्धारलोपेन च षाडवत्वमिहौडुवत्वं निगयोस्तु लोपात् ।
इहर्षभांशेन किलौडुवत्वमष्टौ कलास्तत्र भवन्ति तालः ॥ ६१८
चच्चत्पुटः स्याद् द्विकलः कलोपनताभिधा मूर्छनिकर्षभाद्या ।
शुद्धादिमः पञ्चमिकश्च देशी चान्धालिकास्तत्र विभान्ति रागाः ॥
अस्यास्तृतीये किल नाटकाङ्के गीते ध्रुवाया विनियोजनं स्यात् ।

---

— प्रस्तारः —

1. पा ध नि नी नी मा नी मा पा
   ह र मू र्ध जा न
2. गा गा सा सा मा मा पा पा
   नं म हे श म म र
3. पा पा धा नी नी नी गा सा
   प ति वा डु स्तं भ
4. पा मा धा नी नि ध पा पा पा
   न म नं तं
5. पा पा री री री री री री
   प्र ण मा मि पु रु ष
6. मा नि ग सा स ध नी नी नी नी
   मु ख प द्म ल क्ष्मी

7. सा सा सा मा पा पा पा पा
ह र मं वि का प

8. धा मा धा नी पा पा पा पा
ति म जे यं

---

## — गीतम् —

हर मूर्धजाननं महेशममरपतिबाहुस्तम्भनमनन्तम् ।
तं प्रणमामि पुरुषमुखपद्मलक्ष्मीहरमम्बिकापतिमजेयम् ॥ ६२० ॥

---

## — धैवती जातिः —

अथोच्यते धैवतिकाख्यजातेरंशौ हि तत्रर्षभधैवतौ द्वौ ।
आरोहणे किं च सपौ विलङ्घ्यौ तथौडुवं स्यात्सपयोश्च लोपात् ॥६२१
स्यान्मूर्छनास्यामभिरुद्गताख्याऽसौ षड्जकग्रामगतर्षभाद्या ।
स्यात्षट्पितापुत्रक एव तालस्त्रेधा किलैकत्रिचतुष्कलात्मा ॥ ६२२ ॥
यदा भवेदेककलः स चित्रमार्गस्तथा मागधिका च गीतिः ।
भवेद्यदायं द्विकलस्तु गीतिः सम्भाविता वार्त्तिक एव मार्गः ॥ ६२३ ॥
चतुष्कलश्चेत्स तु दक्षिणः स्यान्मार्गस्तदानीं पृथुला च गीतिः ।
नैष्क्रामिकाया भवति ध्रुवाया गाने पुनर्नाटकपूर्वकाङ्के ॥ ६२४ ॥
जातेरमुष्या विनियोग उक्तः कला भवन्त्यष्ट गुरुस्वरूपाः ।
जाताविह द्वादश सम्भवन्ति गाने पुनः सिंहलिका च देशी ॥ ६२५ ॥
सा शुद्धकैशिक्यपि ते त्रयोऽपि रागाः परिस्फूर्तिमिह प्रयान्ति ।

---

## — प्रस्तारः —

1. धा धा नि ध प ध मा मा मा मा
त रु णा म लें दु

2. धा धा नि ध नि स सा सा सा सा
म णि भू षि ता म

3. स ध धा पा म ध धा नि ध ध नि धा
ल शिरो जं

4. सा सा रि ग रि ग सा रि ग सा सा
भु ज गा धिपै क

5. धा धा नी पा धा पा मा मा
कुं ड ल वि ला स

6. धा धा पा म ध धा नि ध ध नि धा
कृ त शो भं

7. धा धा नि स नि स नि ध पा पा पा
न ग सू नु ल क्ष्मी

8. रि ग सा सा सा नी नी नी नी
दे हा र्ध मि श्रि

9. सा रि ग रि ग सा नी सा धा धा
त श री रं

10. री ग रि म ग मा मा मा मा मा
प्र ण मा मि भू त

11. नी नी धा धा पा रि ग सा रि ग
गी तो प हा र

12. पा धा सा मा धा नी धा धा
प रि तु ष्टं

---

— गीतम् —

तरुणामलेन्दुमणिभूषितामलशिरोजं
भुजगाधिपैककुण्डलविलासकृतशोभम् ।
नगसूनुलक्ष्मीदेहार्धमिश्रितशरीरं
प्रणमामि भूतगीतोपहारपरितुष्टम् ॥ ॥ ६२६ ॥

---

— नैषादी जातिः —

नैषादिकालक्षणमत्र वक्ष्याम्यंशा मताः स्युर्निरिगा विकल्पात् ।
स्यात्षाडवः पञ्चमवर्जनेन तथौडुवं स्यात्सपयोर्विलोपात् ॥ ६२७ ॥
आरोहिणौ किं च सपौ विलङ्घ्यौ चच्चत्पुटस्ताल इहोपदिष्टः ।
गान्धारपूर्वा किल मूर्छनाश्वक्रान्ता कला तादृशषट्समेताः ॥ ६२८ ॥
न्यासो निषादः पुनरत्र वेद्योऽपन्यासतां यान्ति तथात्र चांशाः ।
स्यान्नाटकस्य प्रथमाङ्कभाजो गाने ध्रुवाया विनियोजनञ्च ॥ ६२९ ॥
ते शुद्धसाधारितदेशिवेलावल्याख्यरागाः स्फुटतां प्रयान्ति ।

---

— प्रस्तार. —

1. नी नी नी नी   सा धा नि नि
   तं   सु र   वं   दि त

2. पा मा सा धा   नी नी नी नी
   म हि प म   हा   सु र

3. सा सा गा गा   नी नी धा नी
   म थ न मु   मा   प ति

4. सा सा धा नी   नी नी नी नी
   भो   ग यु   तं

5. सा सा गा गा   मा मा मा मा
   न ग सु त   का   मि नी

6 नी पा सा पा   मा मा मा मा
   दि   व्य वि   शे   प क

7 री गा सा सा   री गा नी नी
   सू   च क   शु भ न ख

8. नी नी पा ध नि   नी नी नी नी
   द   र्प ण   कं

9. सा सा गा सा   मा मा मा मा
   अ हि मु ख   म णि ख चि

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| 10 | मा | मा | मा | मा | नी | धा | मा | मा |
| | तो | | ज्ज्व | ल | नू | | पु | र |
| 1. | धा | धा | नी | नी | री | गा | मा | मा |
| | बा | ल | | भु | जं | ग | | म |
| 12. | मा | मा | पा | ध | नी | नी | नी | नी |
| | र | व | क | लि | तं | | | |
| 13. | पा | पा | नी | नी | री | री | री | री |
| | द्रु | त | म | भि | व्र | जा | | मि |
| 14. | री | सा | मा | मा | री | गा | सा | सा |
| | श | र | ण | म | निं | | दि | त |
| 15. | धा | मा | री | गा | सा | धा | नी | नी |
| | पा | | द | यु | ग | पं | | क |
| 16. | पा | मा | री | गा | नी | नी | नी | नी |
| | ज | वि | ला | | सं | | | |

— गीतम् —

तं सुरवन्दितमहिषमहासुरमथनमुमापतिं भोगयुतं
नगसुतकामिनीदिव्यविशेषकसूचकशुभनखदर्पणकम् ।
अहिमुखमणिखचितोज्ज्वलनूपुरबालभुजङ्गमरवकलितम्
द्रुतमभिव्रजामि शरणमनिन्दितपादयुगपङ्कजविलासम् ॥ ६३० ॥

— विकृतजातयः —

— षड्जकैशिकी जातिः —

शुद्धा निरुक्ता इति जातयोऽतो लक्ष्मोच्यते वैकृतजातिकानाम् ।
एकादशस्वप्यथ तासु षड्जकैशिक्यभिख्यामिह लक्षयामः ॥ ६३१ ॥

जातावमुष्यां हि भवन्ति षड्जो गान्धारकः पञ्चमकस्त्रयोंऽशाः ।
अल्पौ मतौ चर्षभमध्यमौ द्वौ मनाक् बहू धैवतको निषादः ॥ ६३२ ॥

चच्चत्पुटस्ताल इह प्रतीतो द्व्यष्टौ कलाः स्युर्विनियोजनं तु ।
अङ्के द्वितीये किल नाटकस्य प्रावेशिकी या भवति ध्रुवा स्यात् ॥

गान्धारको न्यास इह प्रतीतः षड्जो निषादोऽपि च पञ्चमश्च ।
त्रयोऽप्यपन्यासतयात्र वेद्या हिन्दोलगान्धारकपञ्चमौ च ॥ ६३४ ॥
वेलावली देशिमुखाश्च रागाः प्रायेण तत्र स्फुटतां प्रयान्ति ।

---

— प्रस्तारः —

1. सा सा मा पा ग रि म ग मा मा
   दे
2. मा मा मा मा सा सा सा सा
   वं
3. धा धा पा पा धा धा री रि म
   अ स क ल श शि ति ल
4. री री नी नी नी नी नी नी
   कं
5. धा धा पा ध नि मा मा पा पा
   द्वि र द ग तिं
6. धा धा पा ध नि धा धा पा पा
   नि पु ण म तिं
7. सा सा सा सा सा सा सा सा
   मु ग्ध मु खां बु
8. धा धा पा धा ध नि धा धा धा
   रु ह दि व्य कां तिं
9. सा सा सा रि ग सा रि ग धा धा
   ह र मं बु द्दो द
10. मा धा पा पा धा धा नी नी
    धि नि ना दं
11. री री गा सा सा सा सा गा
    अ च ल व र सू नु
12. धा रि स री स रि री सा सा सा
    दे हा र्ध मि श्रि

13. सा सरि रीस रिरी सासासा
त श री रं

14. मा मा मा मा नि ध प ध मा मा
प्र ण मा मि त म हं

15. नी नी पा प म पा प म प ध रि ग
अ नु प म मु ख क म

16. गा गा गा गा गा गा गा गा
लं

---

— गीतम् —

देवमसकलशशितिलकं द्विरदपतिं
निपुणमतिं मुग्धमुखाम्बुरुहदिव्यकान्तिम् ।
हरमम्बुदोदधिनिनादमचलवरसूनुदेहार्धमिश्रितशरीरं
प्रणमामि तमहमनुपममुखकमलम् ॥ ६३५ ॥

---

— षड्जोदीच्यवजातिः —

षड्जादिमोदीच्यवतीस्वरूपं निरूपयामः खलु लक्षणेन ।
षड्जो निषादोऽपि च मध्यमश्च सधैवतोऽप्यंशतयात्र वेद्याः ॥ ६३६ ॥
परस्परं सङ्गतिरत्र तेषां स्यान्मन्द्रगान्धारबहुत्वमत्र ।
षड्जर्षभौ भूरितरौ रिलोपात्स्यात्षाडवं तच्च न धैवतांशे ॥ ६३७ ॥
रिधौ हि संवादितया प्रतीतौ संवादिनो नास्ति यतो विलोपः ।
अत्रौडुवं धैवतकर्षभाख्यस्वरद्वयस्यैव विवर्जनेन ॥ ६३८ ॥
स्यात्षट्पितापुत्रक एव तालस्त्रेधा किलैकद्विचतुष्कलात्मा ।
यदा भवेदेककलः स चित्रमार्गस्तथा मागधिका च गीतिः ॥ ६३९ ॥
भवेद्यदायं द्विकलस्तु गीतिः सम्भाविता वार्तिक एव मार्गः ।
चतुष्कलश्चेत्स तु दक्षिणः स्यान्मार्गस्तदानीं पृथुला च गीतिः ॥ ६४० ॥
गान्धारकाद्या खलु मूर्छनाश्वक्रान्तादिमग्रामगतात्र वेद्या ।
अस्याः पुनः प्रेक्षणके द्वितीये गाने ध्रुवाया विनियोजनं स्यात् ॥६४१॥

स्यान्मध्यमो न्यासतया मतोऽपन्यासौ पुनर्धैवतषड्जकौ द्वौ ।
अस्यां कला द्वादश संप्रदिष्टा 'शैले'ऽक्षराभ्यां प्रथमा कला स्यात् ॥
'शसूनु'ना तत्रकला द्वितीया तैः पञ्चभिस्तत्र कला तृतीया ।
स्यात्सप्तमी चा 'प्यधिका' क्षरैस्तु 'मुखेन्दु' ना त्वष्टमिका कला स्यात्॥
षड्भिस्तु तैः स्यान्नवमी कलात्र यथापथं त्वन्यकला भवन्ति ।

---

— प्रस्तारः —

(अत्र ग्रन्थपातः । सङ्गीतरत्नाकरादुध्दृत्य पूरितोऽस्ति ।)

[ 1. सा सा सा सा मा मा गा गा
शै ले

2. गा मा पा मा गा मा मा धा
श सू नु

3. सा सा मा गा पा पा नी धा
शै ले श सू नु

4. धा नी सा सा धा नी पा मा
प्र ण य प्र सं ग

5. गा सा सा सा सा सा सा गा
स वि ला स खे ल

6. धा धा पा धा पा नी धा धा
न वि नो दं

7. सा गा गा गा गा गा सा सा
अ धि क

8. नी धा पा धा पा धा धा धा
मु खें दु

9. सा सा सा गा पा पा नी धा
अ धि क मु खें दु

10. धा नी सा सा धा नी पा मा
न य नं न मा मि

11. गा सा सा सा सा सा सा गा
दे वा सु रे श

12. धा धा पा धा मा मा मा मा
त वं रु चि रं

---

— अथ गीतम् —

शैलेशसूनुप्रणयप्रसङ्गलविलासखेलनविनोदम् ।
अधिकमुखेन्दु नयनं नमामि देवासुरेश तव रुचिरम् ] ॥ ६४४ ॥

---

— अथ षड्जमध्यमा जातिः —

वदामि षड्जादिममध्यमाया लक्ष्मात्र चांशाः सकलाः स्वराश्च ।
मिथश्च तेषामपि विंशतिः स्यादल्पो निषादोऽभिमतः प्रयोगे ॥ ६४५ ॥
गान्धारकेंऽशे सति तद्बहुत्वं भवेत्तु संवादितया द्वयोश्च ।
वादित्वपक्षेऽपि निषादकर्म बहुत्वमेवास्ति न चाल्पभावः ॥ ६४६ ॥
निषादलोपादिह षाडवत्वमथौडुवत्वं निगलोपतः स्यात् ।
निषादगान्धारकयोरिहांशभावेन तेषां सपतौडुवत्वे ॥ ६४७ ॥
अंशाः षडेवात्र हि षाडवत्वे पञ्चैव तेंऽशाः पुनरौडुवत्वे ।
स्यान्मध्यमादिं किल मत्सरीकृतसा मूर्छना ग्राम इहादिमे स्यात् ॥
न्यासौ मतौ षड्जकमध्यमौ द्वौ सप्ताप्यपन्यासतया स्वराः स्युः ।
स्यात्पट्पितापुत्रक एव तालस्त्रेधा किलैकत्रिचतुष्कलात्मा ॥ ६४९ ॥
यदा भवेदेककलः सचित्रमार्गस्तदा मागधिका च गीतिः ।
भवेद्यदायं द्विकलस्तु गीतिः संभाविता वार्तिक एव मार्गः ॥ ६५० ॥
चतुष्कलश्चेत्स तु दक्षिणः स्यान्मार्गस्तदानीं पृथुला च गीतिः ।
नैष्कामिकाया भवति ध्रुवाया गाने पुनर्नाटकपूर्वकाङ्के ॥ ६५१ ॥
जातेरमुष्या विनियोगउक्तः कला भवन्त्यष्ट गुरुस्वरूपाः ।
जाताविह द्वादश संभवन्ति गाने वराली परिदृश्यतेऽस्याः ॥ ६५२ ॥

---

— अथ प्रस्तारः —

1. मा गा स ग पा ध प मा नि ध नि म
र ज नि व धू मु ख

2. मा मा सा रि ग म ग नि ध़ .प ध पा
वि ला स लो . च

3. मा गा री गा मा मा सा सा
नं

4. म म ग म मा मा नि ध प ध प म ग म म
प्र वि क सि त कु मु द

5. धा प ध प रि रि ग ग म रि ग स ध स सा
द ल फे न सं नि

6. नि ध सा री म ग म मा मा मा मा
भं

7. मा मा मगम मध धप पध पम गमग
का मि ज न न य न

8. धा पध परि रिग मग रिग सधस सा
हृ द या भि नं दि

9. मा मा धनि धस धप मप पा पा
तं

10. मा मगम मा निध पध पमग गा मा
प्र ण मा मि दे वं

11. धा पध परि रिग मग रिग सधस सा
कु मु दा धि वा सि

12. नि ध सा री मगम मा मा मा मा
नं

---

— गीतम् —

रजनिवधूमुखविलासलोचनं प्रविकसितकुमुददलफेनसन्निभम् ।
कामिजननयनहृदयाभिनन्दितं प्रणमामि देवं कुमुदाधिवासिनम् ॥

---

— अथ गान्धारोदीच्यवती जातिः —

गान्धारकोदीच्यवतीस्वरूपं निरूपयामः खलु लक्षणेन ।
अंशावुभौ षड्जकमध्यमौ द्वौ रिलोपतः षाडवमत्र वेद्यम् ॥ ६५४ ॥
संपूर्णतायां पुनरंशभिन्नास्त्वल्पे स्वरास्तत्र भवन्ति सर्वे ।
निगौ तथा पञ्चमधैवतौ च स्वल्पा भवन्त्यत्र हि षाडवत्वे ॥ ६५५ ॥
स्याद्धैवतस्यर्षभकस्य योगः स्यान्मूर्छना पौरविकात्रयादिः ।
चच्चत्पुटं तालमिहामनन्ति ह्यष्टौ कलाः प्रेक्षणके चतुर्थे ॥ ६५६ ॥
गाने ध्रुवाया विनियोजनं स्यान्न्यासो भवेन्मध्यम एव तत्र ।
षड्जस्तथा धैवतकः स्वरौ द्वावस्यामपन्यासतया प्रतीतौ ॥ ६५७ ॥

---

— अथ प्रस्तारः —

1. सा सा पा मा    पा धप    पा मा
   सौ

2. धा पा मा मा    सा सा सा सा
   म्य

3. धा नी सा सा    मा मा पा पा
   गौ  री    मु खां  बु

4. नी नी नी नी    नी नी नी नी
   रु ह दि    व्य ति ल क

5. मा मा धा निस    नी नी नी नी
   प रि चुं    वि ता  चि

6. मा पा मा    परिग    गा गा सा सा
   त सु पा    दं

7. गा मग    पा    पध    मा    धनि    पा पा
   प्र वि    क    सि    त    हे    म

8. री गा सा सध    नी नी धा धा
   क म ल नि    भं

9. गा    रिग    सा    सनि    गा रिग    सा सा
   अ    ति    रु    चि    र कां    ति

| | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| 10. | सा | सा | सा मा | | म नि | | ध नि | | नी॰ नी | | | |
| | न | ख | द | | र्प | | णा | | | म | | |
| 11. | मा पा मा | | प रि ग | | गा गा सा सा | | | | | | | |
| | ल नि के | | | | तं | | | | | | | |
| 12. | गा | सा | गा सा | | मा पा मा | | प रि ग | | | | | |
| | म | न | सि ज | | श री र | | | | | | | |
| 13. | गा मा गा सा | | गा गा गा सा | | | | | | | | | |
| | ता | ड | नं | | | | | | | | | |
| 14. | नी नी पा धा | | नी गा गा गा | | | | | | | | | |
| | प्र ण मा | | मि गौ री | | | | | | | | | |
| 15. | नी नी धा पा | | धा पा मा पा | | | | | | | | | |
| | च र ण यु | | ग म नु प | | | | | | | | | |
| 16. | धा पा सा सा | | मा मा मा मा | | | | | | | | | |
| | मं | | | | | | | | | | | |

— गीतम् —

सौम्यगौरी मुखाम्बुरुहदिव्यतिलक - परिचुम्बितार्चितसुपादं
प्रविकसितहेम कमल निभम् ।
अति रुचिर कान्तिनखदर्पणामलनिकेतं
मनसिज शरीरताडनं प्रणमामि गौरीचरणयुगमनुपमम् ॥ ६५८ ॥

— अथ रक्तगान्धारी जातिः —

या रक्तगान्धार्यथ जातिरस्या निरूप्यते लक्षणमत्र सम्यक् ।
अंशा विनैवर्षभधैवताभ्यां पञ्चस्वरा ये च भवन्ति नान्ये ॥ ६५९ ॥

स्वरैर्विलङ्घ्यर्षभमत्र षड्जगान्धारयोः सन्निधिमेलने स्तः ।
द्वयोर्भिदावल्लघुकालयोस्तु निरन्तरत्वं किल सन्निधिः स्यात् ॥ ६६० ॥

द्वयोस्तुलाचा लघुकालयोस्तु निरन्तरत्वं किल मेलनं स्यात् ।
रिलोपतः स्यादिह षाडवत्वं स्यादौडुवत्वं रिधयो र्विलोपात् ॥ ६६१ ॥

अस्यां बहुत्वं निधयोः प्रदिष्टं स्यात्पञ्चमांशे नहि षाडवत्वम् ।
संवादिनावत्र रिपौ यतो न संवादिनोः स्यादृषभस्य लोपः ॥ ६६२ ॥
षड्जे निषादेऽपि च पञ्चमे च स्यान्मध्यमेंऽशे न किलौडुवत्वम् ।
स्यात्षट्पितापुत्रक एव ताल स्त्रेधा किलैकत्रिचतुष्कलात्मा ॥ ६६३ ॥
यदाभवेदेककलःसचित्रमार्गस्तदा मागधिका च गीतिः ।
भवेद्यदायं द्विकलस्तु गीतिः सम्भाविता वार्तिक एव मार्गः ॥ ६६४ ॥
चतुष्कलश्चेत्सतु दक्षिणः स्यान्मार्ग स्तदानीं पृथुला च गीतिः ।
स्यान्मध्यमग्रामभवा कलोपनता मता मूर्छनिकर्षभादिः ॥ ६६५ ॥
अङ्के तृतीये किल नाटकस्य गाने ध्रुवाया विनियोजनं स्यात् ।
न्यासोऽत्रगान्धारक एववेद्योऽपन्यासको मध्यम एव नान्यः ॥ ६६६ ॥

---

— अथ प्रस्तारः —

1. पा नी सा सा    गा सा पा नी
   तं   बा ल    र   ज   नि
2. सा सा पा पा    मा मा गा गा
   क र ति ल    क भू   प
3. मा पा धा पा    मा पा धप मग
   ण वि भू
4. मा मा मा मा    मा मा मा मा
   तिं
5. धा नी पा मप    धा नी पा पा
6. मा पा मा धनि    पा पा पा पा
7. री गा मा पा    पा पा मा पा
   प्र ण   मा    मि गौ   री
8. री गा मा पा    पा पा मा पा
   व द   ना    र वि

9. पा पा पा पा पा पा पा पा
द् .... .... ....

10. री गा सा सा री गा गा गा
प्री ति क रं

11. गा गा पा धम धा निध पा पा
.... .... .... ....

12 गा पा मा प रिग गा गा गा गा
... ... ... ...

— गीतम् —

तं बालरजनिकरतिलकभूषणविभूतिम् ।
प्रणमामि गौरीवदनारविन्दप्रीतिकरम् ॥ ६६७ ॥

— अथ कैशिकी जातिः —

तत्कैशिकीलक्षणकं वदामः स्वरा विहायर्षभमंशकास्ते ।
अंशो निषादो यदि धैवतो वा न्यासस्तदा पञ्चम एव नान्यः ॥ ६६८ ॥

यदा निषादस्त्वथ धैवतोऽशो न्यासौ च तावेव मतान्तरे तु ।
निषादगान्धारकमध्यमाश्च न्यासा भवन्तीत्यवधारणीयम् ॥ ६६९ ॥

विनर्षभं षाडवतौडुवत्वं स्याद्धैवतस्याप्यृषभस्य लोपात् ।
अत्रर्षभोऽल्पो बहुलो निषादः सपञ्चमः संहतिरङ्गयोः स्यात् ॥ ६७० ॥

सपञ्चमेंऽशे यदि षाडवत्वे नैवर्षभस्यात्र यतो न लोपः ।
अंशो यदा धैवतकस्तदा स्यान्नैवौडुवत्वं रिधयोरलोपात् ॥ ६७१ ॥

स्यात्पट्पितापुत्रक एव तालस्त्रेधा किलैकत्रिचतुष्कलात्मा ।
यदा भवेदेककलः स चित्रमार्गस्तथा मागधिका च गीतिः ॥ ६७२ ॥

भवेद्यदायं द्विकला तु गीतिः संभाविता वार्तिक एव मार्गः ।
चतुष्कलश्चेत्स तु दक्षिणः स्यान्मार्गस्तदानीं पृथुला च गीतिः ॥ ६७३ ॥

स्यात्पञ्चमाङ्के किल नाटकस्य गाने ध्रुवाया विनियोजनं स्यात् ।
गान्धारकः पञ्चमको निषादो न्यासास्त्वपन्यासतया प्रतीताः ॥६७४॥

स्वरास्तु सप्तापि मतान्तरेण विनर्षभं षट् च वदन्ति केचित् ।
स्यान्मध्यमग्रामभवा तु गीतिः स्यान्मूर्च्छना तत्र च हारिणाश्वा ॥

— अथ प्रस्तारः —

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| 1. | पा | धनि | पा | धनि | गा | गा | गा | गा |
| | के | | ली | | ह | | त | |
| 2. | पा | पा | मा | निध | निध | पा | पा | पा |
| | का | | म | त | नु | | | |
| 3. | धा | नी | सा | सा | री | री | री | री |
| | वि | | भ्र | म | वि | ला | | सं |
| 4. | सा | सा | सा | री | गा | मा | मा | मा |
| | ति | ल | क | यु | त | | | |
| 5. | मा | धा | नी | धा | मा | धा | मा | पा |
| | मू | | र्ध्वो | | र्ध्व | बा | | ल |
| 6. | गा | री | सा | धनि | री | री | री | री |
| | सो | | म | नि | भं | | | |
| 7. | गा | री | सा | सा | धा | धा | मा | मा |
| | मु | ख | क | म | लं | | | |
| 8. | गा | गा | गा | मा | मा | निधनि | नी | नी |
| | अ | स | | म | हा | | | ट |
| 9. | गा | गा | नी | नी | गा | गा | गा | गा |
| | क | स | | रो | जं | | | |
| 10. | गा | गा | नी | नी | निध | पा | पा | पा |
| | हृ | दि | सु | ख | दं | | | |
| 11. | मा | पा | मा | पा | पा | पा | मा | मा |
| | प्र | ण | | मा | मि | लो | च | |
| 12. | सा | मा | | गा | निधनि | नी | नी | मा गा |
| | न | वि | | शे | षं | | | |

— गीतम् —

केलीहतकामतनुविभ्रमविलासं
तिलकयुतमूर्ध्वोर्ध्वबालसोमनिभम् ।
मुखकमलमसमहाटकसरोजं
हृदि सुखदं प्रणमामि लोचनविशेषम् ॥ ६

## — अथ मध्यमोदीच्यवती जातिः —

या मध्यमोदीच्यवती तु जातिर्निरूप्यते सा खलु लक्षणेन ।
अंशः स्वरः पञ्चम एव तस्यां चच्चत्पुटस्तत्र चतुष्कलः स्यात् ॥ ६७७ ॥

रिलोपतः षाडवमत्र वेद्यं संपूर्णतायां पुनरंशभिन्नाः ।
अल्पे स्वरास्तत्र भवन्ति सर्वे निगौ तथा पञ्चमधैवतौ च ॥ ६७८ ॥

स्वल्पा भवन्त्यत्र हि षाडवत्वे स्याद्धैवतस्यर्षभकस्य योगः ।
सा मध्यमग्रामभवा तु तस्यां सौवीरिका मूर्च्छनिका च मादिः ॥

(द्व्यष्टौ कलाः) प्रेक्षणके चतुर्थे गाने ध्रुवाया विनियोजनं स्यात् ।
स्यान्मध्यमो न्यास इहाथ षड्जोऽपन्यासतां याति स धैवतश्च ॥

---

### — अथ प्रस्तारः —

1. पा धनि नी नी मा पा नी पा
   दे हा र्ध रू प
2. री री री गा सा रिग गा गा
   म ति कां ति भ म ल
3. नी नी नी नी नी नी नी नी
   म म लें दु कुं द
4. नी नी धप मा निध निध पा पा
   कु मु द नि भं
5. पा पा री री री री री री
   चा मी क रां बु
6. मा रिग सा सध नी नी नी नी
   रु ह दि व्य कां ति
7. मा पा नी सा पा पा गा गा
   प्र व र ग ण पू जि
8. गा पा मा निध नी नी सा सा
   त म जे यं
9. पा पा मा धनि पा पा पा पा
   सु रा भि धु त म नि ल
10. मा पा मा रिग गा गा गा गा
    म नो ज च मं लु

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| 11. | गा | पा | मा | पा | नी | नी | नी | नी |
| | दो | | द | धि | नि | ना | | द |
| 12. | मा | पा | म | परिग | गा | गा | गा | गा |
| | म | ति | | हा | सं | | | |
| 13. | गा | गा | गा | गा | मा | निध | नी | नी |
| | शि | वं | | शां | त | म | सु | र |
| 14. | नी | नी | धप | मा | निध | निध | पा | पा |
| | च | मू | म | थ | नं | | | |
| 15. | री | गा | सा | सा | मा | निधनि | नी | नी |
| | वं | | दे | | त्रै | लो | | क्य |
| 16. | नी | नी | धा | पा | धा | पा | मा | मा |
| | न | त | च | र | णं | | | |

— गीतम् —

देहार्धरूपमतिकान्तिममलममलेन्दुकुन्दकुमुदनिभं
चामीकराम्बुरुहदिव्यकान्तिप्रवरगणपूजितमजेयम् ।
सुराभिष्टुतमनिलमनोजवमम्बुदोदधिनिनादमतिहासं
शिवं शान्तमसुरचमूमथनं वन्दे त्रैलोक्यनतचरणम् ॥ ६८१ ॥

— अथ कार्मारवी जातिः —

कार्मारवीलक्षणमुच्यतेऽस्यामंशा निषादर्षभपञ्चमाश्च ।
सधैवतश्चान्तरमार्गयोगादस्यामनंशा बहवो भवन्ति ॥ ६८२ ॥

गान्धारकोऽत्यन्तबहुर्मिथः स्यादंशस्वाराणामिह संगतिश्च ।
चच्चत्पुटस्तत्र चतुष्कलः स्याद्द्वयष्टौ कला नाटकपञ्चमाङ्के ॥ ६८३ ॥

गाने ध्रुवायां विनियोजनं स्यात्सा मध्यमग्रामगशुद्धमध्या ।
षड्जादिमा मूर्च्छनिका चतुर्थी न्यासः पुनः पञ्चम एव तस्याम् ॥६८४॥
अंशास्त्वपन्यासतयोपदिष्टाः संपूर्णतां नित्यमुपैति सेयम् ।

— अथ प्रस्तारः —

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| 1. | री | री | री | री | री | री | री | री |
| | तं | | | स्था | णु | ल | लि | त |

2. मा गा सा गा सा नी नी नी
वा मां ग स क्त

3. नी मा नी मा पा पा गा गा
भ ति ते जः प्र स र

4. गा पा मा पा नी नी नी नी
सौ धां शु कां तिं

5. री गा सा नी री गा री मा
फ णि प ति भु खं

6. री गा री सा नी धनि पा पा
उ रो वि पु ल सा ग

7. मा पा मा परिग गा गा गा गा
र नि के तं

8. री री गा सम मा मा पा पा
सि त पं न गे न्द्र

9. मा पा मा गरिग गा गा गा गा
म ति कां तं

10. धा नी पा मा धा नी सा सा
ष ण्मु ख वि नो द

11. नी नी नी नी नी नी नी नी
क र प ल्ल वां शु

12. मा मा धा नी सनिनि धा पा पा
लि वि ला स की ल

13. मा पा मा गरिग गा गा गा गा
न वि नो दं

14. नी नी पा धनि गा गा गा गा
प्र ण मा मि दे व

15. सा री गा सा नी नी नी नी
य ज्ञो प वी ति

16. नी नी धा धा पा पा पा पा
नं

— गीतम् —

ं स्थाणुललितवामाङ्गलक्ष्मलितेजःप्रसरसौधांशुकान्ति
फणिपतिभुजं उरोत्रिपुलसागरनिकेतं सितपन्नगेन्द्रमतिकान्तम् ।
मणमुखविनोदकरपल्लवाङ्गुलिविलासकीलनविनोदं
प्रणमामि देवं यज्ञोपवीतिनम् ॥ ६८५ ॥

— अथ गान्धारपञ्चमी जातिः —

गान्धारपञ्चम्यथ वक्ष्यतेऽस्यामंशः पुनः पञ्चम एव नान्यः ।
न्यासांशयोः संगतिरत्र वेद्या मिथः स्वरैरप्यपरैः क्रमेण ॥ ६८६ ॥
तथर्षभस्यापि च मध्यमस्य मिथः स्वरैरप्यपरैस्तु योगः ।
चच्चत्पुटस्तत्र चतुष्कलस्य अष्टौ कला मूर्च्छनिका द्वितीया ॥ ६८७ ॥
सा मध्यमग्रामसमुद्भवा तु गान्धारपूर्वा खलु हारिणाश्वा ।
अङ्के तुरीये खलु नाटकस्य गाने ध्रुवाया विनियोजनं स्यात् ॥ ६८८ ॥
गान्धारको न्यास इहोदितोऽपन्यासौ तथैवर्षभपञ्चमौ च ।

— अथ प्रस्तारः —

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| 1. | पा | मग | मध | नी | धप | मा | धा | नी |
| | कां | | | | | | | |
| 2. | सनिनि | धा | पा | पा | पा | पा | पा | पा |
| | | | | तं | | | | |
| 3. | धा | नी | सा | सा | मा | मा | पा | पा |
| | वा | | मै | | क | दे | | श |
| 4. | नी | नी | नी | नी | नी | नी | नी | नी |
| | प्रे | | खो | | ल | मा | | न |
| 5. | नी | नी | धप | मा | निध | निध | पा | पा |
| | क | म | ल | नि | मं | | | |
| 6. | पा | पा | री | री | री | री | री | री |
| | व | र | सु | र | भि | कु | सु | म |
| 7. | मा | रिग | सा | सध | नी | नी | नी | नी |
| | गं | | धा | | धि | वा | | सि |
| 8. | नी | नी | सा | रिस | री | री | री | री |
| | त | म | नो | | ज्ञ | | | |

2. री गा री गा री री री री
ख चि त ज टं
3. री री गा गा री री मा मा
त्रि दि व न दी स लि ल
4. री गा सा धनि नी नी नी नी
धौ त मु खं
5. नी री नी री धनि धनि पा पा
न ग सू नु प्र ण यं
6. मा पा मा रिग गा गा गा गा
वे द नि धिं
7. री री गा स स मा मा पा पा
प रि णा हि तु हि न
8. मा पा मा रिग गा गा गा गा
शै ल गृ हं
9. धा नी गा गा गा गा गा गा
अ मृ त भ वं
10. पा पा मा रिग गा गा गा गा
गु ण र हि तं
11. नी नी नी नी री री री री
त म व नि र वि श शि
12. री री गा नी सा सा नी नी
ज्व ल न ज ल प व न
13. पा पा मा रिग गा गा गा गा
ग ग न त नुं
14. री री गा सम मा मा पा पा
श र णं व्र जा मि
15. मा मा नी नी सा री गा पा
शु भ म ति कृ त नि ल
16. रिग गा गा गा गा गा गा गा
यं .... ... ...

— गीतम् —

तरुणेन्दुकुसुमखचितजटं त्रिदिवनदीसलिलधौतमुखम् ।
नगसूनुप्रणयं वेदनिधिं परिणाहितुहिनशैलगृहम् ॥
अमृतभवं गुणरहितं तमवनिरविशशिज्वलनजलपवनगगनतनुं
शरणं व्रजामि शुभमतिकृतनिलयम् ॥ ६९३ ॥

॥ रघुनाथभूपविरचिता ॥

# ॥ सङ्गीतसुधा ॥



## — अथ नन्दयन्ती जातिः —

अथोच्यते लक्ष्म तु नन्दयन्त्या अंशो भवेत्पञ्चम एव तस्याम् ।
ग्रहोऽत्र गान्धारक एव नांशो ग्रहांशयोरैक्यमपोद्यतेऽत्र ॥ ६९४ ॥
प्राहुर्ग्रहं पञ्चममेव केचिन्मन्द्रर्षभस्यात्र बहुत्वमुक्तम् ।
स्थानान्तरे तस्य ततोऽल्पता च स्यात्षड्जलोपेन च षाडवत्वम् ॥ ६९५ ॥
स्यान्मध्यमग्रामिकहृष्यकाख्या सा मूर्छना पञ्चमपूर्विकात्र ।
द्वात्रिंशदेवात्र कला भवन्ति चच्चत्पुटश्चाष्टकलोऽत्र तालः ॥ ६९६ ॥
स्यान्नाटकस्य प्रथमे तथाङ्के गाने ध्रुवाया विनियोजनं स्यात् ।
गान्धारको न्यास इहोदितोऽपन्यासौ तथा मध्यमपञ्चमौ द्वौ ॥ ६९७ ॥

---

## — अथ प्रस्तारः —

1. गा गा गा गा पा पा धप मा
   सौ
2. धा धा धा धा धा नी स नि नि धा
3. पा पा पा पा पा पा पा पा
   म्यं
4. धा नी मा पा गा गा गा गा
   वे दां ग वे द
5. मा री गा गा गा गा गा गा
   क र क म ल यो निं
6. मा मा पा पा धा निध पा पा
   त मो र जो वि व

7. धा नी मा पा गा गा गा गा
जि तं

8. गम पा पा पा मा मा गा गा
हरं

9. धा नी मा पा गा गा गा गा
भ व ह र क म ल गृ

10. मा मा मा मा मा मा मा मा
हं

11. री गा मा पा पम पा पा नी
शि वं शां तं सं नि

12. री री री री पा पा मा मा
वे श न म पू र्वं

13. धा नी स नि नि धा पा पा पा पा
भू ष ण ली लं

14. धा नी मा पा गा गा गा गा
उ र गे श भो ग

15. गा पा पा पा धा मा गा मा
भा सु र शु भ पृ थु

16. धा धा नी धा पा पा पा पा
लं

17. री गा मा पा पम पा पा नी
अ च ल प ति सू नु

18. री री री री पा पा पा पा
क र पं क जा म

19. पा पा पा पा धा मा मा मा
ल वि ला स की ल

20. नी पा गा गम गा गा गा गा
न वि नो दं

21. री री गा गा मा मा मा मा
स्फ टि क म णि र ज त

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| 22. | नी | पा | नी | मा | नी | धा | पा | पा | |
| | सि | त | न | व | दु | कू | | ल | |
| 23. | सा | सा | धनि | धा | पा | पा | पा | पा | |
| | क्षी | | रोद् | | सा | | | ग | |
| 24. | मा | पा | मा | परिग | गा | गा | सा | सा | |
| | र | नि | का | | शं | | | | |
| 25. | री | री | गा | गा | मा | मा | पा | पा | |
| | अ | ज | शि | रः | क | पा | | ल | |
| 26. | री | री | री | गा | मा | रिग | मा | मा | |
| | पृ | थु | भा | | | ज | नं | | |
| 27. | मा | नी | पा | नी | गा | गा | गा | गा | |
| | वं | | दे | | सु | ख | दं | | |
| 28. | मा | मा | पा | पा | धा | धनि | निध | मा | |
| | ह | र | दे | | ह | म | म | ल | |
| 29. | धा | धा | सा | नी | धा | नी | पा | पा | |
| | म | धु | सू | | द | न | | सु | |
| 30. | री | री | री | री | मा | पा | धा | मा | |
| | ते | | जो | | धि | क | | सु | |
| 31. | नी | नी | नी | नी | धा | पा | मा | मा | |
| | | ग | ति | यो | | | | | |
| 32. | मा | परि | ग | गा | गा | गा | गा | गा | गा |
| | | | | निं | | | | | |

— गीतम् —

सौम्यं वेदाङ्गवेदकरकमलयोनिं तमोरजोविवर्जितं हरं
भवहरकमलगृहं शिवं शान्तं सन्निवेशनमपूर्व
भूषणलीलमुरगेशभोगभासुरशुभपृथुलम् ।
अचलपतिसूनुकरपङ्कजामलविलासकीलनविनोदम्
स्फटिकमणिरजतसितनवदुकूलक्षीरोद्सागरनिकाशम्
अजशिरःकपालपृथुभाजनं वन्दे सुखदं
हरदेहममलमधुसूदनसुतेजोऽधिकसुगतियोनिम् ॥ ६१८ ॥

॥ रघुनाथभूपविरचिता ॥

# ॥ सङ्गीतसुधा ॥



## — अथ नन्दयन्ती जातिः —

अथोच्यते लक्ष्म तु नन्दयन्त्या अंशो भवेत्पञ्चम एव तस्याम् ।
ग्रहोऽत्र गान्धारक एव नांशो ग्रहांशयोरैक्यमपोद्यतेऽत्र ॥ ६९४ ॥
प्राहुर्ग्रहं पञ्चममेव केचिन्मन्द्रर्षभस्यात्र बहुत्वमुक्तम् ।
स्थानान्तरे तस्य ततोऽल्पता च स्यात्षड्जलोपेन च षाडवत्वम् ॥ ६९५ ॥
स्यान्मध्यमग्रामिकहृष्यकाख्या सा मूर्छना पञ्चमपूर्विकात्र ।
द्वात्रिंशदेवात्र कला भवन्ति चच्चत्पुटश्चाष्टकलोऽत्र तालः ॥ ६९६ ॥
स्यान्नाटकस्य प्रथमे तथाङ्के गाने ध्रुवाया विनियोजनं स्यात् ।
गान्धारको न्यास इहोदितोऽपन्यासौ तथा मध्यमपञ्चमौ द्वौ ॥ ६९७ ॥

---

## — अथ प्रस्तारः —

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| 1. | गा | गा | गा | गा | पा | पा | धप | मा | | |
| | सौं | | | | | | | | | |
| 2. | धा | धा | धा | धा | धा | नी | स | नि | नि | धा |
| 3. | पा | पा | पा | पा | पा | पा | पा | पा | | |
| | म्यं | | | | | | | | | |
| 4. | धा | नी | मा | पा | गा | गा | गा | गा | | |
| | वे | | दां | | ग | वे | | द् | | |
| 5. | मा | री | गा | गा | गा | गा | गा | गा | | |
| | क | र | क | म | ल | यो | | निं | | |
| 6. | मा | मा | पा | पा | धा | निध | पा | पा | | |
| | त | मो | र | जो | वि | ध | | | | |

7. धा नी मा पा गा गा गा गा
जि तं

8. गम पा पा पा मा मा गा गा
हरं

9. धा नी मा पा गा गा गा गा
भ व ह र क म ल गृ

10. मा मा मा मा मा मा मा मा
हं

11. री गा मा पा पम पा पा नी
शि वं शां तं सं नि

12. री री री री पा पा मा मा
वे श न म पू वँ

13. धा नी स नि नि धा पा पा पा पा
भू प ण ली लं

14. धा नी मा पा गा गा गा गा
उ र गे श भो ग

15. गा पा पा पा धा मा गा मा
भा सु र शु भ पृ थु

16. धा धा नी धा पा पा पा पा
लँ

17. री गा मा पा पम पा पा नी
अ च ल प ति सू नु

18. री री री री पा पा पा पा
क र पं क जा म

19. पा पा पा पा धा मा मा मा
ल वि ला स की ल

20. नी पा गा गम गा गा गा गा
न वि नो दं

21. री री गा गा मा मा मा मा
स्फ टि क म णि र ज त

गीतम् ॥

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| 22. | नी | पा | नी | मा | नी | धा | पा | पां | |
| | सि | त | न | व | दु | कू | | ल | |
| 23. | सा | सा | धनि | धा | पा | पा | पा | पा | |
| | क्षी | | रोद् | | सा | | | ग | |
| 24. | मा | पा | मा | परिग | गा | गा | सा | सा | |
| | र | नि | का | | शं | | | | |
| 25. | री | री | गा | गा | मा | मा | पा | पा | |
| | अ | ज | शि | रः | क | पा | | ल | |
| 26. | री | री | री | गा | मा | रिग | मा | मा | |
| | पृ | थु | भा | | | ज | नं | | |
| 27. | मा | नी | पा | नी | गा | गा | गा | गा | |
| | वं | | दे | | सु | ख | दं | | |
| 28. | मा | मा | पा | पा | धा | धनि | निध | मा | |
| | ह | र | दे | | ह | म | म | ल | |
| 29. | धा | धा | सा | नी | धा | नी | पा | पा | |
| | म | धु | सू | | द | न | | सु | |
| 30. | री | री | री | री | मा | पा | धा | मा | |
| | ते | | जो | | धि | क | | सु | |
| 31. | नी | नी | नी | नी | धा | पा | मा | मा | |
| | | ग | ति | यो | | | | | |
| 32. | मा | परि | ग | गा | गा | गा | गा | गा | गा |
| | | | | निं | | | | | |

---

— गीतम् —

सौम्यं वेदाङ्गवेदकरकमलयोनिं तमोरजोविवर्जितं हरं
भवहरकमलगृहं शिवं शान्तं सन्निवेशनमपूर्व
भूषणलीलमुरगेशभोगभासुरशुभपृथुलम् ।
अचलपतिसूनुकरपङ्कजामलविलासकीलनविनोदम्
स्फटिकमणिरजतसितनवदुकूलक्षीरोदसागरनिकाशम्
अजशिरःकपालपृथुभाजनं वन्दे सुखदं
हरदेहममलमधुसूदनसुतेजोऽधिकसुगतियोनिम् ॥ ६९.८ ॥

---

— अथ तालादिप्रकरणम् —

तालादयो यास्त्विह नोपदिष्टास्तासां च तालादि निरूपयामः ।
अनुक्तताले किल जातिभेदे चच्चत्पुटो वापि च पञ्चपाणिः ॥ ६९९ ॥
चित्रो भवेदेककलेऽथ वृत्तिस्ताले निरुक्ता द्विकले क्रमेण ।
चतुष्कले दक्षिणनामधेये ताले हि मार्गं समुदीरयन्ति ॥ ७०० ॥
स्यान्मागधी चैककले तु ताले संभाविता स्याद् द्विकले निरुक्ता ।
चतुष्कले सा पृथुलाभिधानाप्यनुक्तगीतिष्विति गीतयस्ताः ॥ ७०१ ॥
अंशस्वरस्यैव रसोऽत्र जातेस्तदंशभाजोऽपि निरूपणीयः ।
अनुक्तरागेऽपि च जातिभेदे तज्जन्यरागः स्फुरतीति वेद्यम् ॥ ७०२ ॥
तज्जन्यरागानखिलांश्च रागविवेचने द्राक् प्रतिपादयामः ।
उक्ताः किलाष्टादश जातयस्ता ब्रह्मोदितैरेव पदैः प्रयुक्ताः ॥ ७०३ ॥
शशाङ्कमौलेः स्तवने पुनन्ति सद्यो महापातकिनोऽपि मर्त्यान् ।
यथैव सामानि ऋचो यजूंषि नैवान्यथा कैश्चिदिह क्रियन्ते ॥ ७०४ ॥
सामप्रभूता अपि जातयोऽमूरिहान्यथाष्टादश नैव कार्याः ।
प्रयुज्यमानास्तु यथावदेताः श्रेयांसि भूयांसि दिशन्ति सद्यः ॥ ७०५ ॥

— अथ कपालानि (शुद्धजातिजन्यानि) —

ततः कपालानि च सप्त शुद्धजात्युद्भवानि प्रतिपादयामः ।

— उत्पत्तिः —

भिक्षाटवेषेण पिनाकिना प्राग्गीतासु षाड्जीप्रमुखासु तासु ॥ ७०६ ॥
तत्तादृशो यद्रसपारवश्यद्रवीभवत्तन्मुकुटीसुधांशोः ।
निष्यन्दमानामृतजातजीवतद्भूषणब्रह्मकपालकानि ॥ ७०७ ॥
यस्मादगायन्ननुसृत्य गीतिं तां शांभवीं तेन कपालसंज्ञाम् ।
एतानि गीतानि परं भजन्तीत्युदीरयन्त्यत्र मतङ्गमुख्याः ॥ ७०८ ॥

— षाड्जीकपालानि —

वदामि षाड्जीजनितं कपालमंशो ग्रहश्चात्र तु षड्ज एव ।
इहर्षभो न्यासतया प्रतीतोऽपन्यासगान्धारकनामधेयः ॥ ७०९ ॥

बहुत्वगान्धारकमध्यमौ द्वावल्पे निषादर्षभपञ्चमाश्च ।
सधैवता लङ्घ्य इहर्षभः स्यात्कलाः किल द्वादश संप्रदिष्टाः ॥ ७१० ॥

— आर्षभीकपालानि —

अथार्षभीजातिकपाललक्ष्म वक्ष्यामि तत्रर्षभ एव चांशः ।
भवेदपन्यासतया स एव स्यान्मध्यमो न्यासतया प्रतीतः ॥ ७११ ॥
निषादगान्धारकपञ्चमास्तु सधैवताः स्वल्पतया च वेद्याः ।
अल्पस्तु षड्जो नितरां तथाष्टौ कलास्तु शेषं पुनरार्षभीवत् ॥ ७१२ ॥

— गान्धरीकपालानि —

गान्धारिकाजातिकपाललक्ष्म वक्ष्यामि गान्धारक एव चांशः ।
न्यासोऽप्यपन्यास इह ग्रहश्च स एव षड्जर्षभगास्तथात्वे ॥ ७१३ ॥
स्याद्धैवतः स्याद्बहुलस्तथैव स्यादौडुवत्वं रिपयोर्विलोपात् ।
अष्टौ कलास्तत्र भवन्ति शिष्टं गान्धारिकायामिव सर्वमूह्यम् ॥ ७१४ ॥

— मध्यमाकपालानि —

अथोच्यते मध्यमिकाकपाललक्ष्माधुना मध्यम एष चांशः ।
न्यासोऽप्यपन्यास इह ग्रहश्च स एव तत्रेत्यवधारणीयम् ॥ ७१५ ॥
अल्पे निषादर्षभपञ्चमाः सगान्धारकास्तत्र कला नवैव ।

— पञ्चमिकाकपालानि —

अथोच्यते पञ्चमिकाकपाललक्ष्माधुनास्मिन्नृषभो मतोऽशः ॥ ७१६ ॥
षड्जो ग्रहस्तत्र निषादषड्जौ गान्धारिका मध्यमधैवतौ च ।
अल्पे भवन्त्यत्र कला हि चाष्टौ स्यात्पञ्चमीवत्परिशिष्टमत्र ॥ ७१७ ॥

— धैवतीकपालानि —

अथोच्यते धैवतिकाकपाललक्ष्माधुनांशः पुनरत्र षड्जः ।
रिगाविहाल्पौ नितरां तथापन्यासौ बहू मध्यमधैवतौ च ॥ ७१८ ॥
अष्टौ कलाः शिष्टमिहात्र षाड्जीजाताविव स्यादखिलं प्रयोज्यम् ।

## — नैषादीकपालानि —

नैषादिकाजातिकपाललक्ष्म वक्ष्ये ग्रहोंऽशोऽपि च षड्ज एव ॥ ७१९ ॥
न्यासश्च वेद्यौ च रिगाविहाल्पौ निषादको धैवतमध्यमौ च ।
भवन्त्यमुष्मिन्बहुलाः किलाष्टौ कलाः कपालान्युदितानि सप्त ॥ ७२० ॥
ब्रह्मोदितैरेव पदैः स्वरैश्च गायेत्कपालान्युदितानि सप्त ।
कल्याणभूमीधरकार्मुकस्य स्तवेन कल्याणततीरुपैति ॥ ७२१ ॥

## — अथ कम्बलानि —

अथोच्यते कम्बलगानलक्ष्म चण्डीशितुः कुण्डलिकाप्रजातः ।
यत्कुण्डली कम्बलनामधेयो जगौ ततः कम्बलनामतास्य ॥ ७२२ ॥
अत्र ग्रहोंऽशोऽपि च पञ्चमोऽपन्यासो बहुः स्यादृषभस्वरश्च ।
न्यासस्तु षड्जो मधगास्तथाल्पे तत्पञ्चमीजातिसमुद्भवश्च ॥ ७२३ ॥
अत्र स्वराल्पत्वबहुत्वयोगाद्भवन्ति भेदा बहवस्तथापि ।
नोक्ता मया विस्तरभीरुणात्र ग्रन्थान्तरे ते तु विलोकनीयाः ॥ ७२४ ॥
अनेन गानेन पुरा पुरारिर्ददावभीष्टं किल कम्बलाय ।
अद्यापि तद्गानकृतां जनानामभीष्टदः स्यात्स शिवः प्रहृष्टः ॥ ७२५ ॥
ब्रह्मोदितान्येव पुरा पदानि कपालगानस्य वयं लिखामः ।

## — षाड्जीकपालपदानि —

झुं द्रं झुंद्रं ॥ खट्वाङ्गधरम् ॥ १ ॥ दंष्ट्राकरालम् ॥ २ ॥ तटित्सदृशजिह्वम् ॥ ३ ॥ हौं हौं हौं हौं हौं हौं हौं हौम् ॥ ४ ॥
बहुरूपवदनम् ॥ ५ ॥ घनघोरनादम् ॥ ६ ॥ हौं हौं हौं हौं हौं हौं हौं हौम् ॥ ७ ॥ हौं हौं हौं हौं हौं हौं हौं हौम् ॥ ८ ॥
नृमुण्डमण्डितम् ॥ ९ ॥ हूं हूं कह कह हूं हूं ॥ १० ॥ कृतविकट-मुखम् ॥ ११ ॥ नमामि देवं भैरवम् ॥ १२ ॥

## — आर्षभीकपालपदानि —

झुंद्रं झुंद्रं ॥ दंष्ट्राकरालम् ॥ १ ॥ औं औं हौं हौं हौं हौं हौं हौम् ॥ २ ॥
हौं हौं हौं हौं हौं हौं हौं हौम् ॥ ४ ॥

वरसुरभिकुसुम ॥ ५ ॥ चर्चितगात्रम् ॥ ६ ॥ कपालहस्तम् ॥ ७ ॥ नमामि देवम् ॥ ८ ॥

---

— गान्धारीकपालपदानि —

चलत्तरङ्ग ॥ १ ॥ भङ्गुरम् अ ॥ २ ॥ नेकरेणु ॥ ३ ॥ पिञ्चरं सु ॥ ४ ॥ रासुरैः सुसेवितम् पु ॥ ५ ॥ नातु जाह्न ॥ ६ ॥ वीजलम् मां ॥ ७ ॥ बिन्दुभिः ॥ ८ ॥

---

— मध्यमाकपालपदानि —

शूलकपाल ॥ १ ॥ पाणित्रिपुरविनाशि ॥ २ ॥ शशाङ्कधारिणम् ॥ ३ ॥ त्रिनयनत्रिशूलम् ॥ ४ ॥ सततमुमया सहि ॥ ५ ॥ तं वरदं हैं हैं हैं हैम् । ६ ॥ हैं हैं हैम् ॥ ७ ॥ हैं हैं हैं हैं हैं हैम् ॥ ८ ॥ नौमि महादेवम् ॥ ९ ॥

---

— पञ्चमीकपालपदानि —

जय विषमनयन ॥ १ ॥ मदनतनुदहन ॥ २ ॥ वरवृषभगमन ॥ ३ ॥ असुरपुरदहन ॥ ४ ॥ नतसकलभुवन ॥ ५ ॥ सितकमलवदन ॥ ६ ॥ भव मे भयहर ॥ ७ ॥ भव शरणम् ॥ ८ ॥

---

— धैवतीकपालपदानि —

अग्निज्वालाशि ॥ १ ॥ खावलि ॥ २ ॥ मांसशोणित ॥ ३ ॥ भोजिनि ॥ ४ ॥ सर्वाहारि ॥ ५ ॥ निर्मांसे ॥ ६ ॥ चापर्णे ॥ ७ ॥ नमोऽस्तु ते ॥ ८ ॥

---

— नैषादीकपालपदानि —

सरसगजचर्मपटम् ॥ १ ॥ भीमभुजङ्गमानद्धजटम् ॥ २ ॥ कह कह हुङ्कृतविकटमुखम् ॥ ३ ॥ नम तं शिवं हरमजितम् ॥ ४ ॥ चण्ड-मुण्डमजेयम् ॥ ५ ॥ कपालमण्डितमुकुटम् ॥ ६ ॥ कामदर्पविध्वं-सकरम् ॥ ७ ॥ नम तं हरं परमशिवम् ॥ ८ ॥

---

— अथ गीतिलक्षणम् —

प्रस्तावने जातिनिरूपणस्य या गीतयः पूर्वमिहोपदिष्टाः ॥ ७२६ ॥
तासामिदानीं किल लक्षणानि वक्ष्यामहे गायकबोधहेतोः ।
त्रिषष्ट्यलंकारयुता चतुर्भिः स्थाय्यादिभिः संमिलिता च वर्णैः ॥ ७२७ ॥
विलम्बितेनापि च मध्यमेन द्रुतेन शोभां दधती लयेन ।
गानक्रिया गीतिरिहोपदिष्टा चतुर्विधा सा गदिता मुनीन्द्रैः ॥ ७२८ ॥
स्यान्मागधीनामवती किलाद्या तथार्धमागध्यभिधा द्वितीया ।
संभाविताख्यानवती तृतीया भवेच्चतुर्थी पृथुलाभिधाना ॥ ७२९ ॥

— मागधी —

क्रमेण लक्ष्माणि पदानि तासां सा मागधी लक्षणमुच्यतेऽत्र ।
विलम्बितेनैव पदेन युक्तं गायेत्कलायां पदमादिमायाम् ॥ ७३० ॥
पदान्तरेणापि युतं तदेव गायेत्पदं मध्यलयेन युक्तम् ।
कलां द्वितीयामधिकृत्य सम्यक्कलां तृतीयामधिकृत्य पश्चात् ॥ ७३१ ॥
ते द्वे तृतीयेन पदेन युक्ते गायेद्द्रुतेनैव लयेन सार्धम् ।
इति त्रिरावृत्तपदां वदन्ति तां मागधीं मागधराजहृद्याम् ॥ ७३२ ॥

— मागधीपदानि —

| मा | गा | माधा | धनि | धनि | सनि | धा |
|---|---|---|---|---|---|---|
| दे | | वं | दे | वं | रु | द्रं |

| रिग | रिग | मग | रिस |
|---|---|---|---|
| देवं | रुद्रं | वं | दे |

— अर्धमागधी —

अथार्धमागध्यपि लक्ष्यतेऽत्र विलम्बितेनैव पदेन युक्तम् ।
गायेत्कलायां पदमादिमायां पदान्तरेणाथ युतं तदर्धम् ॥ ७३३ ॥
गायेत्पुनर्मध्यलयेन युक्तं कलां द्वितीयामधिकृत्य सम्यक् ।
कलां तृतीयामधिकृत्य पश्चादर्धं द्वितीयस्य पदस्य गायेत् ॥ ७३४ ॥
पदान्तरं च द्रुतमानयुक्तं सैवार्धमागध्यभिधावती स्यात् ।

— अथ गीतिलक्षणम् —

प्रस्तावने जातिनिरूपणस्य या गीतयः पूर्वमिहोपदिष्टाः ॥ ७२६ ॥
तासामिदानीं किल लक्षणानि वक्ष्यामहे गायकबोधहेतोः ।
त्रिषष्ट्यलंकारयुता चतुर्भिः स्थाय्यादिभिः संमिलिता च वर्णैः ॥ ७२७ ॥
विलम्बितेनापि च मध्यमेन द्रुतेन शोभां दधती लयेन ।
गानक्रिया गीतिरिहोपदिष्टा चतुर्विधा सा गदिता मुनीन्द्रैः ॥ ७२८ ॥
स्यान्मागधीनामवती किलाद्या तथार्धमागध्यभिधा द्वितीया ।
संभाविताख्यानवती तृतीया भवेच्चतुर्थी पृथुलाभिधाना ॥ ७२९ ॥

---

— मागधी —

क्रमेण लक्ष्माणि पदानि तासां सा मागधी लक्षणमुच्यतेऽत्र ।
विलम्बितेनैव पदेन युक्तं गायेत्कलायां पदमादिमायाम् ॥ ७३० ॥
पदान्तरेणापि युतं तदेव गायेत्पदं मध्यलयेन युक्तम् ।
कलां द्वितीयामधिकृत्य सम्यक्कलां तृतीयामधिकृत्य पश्चात् ॥ ७३१ ॥
ते द्वे तृतीयेन पदेन युक्ते गायेद्द्रुतेनैव लयेन सार्धम् ।
इति त्रिरावृत्तपदां वदन्ति तां मागधीं मागधराजहृद्याम् ॥ ७३२ ॥

---

— मागधीपदानि —

| मा | गा | माधा | धनि | धनि | सनि | धा |
|---|---|---|---|---|---|---|
| दे | | वं | दे | वं | रु | द्रं |

ताले गुरुद्वन्द्वलघुप्लुताढ्ये चच्चत्पुटे त्वाद्यगुरुद्वयं तु ।
तद्वाक्यरीत्या च गुणेन युक्तं चित्रार्हमेकैकमनुप्रयुज्य ॥ ७४० ॥
तद्दक्षिणाख्ये ध्रुवकादिभिस्तु मात्राभिरष्टाभिरथ प्रयुञ्ज्यात् ।
सा मागधीगीतिरुदाहृतैवं तालाश्रयेणापि तथा मुनीन्द्रैः ॥ ७४१ ॥
चच्चत्पुटस्यात्र लघुं तृतीयं प्रयुज्य पूर्वं जगणार्धयुक्तम् ।
आद्येन मात्राद्वितयेन चान्त्यं मात्राद्वयेनापि युतं प्रयुञ्ज्यात् ॥ ७४२ ॥
प्लुतं तु सार्धं छगणेन युक्तं मात्राभिरष्टाभिरथ प्रयुञ्ज्यात् ।
द्विरीरितान्त्यद्वितयान्विताभिस्तदर्धमागध्युदिता मुनीन्द्रैः ॥ ७४३ ॥
तालान्तरे गीतिरितीयमूह्या संभाविताలक्षणमुच्यतेऽत्र ।
चच्चत्पुटे तु द्विकले तु वृत्तिर्मार्गे मता भूरिगुरुः किलैषा ॥ ७४४ ॥
चच्चत्पुटे तत्र चतुष्कले तु स्याद्दक्षिणे भूरिलघुस्तथान्या ।
निरूपितैवं पृथुला तयोस्तु शिष्टं यथापूर्वमिहावधार्यम् ॥ ७४५ ॥
सदाशिवब्रह्मशिवाञ्जनेयशिलादसून्वादिमतानुरोधात् ।
मतङ्गशार्दूलकदत्तिलादिप्रणीतशास्त्राणि मुहुर्विचार्य ॥ ७४६ ॥
ग्रन्थान्विलोक्याधुनिकैर्हरीन्द्रश्रीशार्ङ्गदेवप्रमुखैः प्रणीतान् ।
आकर्ण्य लक्ष्याणि च तत्र तत्र सत्संप्रदायेन समागतानि
कृत्वैकवाक्यं सकलं स्वबुद्ध्या सम्यक् स्वराध्याय इह प्रणीतः ॥ ७४७ ॥

॥ इति रघुनाथभूपरचितायां सङ्गीतसुधायां
प्रथमः स्वराध्यायः समाप्तः ॥

॥ रघुनाथभूपविरचिता ॥

# ॥ सङ्गीतसुधा ॥

— सङ्गीतसुधायां —

## ॥ द्वितीयो रागाध्यायः ॥

पूर्वैर्ह्यलंकारनिरूपणस्य स्याद्रक्तिलाभः फलमित्यवादि ।
रागोपयुक्ता अपि जातिमुख्या निरूपिताः प्राथमिके समस्ताः ॥ १ ॥

रागस्वरूपं च तदीयभेदोऽध्याये द्वितीयेऽथ निरूप्यतेऽत्र ।
यद्रज्यते तेन जनः समस्तो रागाभिधानः प्रथितः स तेन ॥ २ ॥

यद्वा जनान्रञ्जयतीति चास्य व्युत्पत्तिमन्ये प्रतिपादयन्ति ।
विभूषितो यः स्वरवर्णमुख्यैर्यः श्रोतृचित्तान्यनुरञ्जयेच्च ॥ ३ ॥

एवं मतङ्गेन तु रागशब्दो व्युत्पादितः कर्तृघञाश्रयेण ।
रूढोऽश्वकर्णादिवदेष योगरूढोऽथ वा पङ्कजशब्दवत्स्यात् ॥ ४ ॥

स्याद्यौगिको मण्डपशब्दवद्वा स्यात्सर्वथा रञ्जक एव रागः ।

---

### — दशविधरागाः —

दशप्रकाराः कथिताश्च रागास्ते ग्रामरागाः प्रथमाः प्रतीताः ॥ ५ ॥

अथोपरागाः कथिता द्वितीयास्ततस्तृतीयाः खलु शुद्धरागाः ।
भाषाश्चतुर्थास्त्वितरे विभाषाः षष्ठास्तथैवान्तरभाषिकाख्याः ॥ ६ ॥

रागाङ्गसंज्ञाः खलु सप्तमाश्च भाषाङ्गसंज्ञाः पुनरष्टमास्ते ।
क्रियाङ्गसंज्ञा नवमाः प्रदिष्टा उपाङ्गसंज्ञा दशमा भवन्ति ॥ ७ ॥

---

### — गीतिभेदाः —

ते ग्रामरागाः खलु पञ्चभेदाः पञ्चापि गीतीः स्वयमाश्रिता यत् ।
शुद्धा च भिन्ना च तथैव गौडी स्याद्वेसरा तत्र भवेच्चतुर्थी ॥ ८ ॥

साधारणी पञ्चमिका तु गीतिर्दुर्गामतज्ञैरिति पञ्चधोक्ता ।
अपूर्वगीत्यन्तरकल्पनायां स्याद्गौरवं तेन पुरा निरुक्ताः ॥ ९ ॥
स्यान्मागधी चार्धपदादिमा च संभाविताऽन्या पृथुला चतुर्थी ।
चत्वार एवेह भवन्ति गीतिभेदाः किलैवं भरतोपदिष्टाः ॥ १० ॥
दुर्गामतात्पञ्च तु गीतयस्ता भाषाविभाषासहितास्तु सप्त ।
एवं मतङ्गस्य मते निरुक्ता भाषाविभाषान्तरभाषिकाख्याः ॥ ११ ॥
तिस्रस्तु ता याष्टिकसंमताः स्युर्भाषैव शार्दूलमते तु गीतिः ।
आश्रित्य दुर्गामतमेव सम्यक्ताः शार्ङ्गदेवेन तु पञ्चधोक्ताः ॥ १२ ॥
मतप्रभेदेन तु गीतिभेदानुदीर्य तल्लक्षणमुच्यतेऽथ ।
शुद्धा भवेत्सा सरलैः स्वरैर्या ससौकुमार्यैरपि संयुता च ॥ १३ ॥
स्वरैश्च सूक्ष्मैः सहिता तु वक्रैर्भिन्ना द्वितीया गमकैश्च हृद्यैः ।
ओहाटिका हृद्यतमैः स्वरैस्तु स्थानत्रयाखण्डितवर्त्तना च ॥ १४ ॥
स्थानत्रये मन्द्रमुखैश्च गाढैः समन्विता या गमकैस्तु गौडी ।
मन्द्रैः स्वरैः सातिशयैर्द्रुतैश्च सकम्पितैर्या मृदुभिः समेता ॥ १५ ॥
ओहाटिका सा चिबुके हृदिस्थे मतेयमोकारहकारयोगात् ।
स्थाय्यादिवर्णेष्वतिरक्तियुक्ता युक्ता स्वरैः स्यादिह वेगवद्भिः ॥ १६ ॥
वेगस्वराख्या खलु रागगीतिस्तां वेसराख्यां च वदन्ति सर्वे ।
शुद्धागतेन स्वरगार्जवेन भिन्नाजुषा वक्रतया स्वराणाम् ॥ १७ ॥
गौडीजुषा गाढतया च वेगयुक्तैः स्वरैर्वेसरिकागतैश्च ।
एवं चतुर्गीतिगुणैरुपेता साधारणी गीतिषु पञ्चमी स्यात् ॥ ॥ १८ ॥
शुद्धादिगीत्याश्रयणेन रागाः शुद्धादिसंज्ञाः स्वयमाश्रयन्ते ।
ते ग्रामरागाः प्रथमं भवन्ति त्रिंशत्तथाष्टावुपरागसंज्ञाः ॥ १९ ॥
रागास्तथा विंशतिरेव तेषु षडुत्तराः स्युर्नवतिस्तु भाषाः ।
विभाषिका विंशतिरत्र रागास्ततश्चतस्रोऽन्तरभाषिकाश्च ॥ २० ॥
एकोत्तरा विंशतिरत्र रागाङ्गानीह भाषाङ्गपदाभिधास्तु ।
रागाः पुनर्विंशतिरप्युपाङ्गरागाः पुनस्त्रिंशदिहोपदिष्टाः ॥ २१ ॥
भवन्ति ते पञ्चदश क्रियाङ्गान्येवं किलोक्ता दश रागभेदाः ।
ते ग्रामरागादिपरम्परायां जातांस्तु रागान्सकलान्मिलित्वा ॥ २२ ॥
स्यातां चतुःषष्ट्यधिके शते द्वे लक्ष्यस्वरूपं च निरूपयामः ।

---

— आलापलक्षणम् —

रागस्वरूपाणि विविच्य वक्तुमालापसाधारणलक्ष्म वक्ष्ये ॥ २३ ॥
ग्रहांशयोस्तारकमन्द्रयोश्च न्यासस्य चापन्यसनस्वरस्य ।
तथा स्वराल्पत्वबहुत्वयोश्च संपूर्णभावौडुवषाडवानाम् ॥ २४ ॥
यत्रास्य सर्वं परिदृश्यतेऽभिव्यक्तिः स आलापपदाभिधेयः ।

— सप्त शुद्धाः षड्जग्रामरागाः —

॥ शुद्धकैशिकमध्यमः ॥ १ ॥

जातेश्च षड्जादिममध्यमा या जातश्च कैशिक्यभिधानजातेः ॥ २५ ॥
हीनस्तथैवर्षभपञ्चमाभ्यां तारश्च षड्जग्रहकस्तदंशः ।
स्यान्मध्यमन्यासयुगौडुवश्चावरोहिवर्णेन समन्वितश्च ॥ २६ ॥
तदा प्रसन्नान्तपदाभिधेयालङ्कारवानुत्तरमन्द्रया च ।
षड्जाद्यया मूर्छनया समेतो युतोऽल्पगान्धारककाकलीभ्याम् ॥ २७ ॥
वीरे च रौद्रेऽपि रसेऽद्भुते च प्रयोगवान्निर्वहणाख्यसंधौ ।
चन्द्रप्रियः प्रातरयं प्रयोज्यो धन्नासिरागस्य च हेतुभूतः ॥ २८ ॥
शुद्धादिमः कैशिकमध्यमोऽत्र धन्नासिवत्सर्वमितोऽन्यदूह्यम् ।

— शुद्धसाधारितः ॥ २ ॥ —

तच्छुद्धसाधारितलक्ष्म वक्ष्ये जातः स षड्जादिममध्यमायाम् ॥ २९ ॥
तारस्थषड्जोंऽश इह ग्रहश्चाप्यल्पौ तु गान्धारनिषादकौ स्तः ।
स्यान्मध्यमन्यासयुतश्च पूर्णः षड्जाद्यया मूर्छनयाद्ययाढ्यः ॥ ३० ॥
वर्णेन युक्तोऽप्यवरोहिणासौ तथा प्रसन्नान्तविभूषितश्च ।
सूर्यप्रियः स्यादिह वीररौद्ररसे प्रयोज्यः किल गर्भसंधौ ॥ ३१ ॥
स्याद्वासराद्यप्रहरे च गेयो जयप्रदो रक्तिविवर्धकश्च ।
मुखारिरागानुकृतिप्रवीणः स्याच्छुद्धसाधारितराग एवम् ॥ ३२ ॥

— षड्जग्रामः ॥ ३ ॥ —

जातश्च षड्जादिममध्यमायां तारस्थषड्जोंऽश इह ग्रहश्च ।
स्यान्मध्यमन्यासयुतश्च पूर्णोऽपन्यासतां षड्ज इह प्रयाति ॥ ३३ ॥

वर्णेन चासावववरोहिणाढ्यं भवेत्प्रसन्नादिविभूषितश्च ।
षड्जाद्यया मूर्छनयाद्ययाढ्यः समन्वितश्चान्तरकाकलीभ्याम् ॥ ३४ ॥
वीरे च रौद्रे च रसेऽद्भुते च द्वितीयसंधावपि नाटकस्य ।
प्रयोजनीयो गुरुदेवताको वर्षासु गेयः प्रथमेऽह्नि यामे ॥ ३५ ॥
षड्जादिमग्रामपदाभिधेयो रागोऽयमस्माभिरिह प्रदिष्टः ।

---

— मध्यमग्रामरागाः —

॥ शुद्धपञ्चमः ॥ ४ ॥

ते मध्यमग्रामभवास्तु रागाश्चत्वार एतानिह लक्षयामः ॥ ३६ ॥
स्यान्मध्यमापञ्चमिकाख्यजात्योर्जातो भवेदत्र च पञ्चमोंऽशः ।
न्यासो ग्रहश्चैष तथा निषादगान्धारयोरल्प इह प्रयोगः ॥ ३७ ॥
शुद्धादिमः पञ्चम एव रागस्त्वंशानुरोधात्तदितोऽन्यदूह्यम् ।

---

— मध्यमग्रामः ॥ ५ ॥ —

जात्या च गान्धारिकया च पञ्चम्यभिख्यया मध्यमया च जातः ॥ ३८ ॥
सकाकलीकोऽपि च मन्द्रषड्जग्रहांशकः स्यादिति मध्यमोऽन्त्यः ।
सौवीरिका मूर्छनिका समादिं श्रितः प्रसन्नादिविभूषितश्च ॥ ३९ ॥
वर्णेन युक्तोऽप्यवरोहिणासौ प्रयोजनीयः प्रथमे च संधौ ।
हास्ये च शृङ्गाररसे च गेयो ग्रीष्मे दिनस्य प्रथमे तु यामे ॥ ४० ॥
स्यान्मध्यमग्रामपदाभिधानो रागस्ततोऽन्यत्पुनरूहनीयम् ।

---

— षाडवः ॥ ६ ॥ —

विकारिणी मध्यमिका तु जातिर्यत्कारणं षाडवनामकोऽसौ ॥ ४१ ॥
न्यासोंऽशको मध्यम एव तस्य ग्रहस्वरस्तारकमध्यमः स्यात् ।
समन्वितश्चान्तरकाकलीभ्यां वर्णेन युक्तो ह्यवरोहिणा च ॥ ४२ ॥
सौवीरिका मूर्छनिकाऽस्य मादिस्तथा प्रसन्नान्तविभूषितोऽसौ ।
प्रयोजनीयः स तु पूर्वरङ्गे सहास्यशृङ्गारविभावकश्च ॥ ४३ ॥
शुक्रस्यसंतोषमयं तनोति प्रगे प्रगेयः शुभरक्तिदः स्यात् ।

---

— शुद्धकैशिकः ॥ ७ ॥ —

अथोच्यते संप्रति शुद्धकैशिकाख्यस्य रागस्य च लक्ष्म सम्यक् ॥ ४४ ॥
तारस्थषड्जोंऽश इह ग्रहश्च स्यान्मध्यमन्याससमन्वितोऽयम् ।
वर्णेन युक्तोऽप्यवरोहिणासौ पूर्णः प्रसन्नान्तविभूषितश्च ॥ ४५ ॥
स्याच्छुद्धमध्याभिधमूर्छनश्च वीरे च रौद्रे च रसेऽद्भुते च ।
पूर्वाह्णकाले शिशिरर्तुभाजि प्रयोजनीयः कुजमोदहेतुः ॥ ४६ ॥
गेयस्तथा निर्वहणे च संधौ शुद्धादिमः कैशिक एष रागः ।

---

— पञ्च भिन्नरागाः —

॥ भिन्नकैशिकमध्यमः ॥ ८ ॥

भिन्नादिमं कैशिकमध्यमं तु निरूपयामः सह लक्षणेन ॥ ४७ ॥
षाड्ज्या तथा मध्यमया च जातः षड्जो ग्रहोंऽशोऽत्र समध्यमस्तु ।
न्यासोऽथ वा स्यादिह मन्द्रषड्जः संचारिवर्णेन समन्वितोऽसौ ॥ ४८ ॥
तथा प्रसन्नादिविभूषितश्च पूर्णे निषादोऽस्य तु काकली स्यात् ।
षड्जाद्यया मूर्छनयैष रागः समन्वितश्चोत्तरमन्द्रया स्यात् ॥ ४९ ॥
स्याद्दानवीराद्भुतरौद्रयोग्यः सोमप्रियः प्रातरयं च गेयः ।

---

— ॥ भिन्नषड्जः ॥ ९ ॥ —

निरूप्यते संप्रति भिन्नषड्जरागः पुनर्गायनबोधहेतोः ॥ ५० ॥
षड्जादिमोदीच्यवतीप्रसूतो विवर्जितश्चर्षभपञ्चमाभ्याम् ।
सधैवतांशग्रहकश्च मध्यमान्तः प्रसन्नान्तविभूषितश्च ॥ ५१ ॥
संचारिवर्णोत्तरकाकलीमान्रागस्य हेतुः किल भैरवस्य ।
चतुर्मुखप्रीतिकरस्तथैवोत्तरायतामूर्छनया समेतः ॥ ५२ ॥
गेयः स बीभत्सभयानके च स्यात्सार्वभौमस्य महोत्सवे च ।
हेमन्तकाले प्रथमे च यामे दिनस्य गाने स तु रक्तिमान्स्यात् ॥ ५३ ॥

---

— भिन्नतानः ॥ १० ॥ —

अथोच्यते लक्षणमत्र भिन्नतानाख्यरागस्य सुखावगत्यै ।
स्यान्मध्यमापञ्चमिकाख्यजात्योर्जातस्तथा पञ्चमकग्रहांशः ॥ ५४ ॥

अल्पो निषादोऽस्य तु मध्यमश्च पूर्णः स्फुरत्काकलिको निषादः ।
संचारिवर्णोऽपि च मध्यमान्तस्तथा प्रसन्नादिविभूषितोऽसौ ॥ ५५ ॥
स्यात्पञ्चमाद्यस्य च मूर्छनेशप्रियः प्रगेऽसौ करुणे च गेयः ।

— भिन्नकैशिकः ॥ ११ ॥ —

भिन्नादिकं कैशिकमीरयामो रागं प्रबोधाय कुशीलवानाम् ॥ ५६ ॥
कर्मारवीतोऽपि च कैशिकीतो जातः स षड्जग्रहकस्तदंशः ।
स्यात्पञ्चमन्यासयुतः स पूर्णः परिस्फुरत्काकलिको निषादः ॥ ५७ ॥
संचारिवर्णश्च स मन्द्रभूरिस्तथा प्रसन्नादिविभूषितश्च ।
तथैव षड्जादिममूर्छनोऽसौ स्याद्दानवीराद्भुतरौद्रगेयः ॥ ५८ ॥
गेयस्तथाह्नः प्रथमे च यामे शिवप्रियोऽयं शिशिरर्तुकाले ।

— भिन्नपञ्चमः ॥ १२ ॥ —

निरूप्यते संप्रति लक्षणेन भिन्नादिमः पञ्चम एष रागः ॥ ५९ ॥
स्यान्मध्यमापञ्चमिकाख्यजात्योर्जातस्तथा धैवतकग्रहांशः ।
स पञ्चमन्यासयुतश्च पौरव्याख्या भवेदस्य तु मूर्छना च ॥ ६० ॥
परिस्फुरत्काकलिको निषादः क्वचिन्निषादेन समन्वितश्च ।
तथा प्रसन्नान्तविभूषितश्च संचारिवर्णो रविसूनुरम्यः ॥ ६१ ॥
बीभत्ससंज्ञे च भयानके च स सूत्रधारागमने नियोज्यः ।
ग्रीष्मे दिनस्य प्रथमे च यामे गेयो वराह्व्याश्च निदानमेषः ॥ ६२ ॥

— त्रयो गौडाः ॥ गौडकैशिकमध्यमः ॥ १३ ॥ —

गौडादिमं कैशिकमध्यमं तत्त्रयोदशं संप्रति लक्षयामः ।
जातः स षड्जादिममध्यमायाः षड्जग्रहापन्यसनांशकोऽसौ ॥ ६३ ॥
पूर्णस्तथा काकलिकासमेतः प्रसन्नमध्येन विभूषितश्च ।
आरोहिवर्णेन विभूषितश्च तथैव षड्जादिममूर्छनाढ्यः ॥ ६४ ॥
चन्द्रप्रियो वीरभयानकादौ गेयः स मध्ये प्रहरद्वयेऽह्नः ।

— गौडपञ्चमः ॥ १४ ॥ —

वक्ष्यामि गौडादिमपञ्चमं च चतुर्दशं गायनबोधहेतोः ॥ ६५ ॥

स्याद्धैवतीषड्जकमध्यमाभ्यां जातस्तथा धैवतकग्रहोंऽशः ।
मन्यासकः पञ्चमवर्जितश्च युक्तस्तथैवान्तरकाकलीभ्याम् ॥ ६६ ॥
स धैवतादिः किल मूर्छनास्य प्रसन्नमध्येन विभूषितोऽसौ ।
आरोहिवर्णो मदनार्कसूनुप्रियश्च बीभत्सभयानकाख्ये ॥ ६७ ॥
स्याद्विप्रलम्भे च रसे नियोज्यो ग्रीष्मेऽह्नि वा मध्यमयामयुक्ते ।
तथोद्भटे नाट्यविधौ च गेयो निरूपितो गौडिकपञ्चमोऽयम् ॥ ६८ ॥

— गौडकैशिकः ॥ १५ ॥ —

वक्ष्यामहे गौडककैशिकस्य लक्ष्माधुना पञ्चदशस्य सम्यक् ।
स कैशिकीषड्जकमध्यमाभ्यां जातो ग्रहोंऽशः स तु षड्ज एव ॥ ६९ ॥
सकाकलीकोऽपि च पञ्चमाख्यन्यासश्च षड्जादिममूर्छनाढ्यः ।
आरोहिवर्णेन युतः स पूर्णस्तथा प्रसन्नादिविभूषितश्च ॥ ७० ॥
वीरे च रौद्रे करुणेऽद्भुते च रसे स गेयः शिशिरर्तुभाजः ।
दिनस्य मध्यप्रहरद्वये च चन्द्रावतंसस्य सदा प्रियोऽसौ ॥ ७१ ॥

— अष्टौ वेसराः ॥ टक्करागः ॥ १६ ॥ —

टक्काभिधं रागमुदीरयामः स धैवतीषड्जकमध्यमाभ्याम् ।
जातो भवेत्षड्ज इह ग्रहोंऽशो न्यासस्तु पूर्णोऽत्र तु पञ्चमोऽल्पः॥ ७२ ॥
समन्वितश्चान्तरकाकलीभ्यां तथा प्रसन्नादिविभूषितश्च ।
संचारिमानादिममूर्छनायुग्रुद्रप्रियोऽह्नश्चरमे तु यामे ॥ ७३ ॥
वर्षासु वीराद्भुतरौद्रकेषु गेयः स गौडाभिधरागहेतुः ।

— वेसरपाडवः ॥ १७ ॥ —

अथोच्यते वेसरपाडवस्य लक्ष्माधुना सप्तदशस्य सम्यक् ॥ ७४ ॥
जातः स षड्जादिममध्यमायाः स्यान्मध्यमोंऽशो न्यसनं ग्रहोऽस्य ।
समन्वितः सोऽन्तरकाकलीभ्यां तथा प्रसन्नादिविभूषितश्च ॥ ७५ ॥
आरोहिवर्णः परिपूर्ण एष स्यान्मध्यमाद्यापि च मूर्छनास्य ।
शान्ते च शृङ्गाररसे च हास्ये सारेऽस्य गानाद्गुरुशनाभिनन्देत् ॥ ७६ ॥

— सौवीरः ॥ १८ ॥ —

सौवीररागस्य तु लक्ष्म वक्ष्ये जातः स षड्जादिममध्यमायाः ।
षड्जो ग्रहोंऽशो न्यसनं च तस्य गान्धारकोऽल्पः स तु काकलीयुक् ॥
भवेच्च षड्जादिममूर्छनावांस्तथा प्रसन्नादिविभूषितश्च ।
वर्णेन युक्तस्त्ववरोहिणासौ तपस्विनां संयमिनां प्रवेशे ॥ ७८ ॥
तथा प्रवेशे गृहिणां च गेयः स वीररौद्राद्भुतशान्तयोग्यः ।
संतोषहेतुश्च शशाङ्कमौलेर्गेयस्तथा पश्चिमयाम एषः ॥ ७९ ॥

— बोट्टरागः ॥ १९ ॥ —

वक्ष्यामि बोट्टाभिधरागलक्ष्म स पञ्चमीषड्जकमध्यमाजः ।
स पञ्चमोंऽशश्च भवेद्ग्रहश्च स मध्यमन्यासयुतश्च रागः ॥ ८० ॥
स्यादल्पगान्धारयुतश्च सोऽयं सकाकलीकः परिपूर्ण एषः ।
स्यात्पञ्चमाद्या खलु मूर्छना च तथा प्रसन्नान्तविभूषितश्च ॥ ८१ ॥
आरोहिवर्णश्च शिवप्रियोऽसौ दिनस्य गेयश्चरमे च यामे ।
हास्ये च शृङ्गाररसे च गेयस्तथोत्सवे चैव महीपतीनाम् ॥ ८२ ॥

— मालवकैशिकः ॥ २० ॥ —

अथोच्यते मालवकैशिकस्य विंशस्य रागस्य च लक्ष्म सम्यक् ।
स कैशिकीजातिसमुद्भवः स्यात्षड्जग्रहांशन्यसनस्तथैव ॥ ८३ ॥
सकाकलीकोद्भवधैवतश्च षड्जादिका स्यादिह मूर्छना च ।
आरोहिवर्णेन युतः प्रसन्नमध्याभिधालङ्करणेन युक्तः ॥ ८४ ॥
पूर्णस्तथा वीररसेऽद्भुते च स्याद्विप्रलम्भे च रसे च रौद्रे ।
यामेऽन्तिमे शैशिरवासरस्य गेयस्त्वसौ केशवहर्षहेतुः ॥ ८५ ॥

— मालवपञ्चमः ॥ २१ ॥ —

अतः परं मालवपञ्चमस्य रागस्य लक्ष्म प्रतिपादयामः ।
स मध्यमापञ्चमिकाख्यजातिद्वयेन जातोऽस्य तु पञ्चमोंऽशः ॥ ८६ ॥
न्यासो ग्रहश्चास्य तु हृष्यकाख्या स्यान्मूर्छनारोहि विराजितोऽसौ ।
भवेत्प्रसन्नान्तविभूषितोऽल्पगान्धारकः काकलिकासमेतः ॥ ८७ ॥

गेयस्त्वसौ कञ्चुकिनः प्रवेशे स्याद्विप्रलम्भाख्यरसे च हास्ये ।
तुर्येऽह्नि यामेऽपि च केतुहृद्यो निरूपितो मालवपञ्चमोऽयम् ॥ ८८ ॥

— टक्ककैशिकः ॥ २२ ॥ —

लक्ष्माद्य टक्कादिमकैशिकस्य द्वाविंशकस्य प्रतिपादयामः ।
स धैवतीमध्यमिकाख्यजातिद्वयेन जातोऽस्य तु धैवतोंऽशः ॥ ८९ ॥
न्यासो ग्रहश्चान्तरकाकलीभ्यां युक्तः प्रसन्नादिविभूषितश्च ।
आरोहिवर्णेन समन्वितश्चोत्तरायतामूर्छनिकासमेतः ॥ ९० ॥
तथाद्भटेऽसौ नटने प्रयोज्यो रागस्त्वयं कञ्चुकिनः प्रवेशे ।
यामेऽह्नि तुर्येऽथ भयानकाख्ये बीभत्सके मन्मथमन्मथघ्नः ॥ ९१ ॥

— हिन्दोलः ॥ २३ ॥ —

हिन्दोलरागस्य च लक्ष्म वक्ष्ये षाड्ज्या च गान्धारिकया च जात्या ।
स्यान्मध्यमापञ्चमिकाद्वयेन जात्या च नैषादिकया च जातः ॥ ९२ ॥
षड्जग्रहोंऽशो न्यसनं च तस्य हीनस्तथैवर्षभपञ्चमाभ्याम् ।
असौ प्रसन्नादिविभूषितः स्यादारोहिवर्णः सहकाकलीकः ॥ ९३ ॥
स्याच्छुद्धमध्या किल मूर्छनास्य वीरे च रौद्रे च रसेऽद्भुते च ।
संभोगशृङ्गाररसे वसन्ते यामे चतुर्थे दिवसस्य गेयः ॥ ९४ ॥
प्रद्युम्नसंतोषविधानदक्षो वसन्तरागस्य च हेतुभूतः ।

— सप्त साधारणाः ॥ रूपसाधारितः ॥ २४ ॥ —

निरूप्य चाष्टावपि वेसराख्यान्साधारणान्सप्त निरूपयामः ॥ ९५ ॥

तं रूपसाधारितनामधेयं रागं पुरस्तादिह लक्षयामः ।
नैशादिकाषड्जकमध्यमाख्यां जातोऽस्य षड्जोंऽश इह ग्रहश्च ॥ ९६ ॥
स्यान्मध्यमान्तः सहकाकलीकस्तथायमल्पर्षभधैवतश्च ।
वर्णेन युक्तस्त्ववरोहिणासौ प्रसन्नमध्येन विभूषितश्च ॥ ९७ ॥
षड्जादिका ह्युत्तरमन्द्रिकात्र स्यान्मूर्छना भास्करदैवतोऽयम् ।
वीरे च रौद्रे करुणेऽद्भुते च प्रयोजनीयः सकलस्वरोऽयम् ॥ ९८ ॥

---

— ॥ शकः ॥ २५ ॥ —

वक्ष्याम्यहं संप्रति पञ्चविंशं शकाख्यरागं सह लक्षणेन ।
षाड्ज्या तथा धैवतिकाख्यया च जातः स षड्जोंऽश इह ग्रहश्च ॥
न्यासः स एवान्तरकाकलीभ्यां युक्तः स षड्जादिममूर्छनायुक् ।
प्रसन्नमध्येन विभूषितोऽसावारोहिवर्णेन युतश्च पूर्णः ॥ १०० ॥
वीरे च हास्येऽपि नियोजनीयो रुद्रप्रियो निर्वहणाख्यसन्धौ ।

---

— ॥ भम्माणपञ्चमः ॥ २६ ॥ —

रागं च भम्माणकपञ्चमाख्यं षड्विंशमेतं प्रतिपादयामः ॥ १०१ ॥
स्याच्छुद्धया मध्यमया तु षड्जन्यासग्रहांशो जनितः स रागः ।
न्यासोऽथ वा मध्यम एव तस्य स्यादल्पगान्धारयुतश्च पूर्णः ॥ १०२ ॥
षड्जाद्यया मूर्छनया समेतः प्रसन्नमध्येन विभूषितश्च ।
आरोहिवर्णः सहकाकलीकः स्याद्वीररौद्राद्भुतयोग्य एषः ॥ १०३ ॥
स्वार्थात्परिभ्रंशिककाननान्तभ्रान्ते नियोज्यः शिवतोषहेतुः ।

---

— ॥ नर्तः ॥ २७ ॥ —

नर्ताभिधं रागमथोऽभिधास्ये स मध्यमापञ्चमिकाप्रसूतः ॥ १०४ ॥
दुर्गामते धैवतिकापि हेतुरंशग्रहौ पञ्चम एव तस्य ।
न्यासस्तथा मध्यम एव तस्य सञ्चारिवर्णः सहकाकलीकः ॥ १०५ ॥
प्रसन्नमध्येन विराजमानः स्यात्पञ्चमादिः खलु मूर्छनास्य ।
तथाल्पगान्धारयुतश्च सोऽयं हास्ये च शृङ्गाररसे नियोज्यः ॥ १०६ ॥

स्यान्मण्डलं शुद्धटचारिकाढ्यं यत्राहवे तत्र नियोज्य एषः ।

---

## — ॥ गान्धारपञ्चमः ॥ २८ ॥ —

वक्ष्यामि गान्धारकपञ्चमाख्यं रागं च सम्यक्सह लक्षणेन ॥ १०७ ॥

गान्धारिकाजातिसमेतरक्तगान्धारिकाजातिसमुद्भवोऽयम् ।
गांधारकांशन्यसनग्रहश्च स हारिणाश्वाह्वयमूर्छनाढ्यः ॥ १०८ ॥

प्रसन्नमध्येन विभूषितश्च सञ्चारिवर्णः सहकाकलीकः ।
राहुप्रियोऽसौ करुणेऽद्भुते च हास्ये रसे स्याद्विनियोजनीयः ॥ १०९ ॥

---

## — ॥ षड्जकैशिकः ॥ २९ ॥ —

वक्ष्यामि षड्जादिमकैशिकाख्यं स्यात्कैशिकीजातिसमुद्भवोऽयम् ।
षड्जांशकोऽसावृषभग्रहश्चास्याल्पर्षभो न्यासतया निषादः ॥ ११० ॥

गान्धारको वा गदितोऽथ षड्जगान्धारकौ मन्द्रगतावुताहो ।
वर्णेन युक्तस्त्ववरोहिणासौ तथा प्रसन्नादिविभूषितश्च ॥ १११ ॥

षड्जाद्यया मूर्छनया समेतो वीरेऽद्भुते रौद्ररसे च गेयः ।
प्रालेयशैलेन्द्रसुतासखस्य बालेन्दुमौलेरभिनन्दकोऽसौ ॥ ११२ ॥

---

## — ॥ ककुभः ॥ ३० ॥ —

त्रिंशत्तमं तं ककुभं प्रवक्ष्ये स्यात्पञ्चमीधैवतिकाख्यजात्योः ।
स मध्यमायाश्च निजं प्रजातस्तस्य ग्रहोंऽशोऽपि च धैवतः स्यात् ॥

न्यासं पुनः पञ्चममाहुरस्य स्याद्धैवतााद्या किल मूर्छनास्य ।
प्रसन्नमध्येन विभूषितः स्यादारोहिवर्णेन समन्वितोऽयम् ॥ ११४ ॥

शरद्यसौ स्यात्करुणे च गेयो देवं ब्रुवन्त्यस्य च धर्मराजम् ।
भाषात्मिकायाश्च रगन्तिकाया निदानमेनं निगदन्ति सन्तः ॥ ११५ ॥

त्रिंशच्च शुद्धादिमगीतियुक्तास्ते ग्रामरागाः सकला निरुक्ताः ।

॥ इति त्रिंशत् ग्रामरागाः ॥

---

— अथ अष्टावुपरागाः ॥ शकतिलकः ॥ १ ॥ —

अष्टोपरागानधुनानुपूर्व्यात्तथाभिधास्ये सह लक्षणेन ॥ ११६ ॥

वक्ष्ये शकादिं तिलकं पुरस्तात्स षाड्जिकाधैवतिकाप्रसूतः ।
न्यासो ग्रहोंऽशोऽस्य तु षड्ज एव स्वल्पो भवेत्पञ्चम एष तस्मिन् ॥

---

— ॥ टक्कसैन्धवः ॥ २ ॥ —

टक्कादिमं सैन्धवमामनामः षाड्ज्या च कैशिक्यभिधानवत्या ।
जात्या स जातः पुनरस्य षड्जो न्यासो ग्रहोंऽशश्च स पञ्चमोऽल्पः ॥

---

— ॥ कोकिलापञ्चमः ॥ ३ ॥ —

स्यात्कोकिलापञ्चममीरयामः स पञ्चमीमध्यमिकाप्रसूतः ।
स्यात्पञ्चमांशग्रह एष पूर्णो न्यासं तथा मध्यममाहुरस्य ॥ ११९ ॥

---

— रेवगुप्तः ॥ ४ ॥ —

षड्जाह्वयग्रामगमध्यमार्षभिकासमुत्थः किल रेवगुप्तः ।
स मध्यमान्तो ऋषभग्रहांशः प्रसन्नकाद्यन्तविभूषितश्च ॥ १२० ॥

मनीषिभिश्चोद्भटरूपचारीकमण्डलादौ विनियुज्यतेऽसौ ।
रसेषु वीराद्भुतरौद्रकेषु गेयस्तथोमापतिवल्लभश्च ॥ १२१ ॥

---

— ॥ पञ्चमषाडवः ॥ ५ ॥ —

अथोच्यते पञ्चमषाडवाख्यः स मध्यमग्रामसमुद्भवश्च ।
स्यादार्षभीधैवतिकाप्रसूतो न्यासो ग्रहोंऽशश्च तथर्षभः स्यात् ॥ १२२ ॥

स्यान्मध्यमन्याससयुतः कलोपनतान्वितः काकलिकासमेतः ।
आरोहिवर्णः सहितः प्रसन्नाद्यन्तेन शम्भोरपि मोदहेतुः ॥ १२३ ॥

वीरे च रौद्रे च रसेऽद्भुते च नार्याश्च हास्ये विनियोजनीयः ।

---

— ॥ भावनापञ्चमः ॥ ६ ॥ —

तं भावनापञ्चममीरयामो गान्धारपञ्चम्युदितो भवेद्यः ॥ १२४ ॥
स पञ्चमोंऽशो भवति ग्रहस्तु गान्धारकश्चात्र समस्वराः स्युः ।

— ॥ नागगान्धारः ॥ ७ ॥ —

तं नागगान्धारकनामधेयं रागं प्रवक्ष्ये रसिकानुभूत्यै ॥ १२५ ॥
गान्धारिकाजातिसमेतरक्तगान्धारिकाजातिसमुद्भवो यः ।
गान्धारको न्यास इह ग्रहोंऽशस्तथा युतश्चान्तरकाकलीभ्याम् ॥१२६॥

— ॥ नागपञ्चमः ॥ ८ ॥ —

नागादिमं पञ्चममीरयामः स चार्षभीधैवतिकाप्रसूतः ।
अंशो ग्रहः स्यादृषभोऽस्य वर्ज्यो गान्धारकः किं च स धैवतान्त्यः ॥
अष्टोपरागाः कथिताः क्रमेण सलक्षणं गायकबोधहेतोः ।
॥ इत्यष्टावुपरागाः ॥

— ॥ अथ शुद्धरागाः ॥ श्रीरागः ॥ १ ॥ —

शुद्धानथो विंशतिमामनामो रागानिदानीं भरतादिमोक्तान् ॥ १२८ ॥
श्रीरागमादौ कथयामि षड्जग्रामे तु षाड्ज्याह्वयजातिजन्यम् ।
न्यासो ग्रहोंऽशोऽस्य च षड्ज एव स्वल्पस्तथा पञ्चमकः स पूर्णः ॥
स्यान्मध्यमस्तार इहाथ मन्द्रो गान्धारकोऽन्ये तु समस्वराः स्युः ।
वीरे रसेऽसौ विनियोजनीयो लक्ष्मीप्रदः सर्वजनप्रसिद्धः ॥ १३० ॥

— ॥ नट्टः ॥ २ ॥ —

अथोच्यते नट्टसमाख्यरागः स मध्यमोदीच्यवतीप्रसूतः ।
न्यासो ग्रहोंऽशोऽपि च मध्यमोऽस्य संपूर्ण एवैष समस्वरश्च ॥ १३१ ॥

— ॥ वङ्गालः (१) ॥ ३ ॥ —

वङ्गालरागं कथयामि षड्जग्रामे तु षड्जादिममध्यमाजम् ।
न्यासो ग्रहोंऽशोऽस्य स षड्ज एव शुद्धस्वराः स्युः स च मन्द्रहीनः ॥

———

— ॥ वङ्गालः (२) ॥ ४ ॥ —

द्वितीयवङ्गालमथ प्रवक्ष्ये समध्यमग्रामगकैशिकीजः ।
न्यासो ग्रहोंऽशोऽस्य च षड्ज एव स तारमध्यस्थितपञ्चमाढ्यः॥ १३३
अन्ये भवन्त्यत्र समाः स्वरास्ते स एष संपूर्णतया प्रतीतः ।

———

— ॥ भासः ॥ ५ ॥ —

संलक्ष्यते संप्रति भासरागो रागेषु शुद्धेषु च पञ्चमो यः ॥ १३४ ॥
आन्ध्रीसमुद्भूततया प्रतीतो न्यासो ग्रहोंऽशोऽपि च धैवतोऽस्य ।

———

— ॥ मध्यमषाडवः ॥ ६ ॥ —

संलक्ष्यते मध्यमषाडवाख्यस्तस्यर्षभोंऽशः किल पञ्चमोऽल्पः ॥ १३५ ॥
सधैवतोऽपन्यसनस्तथाल्पः स्यात्पञ्चमो वीररसादियोग्यः ।

———

— ॥ रक्तहंसः ॥ ७ ॥ —

संलक्ष्यते संप्रति रक्तहंसः स रक्तगान्धारिकया प्रसूतः ॥ १३६ ॥
न्यासो ग्रहोंऽशोऽपि च धैवतोऽस्य स तारगान्धारयुतो रिवर्ज्यः ।

———

— ॥ कोल्लहासः ॥ ८ ॥ —

वक्ष्यामहे संप्रति कोल्लहासं षाड्ज्या च गान्धारिकया च जात्या ॥
नैषादिकामध्यमिकाख्यजातिद्वयीयुजा मध्यमया च जातः ।
न्यासो ग्रहोंऽशोऽस्य तु षड्ज एव भवेत्तथाल्पर्षभधैवतोऽसौ ॥ १३८ ॥

———

— ॥ प्रसवः ॥ ९ ॥ —

निरूपयामः प्रसवाख्यरागं स नन्दयन्तीजनितो ग्रहोंऽशः ।
स्यान्मध्यमो न्यासतया प्रतीतः षड्जो निषादेन च धैवतेन ॥ १३९ ॥
स्यान्मध्यमेनाप्यधिकः स पूर्णो वीरे रसेऽसौ विनियुज्यते च ।

— ॥ भैरवः ॥ १० ॥ —

वक्ष्यामहे भैरवनामरागं न्यासो ग्रहोंऽशोऽपि च धैवतोऽस्य ॥ १४० ॥
आषड्जगान्धारमसौ तु मन्द्रतारो भवेत्किं च समस्वरश्च ।

— ॥ ध्वनिः ॥ ११ ॥ —

निरूप्यतेऽसौ ध्वनिनामधेयो गान्धारपञ्चम्युदितः स पूर्णः ॥ १४१ ॥
न्यासो ग्रहोंऽशोऽपि च पञ्चमोऽस्य तथाधिकौ पञ्चमधैवतौ द्वौ ।
अल्पौ तु गान्धारनिषादकौ द्वौ तथा भवेन्मन्द्रगमध्यमश्च ॥ १४२ ॥

— ॥ मेघः ॥ १२ ॥ —

मेघाभिधं रागमथाभिधास्ये षड्जे त्वसौ धैवतिकाप्रसूतिः ।
न्यासो ग्रहोंऽशोऽपि च धैवतोऽस्य समस्वरस्तारगषड्जकोऽसौ ॥
मन्द्रेण हीनः कथितो मुनीन्द्रैः स्याद्द्वादशोऽयं किल मेघरागः ।

— ॥ सोमः ॥ १३ ॥ —

सोमाभिधं रागमथाभिधास्ये षड्जे हि षाड्ज्या जनितः स जात्याः ॥
न्यासो ग्रहोंऽशोऽपि च षड्ज एव बहू तु गान्धारनिषादकौ द्वौ ।
स्यात्तारमध्यस्थितमध्यमोऽयं वीरे रसेऽसौ विनियोजनीयः ॥ १४५ ॥

— ॥ कामोदः (१) ॥ १४ ॥

कामोदलक्ष्म प्रतिपादयामः षड्जे तु षड्जादिममध्यमोत्थम् ।
न्यासो ग्रहः षड्ज इह प्रतीतः स्याद्धैवतोंऽशश्च समस्वरोऽयम् ॥ १४६
गान्धारकस्तस्य तु तारमन्द्रश्चतुर्दशोऽयं कथितो मुनीन्द्रैः ।

— ॥ कामोदः (२) ॥ १५ ॥ —

द्वितीयकामोदमथाभिधास्ये षड्जे तु षाड्ज्या जनितः स जात्याः ॥
षड्जग्रहांशान्यसनश्च मन्द्रगान्धारकाढ्यश्च समस्वरश्च ।

— ॥ आम्रपञ्चमः ॥ १६ ॥ —

वक्ष्ये तमाम्रादिमपञ्चमाख्यं स्यान्मन्द्रमध्यस्वरसंभवोऽयम् ॥ १४८ ॥
गान्धारको न्यास इह ग्रहोंऽशस्तारस्थगान्धारनिषादयुक्तः ।
गान्धारको मध्यगतोऽथ वा स्याद्भवेन्निषादस्त्विह मन्द्रहीनः॥ १४९ ॥

— ॥ कन्दर्पः ॥ १७ ॥ —

कन्दर्पनामानमथोऽभिधास्ये रागं स षड्जादिमकैशिकीजः ।
न्यासो ग्रहोंऽशोऽपि च षड्ज एव स्यान्मन्द्रषड्जोऽपि च पञ्चमोनः ॥

— ॥ देशः ॥ १८ ॥ —

देशाख्यरागं कथयामि सम्यक्स धैवतीमध्यमयोः प्रसूतः ।
न्यासो ग्रहोंऽशोऽपि च धैवतोऽस्य गान्धारकः स्वल्प इह प्रतीतः ॥
स एव मन्द्रस्थितमध्यमश्च स्यात्पञ्चमेनापि विहीन एषः ।

— ॥ कैशिकककुभः ॥ १९ ॥ —

तं कैशिकादिं ककुभं प्रवक्ष्ये स मध्यमापञ्चमिकाप्रसूतः ॥ १५२ ॥
दुर्गामते धैवतिकापि हेतुर्न्यासो ग्रहोंऽशोऽपि च धैवतोऽस्य ।
तारस्थगान्धारयुतश्च मन्द्रस्थानस्थितः पञ्चमकस्तथा स्यात् ॥ १५३ ॥

— ॥ नट्टनारायणः ॥ २० ॥ —

नट्टादिनारायणलक्ष्म वक्ष्ये स मध्यमापञ्चमिकाप्रसूतः ।
न्यासो ग्रहोंऽशोऽस्य च षड्ज एव पूर्णो युतश्चान्तरकाकलीभ्याम् ॥
तारस्थगान्धारयुतः स कालप्रियः स गेयः करुणे रसे च ।
स्याद्गानकालः शरदस्य सम्यगितीरिता विंशतिरत्र रागाः ॥ १५५ ॥

॥ इति विंशतिः शुद्धरागाः ॥

## ॥ रघुनाथभूपविरचिता ॥

# ॥ सङ्गीतसुधा ॥

### — ॥ अथ भाषारागाः ॥ —

निरूपयामो निपुणं तु भाषारागानिदानीं नवतिं च षट् च ।
येषां तु सौवीरमुखाः पुरोक्तास्ते हेतवः पञ्चदशैव रागाः ॥ १५६ ॥

---

### — अथ सौवीर-जन्य-भाषारागाः—४ ॥ —

सौवीरजातांश्चतुरोऽत्र भाषारागानिदानीं निपुणं वदामः ।

---

### — सौवीरी ॥ १ ॥ —

सौवीर्यभिख्या प्रथमात्र मूलभाषाख्य रागस्य भवेत्तु षड्जः ॥ १५७ ॥
न्यासो ग्रहो मध्यमको बहु स्यात्तौ संगतौ षड्जकधैवतौ द्वौ ।
स्यातां तथैवर्षभधैवतौ च सांगत्यभाजाविति वेदितव्यम् ॥ १५८ ॥

---

### — ॥ वेगमध्यमा ॥ २ ॥ —

वक्ष्यामि वेगादिममध्यमाख्यां न्यासो ग्रहश्चास्य तु षड्ज एव ।
स्यान्मध्यमोऽशोऽपि च मध्यमाढ्यः पूर्णश्च षड्जर्षभसंगतिस्पृक् ॥

---

### — ॥ साधारिता ॥ ३ ॥ —

साधारिताख्यां कथयामि भाषां षड्जग्रहांशोऽपि च मध्यमान्ताम् ।
तौ संगतौ मध्यमधैवतौ द्वौ युक्तौ तथा धैवतषड्जकौ च ॥ १६० ॥
गान्धारषड्जावपि योगभाजौ स एष रागः सकलस्वरः स्यात् ।

---

— ॥ गान्धारी ॥ ४ ॥ —

गान्धार्यभिख्यां कथयामि भाषामंशो ग्रहोऽस्यास्तु निषाद एव ॥१६१॥
न्यासस्तु षड्जः सकलस्वरोऽसौ रसे नियोज्या करुणाभिधाने ।

---

— ॥ अथ ककुभजन्य-भाषारागाः ॥ ६ ॥ —

संलक्षयामः ककुभप्रभूतभाषास्ततः षट्सह लक्षणेन ॥ १६२ ॥

---

— ॥ भिन्नपञ्चमी ॥ १ ॥ —

प्राग्भिन्नपञ्चम्यभिधां प्रवक्ष्ये न्यासो ग्रहोंऽशोऽपि च धैवतोऽस्याः ।
गान्धारहीना बहुलैः स्वरैस्तु परैर्युता मन्द्रकधैवता च ॥ १६३ ॥
पदप्रयोगेऽपि च मध्यमापन्यासा तथा सा खलु षाडवा स्यात् ।

---

— ॥ काम्बोजी ॥ २ ॥ —

काम्बोजिकाख्यां कथयेऽथ भाषां न्यासो ग्रहोंऽशोऽपि च धैवतोऽस्याम्॥
संवादिनौ धैवतषड्जकौ द्वौ स्यातां तथैवर्षभपञ्चमौ च ।

---

— ॥ मध्यमग्रामा ॥ ३ ॥ —

वक्ष्यामहे संप्रति मध्यमादिग्रामाभिधेयां सह लक्षणेन ॥ १६५ ॥
न्यासो ग्रहोंऽशोऽपि च धैवतोऽस्या युक्तौ तथैवर्षभधैवतौ द्वौ ।
सा मध्यमग्रामसमुद्भवा संकीर्णा च पूर्णा भरतोपदिष्टा ॥ १६६ ॥

---

— ॥ रगन्ती ॥ ४ ॥ —

अथो रगन्तीं कथयामि भाषां न्यासो ग्रहोंऽशोऽत्र तु षड्ज एव ।
सा धैवताख्यस्फुरितैरुपेता पन्यासतां याति च पञ्चमोऽत्र ॥ १६७ ॥
तथेयमातारकमध्यमा स्यादित्थं चतुर्थी गदिता तु भाषा ।

---

— ॥ मधुरी ॥ ५ ॥ —

संलक्ष्यतेऽथो मधुरी तु भाषा स्यात्पञ्चमांशापि च धैवतान्ता ॥
युतौ तु गान्धारकपञ्चमौ द्वौ युक्तो निषादोऽपि च धैवतौ द्वौ ।

— ॥ शकमिश्रा ॥ ६ ॥ —

भाषां वदामः शकमिश्रकाख्यामंशो निषादोऽत्र भवेद् ग्रहश्च ॥ १६९ ॥
न्यासश्च तस्या ऋषभो निषादः संगच्छते तत्र तु पञ्चमेन ।
तथर्षभो धैवतसंगतः स्यादितीरिता षट् ककुभस्य भाषाः ॥ १७० ॥

— ॥ अथ टक्कजन्यभाषारागाः ॥ ७ ॥ —

अतः परं टक्कभवाश्च भाषास्त्वेकाधिकां विंशतिमीरयामः ।

— ॥ त्रवणा ॥ १ ॥ —

तत्रापि वक्ष्ये त्रवणां तु भाषां न्यासग्रहांशाः पुनरत्र षड्जः ॥ १७१ ॥
तारस्थगान्धारकमध्यमा सा मन्द्रस्थषड्जा त्वृषभाधिका च ।
निषादषड्जस्वरधैवताढ्या वीरे च गेया गिरिशाय सायम् ॥ १७२ ॥

— ॥ त्रवणोद्भवा ॥ २ ॥ —

भाषां प्रवक्ष्ये त्रवणोद्भवाख्यां षड्जान्तिमा स्यात्खलु मध्यमांशा ।
गान्धारकापन्यसनाधिकौ द्वौ तत्रर्षभो धैवतकस्वरश्च ॥ १७३ ॥
सा षाडवा पञ्चमवर्जनेन स्पर्धासु गेया खलु सा सदैव ।

— ॥ वेरञ्जिका ॥ ३ ॥

वेरञ्जिकाख्यामथ वर्णयामो न्यासो ग्रहोंऽशः पुनरत्र षड्जः ॥ १७४ ॥
षड्जोऽत्र युक्तः खलु मध्यमेन गान्धारकेनाप्यृषभः समेतः ।
विवर्जिता येन हि पञ्चमेन तस्मादियं षाडवतामुपेता ॥ १७५ ॥

— ॥ मध्यमग्रामदेहा ॥ ४ ॥ —

तां मध्यमग्रामपदादिदेहां भाषां प्रवक्ष्येऽत्र च मध्यमोंऽशः ।
ग्रहश्च षड्जः पुनरन्तिमः स्याद्युक्तोऽत्र षड्जः किल मध्यमेन ॥ १७६ ॥

— ॥ मालववेसरी ॥ ५ ॥ —

वक्ष्यामहे मालववेसरीं तामंशो निषादोऽत्र भवेद्ग्रहश्च ।
न्यासश्च षड्जोऽपि च पञ्चमोऽल्पो गान्धारषड्जाविह संघटेते ॥ १७८
षड्जो मिलेदत्र च मध्यमेन मूलाख्यया किं च निगद्यतेऽसौ ।

— ॥ छेवाटी ॥ ६ ॥ —

छेवाटिकां संप्रति लक्षयामो न्यासो ग्रहोंऽशः पुनरत्र षड्जः ॥ १७९ ॥
निषादगान्धारकसंगतात्र षड्जश्च संगच्छति मध्यमं च ।
सा मध्यमेनोज्ज्वलतामुपैति पूर्णा च मूलेति च गीयतेऽसौ ॥

— ॥ सैन्धवी ॥ ७ ॥ —

निरूपयामः किल सैन्धवीं तां न्यासो ग्रहोंऽशोऽपि च तत्र षड्जः ।
वर्ज्यौ तथैवर्षभपञ्चमौ द्वौ लङ्घ्यस्वरैस्तैर्गमकैश्च सान्द्रा ॥ १८१ ॥
तारस्थगान्धारकमध्यमा च मन्द्रस्थषड्जा सकले रसे स्यात् ।

— ॥ कोलाहला ॥ ८ ॥ —

कोलाहलाख्यां निगदामि भाषां षड्जग्रहोंऽशोऽप्यथ पञ्चमश्च ॥
मन्द्रस्थषड्जर्षभशोभमाना सा मध्यमाढ्या गमकान्विता च ।

— ॥ पञ्चमलक्षिता ॥ ९ ॥ —

लक्ष्मोच्यते पञ्चमलक्षितायाः षड्जग्रहोंऽशोऽपि च पञ्चमान्ता ॥ १८३
तारेण षड्जेन च मध्यमेन गान्धारकेनाप्यथ पञ्चमेन ।
संलक्षिता स्यादृषभेण हीना संलक्षिता पञ्चमलक्षितेयम् ॥ १८४ ॥

— ॥ सौराष्ट्रिका ॥ १० ॥

सौराष्ट्रिकां संप्रति लक्षयामो न्यासो ग्रहोंऽशः पुनरत्र षड्जः ।
तारस्थषड्जर्षभसंयुतेयं मन्द्रस्फुरन्मध्यमभूषिता च ॥ १८५ ॥
निष्पञ्चमा सा बलवन्निषादा रसे च गेया करुणाभिधाने ।

---

— ॥ पञ्चमी ॥ ११ ॥ —

प्रपञ्च्यते संप्रति पञ्चमीयमंशो ग्रहो द्वावपि पञ्चमोऽस्याः ॥ १८६ ॥
षड्जोऽन्तिमः पञ्चमसंयुतः स्यात्षड्जो युतौ चर्षभपञ्चमौ द्वौ ।

---

— वेगरञ्जी ॥ १२ ॥ —

तां वेगरञ्जीं प्रतिपादयामो न्यासग्रहांशाः पुनरत्र षड्जः ॥ १८४ ॥
अपञ्चमा मन्द्रनिषादयुक्ता गान्धारषड्जर्षभवन्निषादः ।
भवत्यनल्पो वनिताजनस्य गाने च सेयं विनियोजनीया ॥ १८५ ॥

---

— ॥ गान्धारपञ्चमी ॥ १३ ॥ —

गान्धारपञ्चम्यभिधां प्रवक्ष्ये षड्जान्तिमा धैवतकग्रहांशा ।
षड्जोऽत्र संगच्छति मध्यमान्तं भूयिष्ठगान्धारयुता च पूर्णा ॥ १८६ ॥

---

— ॥ मालवी ॥ १४ ॥ —

वक्ष्यामहे मालविकाख्यभाषां न्यासांशकौ पञ्चमधैवतौ द्वौ ।
तौ संगतौ द्वावपि चान्तिमांशावस्यां भवेतामृषभश्च वर्ज्यः ॥ १८७ ॥
गान्धारके मध्यमके च षड्जे तारस्थिते कम्पितमश्नुते सा ।

---

— तानवलिता ॥ १५ ॥ —

तानादिमां तां वलितां प्रवक्ष्ये षड्जान्तिमा मध्यमकग्रहांशा ॥ १९० ॥
षड्जो भवेद्या मृदुलालिता च सा पञ्चमे टक्कभवा च भाषा ।

---

— ॥ ललिता ॥ १६ ॥ —

संलक्षयामो ललिताख्यभाषां न्यासो ग्रहोंऽशः पुनरत्र षड्जः ॥ १९१ ॥
विवर्जिता चर्षभपञ्चमाभ्यां तारस्थगान्धारकधैवता सा ।
मन्द्रस्थषड्जा ललितैः स्वरैश्च युतोत्कटैरुत्सववीरयोग्या ॥ १९२ ॥

---

— ॥ रविचन्द्रिका ॥ १७ ॥ —

भाषां प्रवक्ष्ये रविचन्द्रिकाख्यां न्यासग्रहांशत्रयरूपषड्जा ।
टक्कोद्भवाल्पर्षभपञ्चमा च गान्धारकः स्यादृषभेण युक्ता ॥ १९३ ॥
षड्जस्तथा मध्यमसंयुतश्च संकीर्णरागाद्गमकान्वितासौ ।

---

— ॥ ताना ॥ १८ ॥ —

तानाभिधानां प्रवदामि भाषां न्यासो ग्रहोंऽशः पुनरत्र षड्जः ॥ १९४ ॥
विवर्जितैर्षर्षभपञ्चमाभ्यां तथैव मन्द्रस्थनिषादषड्जा ।
षड्जे निषादे गमकान्विता च पन्यासयुक्तापि च धैवतेन ॥ १९५ ॥
प्रयोजनीया करुणाभिधाने रसे किलैषेत्युदिता मुनीन्द्रैः ।

---

— अम्बाहेरिका ॥ १९ ॥ —

वक्ष्यामहेऽम्बादिमहेरिकाख्यां षड्जान्तिमा मध्यमकग्रहांशा ।
भूयिष्ठगान्धारकधैवता सा समस्वरा पञ्चमिकोच्छ्रिता च ॥ १९६ ॥

---

— ॥ देशा ॥ २० ॥ —

देशाभिधा वीररसे च गेया चैकोनविंशी किल टक्कभाषा ।
वक्ष्यामि देशामथ टक्कभाषां गान्धारकोऽस्यां च भवेद् ग्रहोंऽशः ॥
न्यासस्तु षड्जस्वर एव तस्यां वर्ज्यौ तथैवर्षभपञ्चमौ द्वौ ।

---

— ॥ वेसरिका ॥ २१ ॥ —

वक्ष्यामहे वेसरिकाख्यभाषां न्यासो ग्रहोंऽशोऽत्र तु षड्ज एव॥ १९८ ॥
अपञ्चमा काकलिकासमेता ससंगता धैवतषड्जयोः स्यात् ।

युक्तो निषादेन च धैवतोऽस्या वीरे रसे सा विनियोजनीया ॥ १९९ ॥
एकाधिका विंशतिरत्र सम्यगितीरिता टक्कभवास्तु भाषाः ।

---

॥ अथ पञ्चमभाषारागाः ॥ १० ॥

— ॥ कैशिकी ॥ १ ॥ —

प्रपञ्चये पञ्चमरागजाताम्भाषाविशेषान् दशधा विभिन्नान् ॥ २०० ॥
तत्रोच्यते संप्रति कैशिकीयं न्यासो ग्रहोंऽशोऽपि च पञ्चमोऽस्याः ।
तारस्थषड्जोऽपि च मध्यमापन्यासाधिका मध्यमधैवताभ्याम् ॥ २०१
तारस्थगान्धारकमध्यमा च तथेयमीर्ष्यासु नियोजनीया ।
भाषाङ्गतामेव वदन्ति केचिदितीरिता पञ्चमिकीयमाद्या ॥ २०२ ॥

---

— ॥ त्रावणिका ॥ २ ॥ —

वक्ष्यामहे त्रावणिकाख्यभाषां षड्जग्रहांशामपि पञ्चमान्ताम् ।
निषादगान्धारयुताधिकास्ते षड्जर्षभौ पञ्चममध्यमौ च ॥ १०३ ॥

---

— ॥ तानोद्भवा ॥ ३ ॥ —

तानोद्भवां संप्रति लक्ष्यामः सा मध्यमांशापि च पञ्चमान्ता ।
अल्पर्षभा चाधिकपञ्चमा च सांगत्यभाग्धैवतमध्यमा च ॥ २०४ ॥

---

— ॥ आभीरिका ॥ ४ ॥ —

आभीरिकाख्यामथ वर्णयामो न्यासो ग्रहोंऽशोऽपि च पञ्चमोऽस्याम् ।
भूयो निषादात्वपि काकलीका गेया रणे मध्यमषड्जयुक्ता ॥ २०५ ॥

---

— ॥ गुर्जरी ॥ ५ ॥ —

अथोच्यते संप्रति गुर्जरीयं न्यासो ग्रहोंऽशोऽपि च पञ्चमोऽस्याः ।
उच्चोऽत्र षड्जोऽपि च मध्यमोऽपन्यासौ तु गान्धारकधैवतौ द्वौ ॥

---

— ॥ सैन्धवी ॥ ६ ॥ —

भाषामथो सैन्धविकां प्रवक्ष्ये न्यासो ग्रहोंऽशोऽपि च पञ्चमोऽस्याम् ।
प्राज्यर्षभा चर्षभपञ्चमापन्यासा च तारस्थितपञ्चमा च ॥ २०७ ॥
निषादहीनैर्गमकाभिरामैः स्वरैरुपेता समरे च गेया ।

---

— ॥ दाक्षिणात्या ॥ ७ ॥ —

वक्ष्यामहे संप्रति दाक्षिणात्यां न्यासो ग्रहोंऽशोऽपि च धैवतोऽस्याः ॥
तारो निषादोऽत्र तु मध्यमेन स्यात्पञ्चमेनापि च धैवतेन ।
भवेदपन्यास इहर्षभस्तु प्रियास्मृतौ सा विनियोजनीया ॥ २०८ ॥

---

— ॥ आन्ध्री ॥ ८ ॥ —

भाषामथान्ध्रीमधुनाभिधास्ये सा पञ्चमान्ता ऋषभग्रहा च ।
सकाकली दुर्बलषड्जयुक्ता भवेदियं किंनरवल्लभा च ॥ २०९ ॥

---

— ॥ माङ्गली ॥ ९ ॥ —

भाषामथो माङ्गलिकां प्रवक्ष्ये न्यासो ग्रहोंऽशोऽपि च धैवतोऽस्याः ।
सकाकली धैवतषड्जयुक्ता तथर्षभः पञ्चमसंगतोऽस्याम् ॥ २१० ॥

---

— ॥ भावनी ॥ १० ॥ —

वक्ष्यामहे संप्रति भावनीं तां न्यासो ग्रहोंऽशोऽपि च पञ्चमोऽस्याः ।
षड्जर्षभेयं खलु मन्द्रषड्जापन्यासयुक्ताधिकमध्यमा च ॥ २११ ॥
षड्जो निषादश्च तथाधिकौ द्वावस्यां भवेतामिति वेदितव्यम् ।

---

॥ इतीरिताः पञ्चमरागभाषा दशापि बोधाय कुशीलवानाम् ॥

— ॥ अथ भिन्नपञ्चम-जन्यभाषारागाः ॥ —

अथोच्यतेऽस्यापि च भिन्नपञ्चमोद्भूतिभाजः कथयामि भाषाः ॥ २१२॥

---

— ॥ धैवतभूषिता ॥ १ ॥ —

तत्रोच्यते धैवतभूषितेयं न्यासो ग्रहोंऽशोऽपि च धैवतोऽस्याः ।
षड्जं तु संगच्छति धैवतोऽस्यां युक्तौ तथैवर्षभधैवतौ द्वौ ॥ २१३ ॥

---

— ॥ शुद्धभिन्ना ॥ २ ॥ —

वक्ष्यामहे संप्रति शुद्धभिन्नां न्यासो ग्रहोंऽशोऽपि च धैवतोऽस्याः ।
संवादिनौ चर्षभधैवतौ द्वौ षड्जं तु संगच्छति मध्यमोऽस्याम् ॥

---

— ॥ वराटी ॥ ३ ॥ —

अथो वराटीं प्रतिपादयामः सा मध्यमांशापि च धैवतान्ता ।
अल्पर्षभा धैवतषड्जयुक्ता गान्धारकः स्यादृषभेण युक्तः ॥ २१५ ॥
सा भूयसी मध्यमधैवताभ्यामितीरितं याष्टिकदत्तिलाद्यैः ।

---

— ॥ विशाला ॥ ४ ॥ —

अतो विशालामधुनाभिधास्ये सा पञ्चमांशापि च धैवतान्ता ॥ २१६ ॥
विभूषिता धैवतकेन किं च संचारभाग्धैवतषड्जका स्यात् ।

---

— अथ टक्ककैशिक-जन्यभाषारागाः ॥ २ ॥ —

— ॥ मालवा ॥ १ ॥ —

वक्ष्यामि टक्कादिमकैशिकस्य भाषाद्वयं तत्र तु मालवेयम् ॥ २१७ ॥
न्यासग्रहांशाधिकधैवता संचारस्ततो धैवतषड्जयोः स्यात् ।
संचारिणी चर्षभधैवताख्यस्वरद्वये सा सकलस्वरा च ॥ २१८ ॥

---

— ॥ भिन्नवलिता ॥ २ ॥ —

भिन्नादिमां तां वलितां प्रवक्ष्ये षड्जग्रहांशापि च धैवतान्ता ।
प्राज्यो निषादोऽपि च धैवतोऽस्यां युक्तो निषादेन च मध्यमः स्यात् ॥

---

— ॥ अथ हिन्दोल-जन्य-भाषारागाः ॥ ९ ॥ —

— ॥ वेसरिका ॥ १ ॥ —

हिन्दोलभाषाश्च नवाथ वक्ष्ये तत्रादिमा वेसरिकाभिधाना ।
न्यासो ग्रहोंऽशोऽपि च तत्र षड्जस्त्वल्पौ तथा धैवतपञ्चमौ द्वौ ॥
गान्धारषड्जाविह संघटेते तथा निषादर्षभसंगतिः स्यात् ।

— ॥ चूतमञ्जरी ॥ २ ॥ —

तां चूतमञ्जर्यभिधां तु वक्ष्याम्यंशो ग्रहः पञ्चम एव तस्याः ॥ २२१ ॥
न्यासस्तु षड्जस्त्वृषभेण हीना संचारिणी पञ्चमषड्जयोः स्यात् ।
निषादगान्धारकसंगतिः स्याद्धिन्दोलभाषा कथिता द्वितीया ॥ २२२ ॥

— ॥ षड्जमध्यमा ॥ ३ ॥ —

वक्ष्यामि षड्जादिम मध्यमां तां न्यासांशकावत्र तु मध्यमः स्यात् ।
षड्जो ग्रहो मध्यमषड्जकौ द्वौ युक्तौ च गान्धारकमध्यमौ द्वौ ॥२२३॥
हीना निषादेन तथर्षभेण हिन्दोलभाषा कथिता तृतीया ।

— ॥ मधुरी ॥ ४ ॥ —

अथाभिधास्ये मधुरीं च भाषां न्यासोऽत्र षड्जोऽपि च मध्यमोंऽशः ॥
षड्जो निषादोऽपि च धैवतश्च सपञ्चमोऽमी ह्यधिका भवन्ति ।
अल्पर्षभा प्रेक्षणके नियोज्या हिन्दोलभाषा मधुरी तुरीया ॥ २२५ ॥

— ॥ भिन्नपौराली ॥ ५ ॥ —

तां भिन्नपौराल्यभिधां प्रवक्ष्ये न्यासोऽत्र षड्जः स तु मध्यमोंऽशः ।

— ॥ गौडी ॥ ६ ॥ —

हिन्दोलभाषां कथयामि गौडीं न्यासग्रहांशाः पुनरत्र षड्जः ॥ २२६ ॥

विवर्जिता चर्षभधैवताभ्यां मन्द्रस्थषड्जोऽपि च पञ्चमे तु ।
भिन्नाभिधावद्गमकेन युक्ता नियोजनीया प्रियभाषणे सा ॥ २२७ ॥

— ॥ मालववेसरी ॥ ७ ॥ —

अथोच्यते मालववेसरीयं न्यासो ग्रहोंऽशः पुनरत्र षड्जः ।
गान्धारकापन्यसनर्षभेण विवर्जिता धैवतकेन च स्यात् ॥ २२८ ॥
स्यान्मध्यमे पञ्चमकस्वरे च समन्विता स्याद्गमकेन सम्यक् ।

— ॥ छेवाटी ॥ ८ ॥ —

छेवाटिकां संप्रति संप्रवक्ष्ये न्यासग्रहांशाः पुनरत्र षड्जः ॥ २२९ ॥
गान्धारकापन्यसना विहीना तथर्षभेणाधिकधैवता सा ।
गान्धारषड्जस्वरमध्यमास्तु मन्द्रस्थिता एव भवन्ति तस्याम् ॥ २३० ॥

— ॥ पिञ्जरी ॥ ९ ॥ —

प्रवक्ष्यते संप्रति पिञ्जरी सा गान्धारकोंऽशः कथितो ग्रहश्च ।
न्यासस्तु षड्जोऽपि युतो निषादो हिन्दोलभाषाः कथिता नवैवम् ॥

— ॥ अथ बोट्ट-जन्य-भाषारागः ॥ १ ॥ —

— ॥ माङ्गली ॥ १ ॥ —

तां माङ्गलीं बोट्टभवां प्रवक्ष्ये सा पञ्चमांशापि च मध्यमान्ता ।
तथर्षभे धैवतके च सेयं संचारभागुज्ज्वलमध्यमा च ॥ २३२ ॥
गेया च सर्वेष्वपि मङ्गलेषु चैकैव बोट्टप्रभवेति वेद्या ।

— ॥ अथ मालवकैशिकजन्यभाषारागाः ॥ १३ ॥ —

— ॥ वाङ्गाली ॥ १ ॥ —

वक्ष्यामहे मालवकैशिकस्य त्रयोदशापि क्रमशोऽथ भाषाः ॥ २३३ ॥

वाङ्गाल्यभिख्यां प्रथमं वदामः षड्जान्तिमो मध्यमकग्रहांशः ।
संवादिनौ द्वावृषभो निषादः पूर्णा भवेदुज्ज्वलमध्यमा च ॥ २३४ ॥

---

— ॥ माङ्गली ॥ २ ॥ —

माङ्गल्यभिख्यां कथयामि भाषां न्यासग्रहांशाः पुनरत्र षड्जः ।
सा पञ्चमाल्पस्फुरिता तु तारस्थितर्षभा तारगमध्यमा च ॥ २३५ ॥
दीर्घा भवेद्धैवतिका निरुक्तासा माङ्गली मालवकैशिकोत्था ।

---

— ॥ हर्षपुरी ॥ ३ ॥ —

अथोच्यते हर्षपुरी तु भाषा न्यासग्रहांशाः किल पञ्चमोऽस्याः ॥ २३६ ॥
तारस्फुरन्मध्यमपञ्चमा सा मन्द्रस्थषड्जा युतधैवता च ।

---

— ॥ मालववेसरी ॥ ४ ॥ —

वक्ष्यामहे मालववेसरीं तां न्यासग्रहांशाः पुनरत्र षड्जः ॥ २३७ ॥
तारर्षभा मन्द्रगपञ्चमा च कम्प्रस्फुरन्मध्यमपञ्चमा च ।
स्याद्धैवतेनापि विवर्जिता सा निरूपिता मालववेसरीत्थम् ॥ २३८ ॥

---

— ॥ मञ्जरी ॥ ५ ॥ —

तां मञ्जरीं संप्रति वर्णयामस्तस्या ग्रहोंऽशोऽपि च पञ्चमः स्यात् ।
न्यासस्तु षड्जोऽत्र निषादषड्जौ युक्तौ तथैवर्षभमध्यमौ द्वौ ॥ २३९ ॥

---

— ॥ गुर्जरी ॥ ६ ॥ —

तां गुर्जरीं संप्रति लक्षयामो न्यासस्तु षड्जोऽत्र निषादकोंऽशः ।
युक्तो निषादस्त्वृषभेण तद्वत्समध्यमध्यादृषभेण युक्तः ॥ २४० ॥

---

— ॥ गौडी ॥ ७ ॥ —

गौडीं वदामोऽत्र तु षड्ज एव न्यासो ग्रहोंऽशोऽप्यधिको निषादः ।
मन्द्रस्थितोऽल्पो भवतीह षड्जः प्रोक्तो मतङ्गप्रमुखैः किलेयम् ॥ २४१ ॥

— ॥ पौराली ॥ ८ ॥ —

पौरालिकाख्यां प्रतिपादयामो न्यासग्रहांशाः पुनरत्र षड्जः ।
तत्राधिकौ मध्यमषड्जकौ संकीर्णा च पूर्णा कथिता मुनीन्द्रैः ॥ २४२ ॥

— ॥ अर्धवेसरी ॥ ९ ॥ —

तामर्धवेसर्यभिधां प्रवक्ष्ये न्यासोऽत्र षड्जः स तु मध्यमोंऽशः ।
षड्जोऽधिकः स्यादिह मध्यमश्च भवेदिहाल्पोऽपि निषाद एषः ॥२४३॥

— ॥ शुद्धा ॥ १० ॥ —

शुद्धोच्यते मध्यमकग्रहांशा षड्जान्तिमा सा प्रमदेषु गेया ।

— ॥ मालवरूपा ॥ ११ ॥ —

वक्ष्यामहे मालवपूर्वरूपां न्यासग्रहांशाः पुनरत्र षड्जः ॥ २४४ ॥
भूयिष्ठगान्धारवती निषादः स धैवतो द्वाविह वर्जनीयौ ।

— ॥ सैन्धवी ॥ १२ ॥ —

वक्ष्यामि सैन्धव्यभिधां च भाषां न्यासग्रहांशाः पुनरत्र षड्जः॥ २४५ ॥
तथैव गान्धारनिषादहीना मन्द्रस्थषड्जा मृदुपञ्चमा सा ।
सर्वेषु भावेषु नियोजनीया सा सैन्धवी मालवकैशिकोत्था ॥ २४६ ॥

— ॥ आभीरी ॥ १३ ॥ —

आभीरिकाख्यामथ वर्णयामो न्यासग्रहांशाः पुनरत्र षड्जः ।
पूर्णा च षड्जर्षभसंगता सा तथाल्पगान्धारनिषादयुक्ता ॥ २४७ ॥
भाषाः पुनर्मालवकैशिकोत्थास्त्रयोदशैवं किल सम्यगुक्ताः ।

— ॥ अथ गान्धारपञ्चम-जन्यभाषारागः ॥ १ ॥ —

— ॥ गान्धारी ॥ १ ॥ —

भाषां च गान्धारकपञ्चमस्य गान्धार्यभिख्यां प्रतिपादयामः ॥ २४८ ॥
गान्धारको न्यास इह ग्रहोंऽशोऽसौ षड्जगान्धारविभूषिता च ।
सा सर्वलोकस्य मनोहरा स्याद्विशेषतश्चञ्चललोचनानाम् ॥ २४९ ॥

— ॥ अथ भिन्नषड्जजन्य-भाषारागाः ॥ १७ ॥ —

— ॥ गान्धारवल्ली ॥ १ ॥ —

गान्धारवल्ल्यादि च भिन्नषड्जभाषाः पुनः सप्तदशाथ वक्ष्ये ।
गान्धारवल्ली त्विह मध्यमांशग्रहा भवेदन्तिमधैवतेयम् ॥ २५० ॥
स्यात्संगतिर्धैवतषड्जयोश्च गेया भवेत्कर्मणि सा पितॄणाम् ।

— ॥ कच्छेली ॥ २ ॥ —

कच्छेलिकाख्यां कथयामि भाषां षड्जो ग्रहोंऽशोऽत्र तु मध्यमान्त्यः ॥
सम्युक्तगान्धारकधैवता सा समाश्रयन्ती किल कूटतानान् ।
मतान्तरे मध्यमकग्रहांशा सा मन्द्रतारर्षभसंयुता च ॥ २५२ ॥
संयुक्तगान्धारनिषादकौ च कच्छेलिकेयं कथिता मुनीन्द्रैः ।

— ॥ स्वरवल्ली ॥ ३ ॥ —

निरूपयामः स्वरवल्लिकाख्यां स्याद्धैवतो न्यास इहांशकश्च ॥ २५३ ॥
ग्रहो निषादस्त्वृषभश्च वर्ज्यो युक्तो निषादेन च मध्यमः स्यात् ।

— ॥ निषादिनी ॥ ४ ॥ —

निषादिनीं संप्रति लक्षयामो न्यासो ग्रहोंऽशोऽपि च धैवतः स्यात् ॥

— ॥ त्रवणा ॥ ५ ॥ —

अथाभिधास्ये त्रवणाभिधानां स्याद्धैवतो न्यास इह ग्रहोंऽशः ।
षड्जो निषादोऽपि च धैवतश्च प्राज्या विहीनर्षभपञ्चमा सा ॥ २५५ ॥

षड्जे निषादेऽपि च धैवते च समन्विता सा वलितेन सम्यक् ।
गान्धारकेनापि च मध्यमेन समन्विता सा द्विगुणीकृतेन ॥ २५६ ॥
मन्द्रस्फुरद्धैवतिका जये सा महीपतीनां विनियोजनीया ।

---

— ॥ मध्यमा ॥ ६ ॥ —

अथोच्यते संप्रति मध्यमाख्या सा मध्यमान्तात्र तु धैवतांशा ॥ २५७ ॥

---

— ॥ शुद्धा ॥ ७ ॥ —

शुद्धां वदामोऽत्र तु धैवतोंऽशो न्यासो ग्रहः सा मृदुधैवता च ।
विवर्जिता चर्षभपञ्चमाभ्यां यद्वा भवेत्पञ्चमवर्जितैषा ॥ २५८ ॥
गान्धारषड्जाविह संगतौ वा पन्यासगान्धारसमन्विता च ।
गान्धारषड्जावपि धैवतोऽमी मन्द्रस्तथा पञ्चमदीर्घता च ॥ २५९ ॥

---

— ॥ दाक्षिणात्या ॥ ८ ॥ —

वक्ष्यामहे संप्रति दाक्षिणात्यां स्याद्धैवतो न्यास इह ग्रहोंऽशः ।
स्यात्षाडवा पञ्चमदुर्बला च षड्जो युतो मध्यमधैवताभ्याम् ॥ २६० ॥

---

— ॥ पुलिन्दिका ॥ ९ ॥ —

पुलिन्दिकां तामथ वर्णयामो न्यासस्तु षड्जोऽत्र तु धैवतोंऽशः ।
हीना च गान्धारकपञ्चमाभ्यां स मध्यमः स्यादिह षड्जयुक्तः ॥ २६१॥
षड्जस्तथा धैवतकेन युक्तस्त्वानन्दिनी सा हि पुलिन्दजातेः ।

---

— ॥ तुम्बुरा ॥ १० ॥ —

अथोच्यते संप्रति तुम्बुराख्यां न्यासो ग्रहोंऽशोऽपि च धैवतोऽस्याः ॥
विवर्जिता स्यादृषभस्वरेण तुष्टिप्रदा तुम्बुरुमौनिमौलेः ।

---

— ॥ षड्जभाषा ॥ ११ ॥ —

अथोच्यते संप्रति षड्जभाषा स्यान्मध्यमो न्यास इह ग्रहोंऽशः ॥२६३॥
विवर्जिता चर्षभपञ्चमाभ्यां देवार्चने सा विनियोजनीया ।

---

— ॥ कालिन्दी ॥ १२ ॥ —

कालिन्द्याभिख्यां कथयामि भाषां गान्धारकोंऽशोऽत्र तु धैवतान्तः ॥
त्यक्तो निषादर्षभपञ्चमैश्चारोहावरोहा च चतुःस्वरा च ।

---

— ॥ ललिता ॥ १३ ॥ —

अथाभिधास्ये ललिताख्यभाषां स्याद्धैवतो न्यास इह ग्रहोंऽशः ॥ २६५॥
गान्धारकेणर्षभमध्यमाभ्यां त्रिभिः समेता खलु तारमन्द्रैः ।
तथैव मन्द्रस्थितधैवता च स्नेहे प्रगेया च मतङ्गकोक्ता ॥ २६६ ॥

---

— ॥ श्रीकण्ठी ॥ १४ ॥ —

श्रीकण्ठिकालक्षणमत्र वक्ष्ये स्याद्धैवतो न्यास इह ग्रहोंऽशः ।
विवर्जिता पञ्चमकस्वरेणापन्यासतागो रिषभस्तथास्याम् ॥ २६७ ॥
तत्संगतो चर्षभमध्यमौ च श्रीकण्ठकण्ठोद्गलिता हि सैषा ।

---

— ॥ वाङ्गाली ॥ १५ ॥ —

वाङ्गालिकां तामथ वर्णयामः स्याद्धैवतो न्यास इह ग्रहोंऽशः ॥ २६८ ॥
दीर्घौ तथैवर्षभमध्यमौ स्तोऽपन्यासगान्धारयुता च सेयम् ।
मन्द्रोऽन्निषद्धैवतसंयुता स्यादुद्दीपने सा विनियोजनीया ॥ २६९ ॥

---

— ॥ गान्धारी ॥ १६ ॥ —

गान्धारिकाख्यामथ कीर्तयामो गान्धारकोंऽशोऽत्र तु मध्यमोऽन्तः ।
तथा भवेदुच्छ्रितमध्यमोऽयं शार्दूलमौनीश्वरसंमता सा ॥ २७० ॥

---

— ॥ सैन्धवी ॥ १७ ॥ —

सैन्धव्यभिख्यां कथयामि भाषां स्याद्धैवतो न्यास इह ग्रहोंऽशः ।
विवर्जिता चर्षभपञ्चमाभ्यां मन्द्रस्फुरद्धैवतिका तथैव ॥ २७१ ॥
उद्दीपना चेत्युदितास्तु भिन्नषड्जोदिताः सप्तदशापि भाषाः ॥ २७२ ॥

— ॥ अथ वेसरषाडव-जन्य-भाषाः ॥ २ ॥ —

— ॥ नाद्या ॥ १ ॥ —

भाषे उभे वेसरषाडवस्य नाद्यां तयोः प्राथमिकीं वदामः ।
षड्जग्रहांशापि च मध्यमान्ता गान्धारगुर्वी धुतपञ्चमा च ॥ २७३ ॥
यामे तुरीयेऽपि दिनस्य सायं गेयेति सर्वे मुनयो गृणन्ति ।

— ॥ वाह्यषाडवा ॥ २ ॥ —

वक्ष्यामि वाह्यादिमषाडवां तां स्यान्मध्यमो न्यास इह ग्रहोंऽशः ॥२७४॥
निषादगान्धारकसंगतेयं गान्धारसांगत्ययुतर्षभा च ।

— ॥ अथ मालवपञ्चम-जन्य-भाषाः ॥ ३ ॥ —

— ॥ तानोद्भवा ॥ १ ॥ —

तिस्रः पुनर्मालवपञ्चमस्य भाषाः प्रवक्ष्येऽथ यथाक्रमेण ॥ २७५ ॥
तानोद्भवां संप्रति भिन्नतानोद्भवां वदामः सह लक्षणेन ।
स्यात्पञ्चमो न्यास इह ग्रहोंऽशो विवर्जिता स्यादृषभस्वरेण ॥ २७६ ॥

— ॥ अथ पञ्चमषाडवजन्यभाषारागः ॥ १ ॥ —

— ॥ पोता ॥ १ ॥ —

पोताभिधां पञ्चमषाडवाख्योपरागजातां कथयामि भाषाम् ।
न्यासो ग्रहोंऽशोऽप्यृषभो मतोऽस्यास्तथैव भूयिष्ठनिषादषड्जा ॥२७७॥

— ॥ अथ रेवगुप्तजन्यभाषारागः ॥ १ ॥ —

— ॥ शका ॥ १ ॥ —

मतान्तरे संप्रति रेवगुप्तसंभूतभाषां कथये शकाख्याम् ।
षड्जान्तिमा स्यादपि मध्यमांशा भूयिष्ठगान्धारकपञ्चमा च ॥ २७९ ॥
गुर्वी तथैवर्षभधैवताभ्यां प्रोक्तास्तु भाषा नवतिः षडेताः ।

---

— ॥ अथ विभाषाः ॥ —

— ॥ ककुभ-जन्य-विभाषाः ॥ ३ ॥ —

वक्ष्ये विभाषास्त्वधिविंशतिस्तास्तिस्रो विभाषाः ककुभस्य तत्र ।

---

— ॥ भोगवर्धनी ॥ १ ॥ —

सा भोगवर्धन्यभिधादिमा स्यात्स्याद्धैवतो न्यास इह ग्रहोंऽशः ॥
पदप्रयोगे कथितः किलापन्यासस्तु गान्धारपदाभिधेयः ।
भूयान्निषादोऽत्र तु पञ्चमश्च गान्धारको मध्यमधैवतौ च ॥ २८० ॥
विवर्जिता स्यादृषभस्वरेण विरागभावे विनियुज्यतेऽसौ ।

---

— ॥ आभीरी ॥ २ ॥ —

आभीरिकाख्यां कथये द्वितीयां स्यान्मध्यमोन्यास इह ग्रहोंऽशः ॥
षड्जर्षभाभ्यां च निषादकेन द्रुतप्रयोगा मृदुधैवता च ।
तारस्फुरत्पञ्चमिका च पूर्णा स्यान्मध्यमेन प्रचुरप्रयोगा ॥ २८२ ॥
निर्वेदने सा विनियोजनीयेत्युक्ता विभाषा ककुभे द्वितीया ।

---

— ॥ मधुकरी ॥ ३ ॥ —

वक्ष्ये विभाषां मधुकर्यभिख्यां न्यासो ग्रहोंऽशः पुनरत्र षड्जः ॥२८३ ॥
गान्धारकोऽपन्यसनो निषादषड्जर्षभैर्धैवतपञ्चमाभ्याम् ।
सा पञ्चभिः स्याद्धवलप्रयोगेत्युक्ता हि तिस्रः ककुभो विभाषाः ॥२८४॥

---

— ॥ अथ टक्कजन्य-विभाषाः ॥ ४ ॥ —

— ॥ देवारवर्धनी ॥ १ ॥ —

टक्के विभाषाः कथये चतस्रो देवारवर्धन्यभिधात्र चाद्या ।
न्यासोऽत्र षड्जः स तु पञ्चमोंऽशो ग्रहश्च पूर्णेत्युदिता मुनीन्द्रैः ॥२८५

---

— ॥ आन्ध्री ॥ २ ॥ —

टक्के विभाषां कथयामि चान्ध्रीं स्यान्मध्यमोंऽशः स तु पञ्चमोऽन्त्यः ।
प्रहर्षकाले विनियोजनीया स्यादान्ध्रदेशप्रभवा किलैषा ॥ २८६ ॥

---

— ॥ गुर्जरी ॥ ३ ॥ —

गुर्जर्यभिख्यां कथये विभाषामंशो ग्रहश्चात्र भवेन्निषादः ।
न्यासस्तु षड्जः स तु मध्यमेन युक्तो निषादस्त्वृषभेण युक्तः ॥ २८७ ॥
पूर्णा च सा गुर्जरदेशजेति टक्के विभाषा कथिता तृतीया ।

---

— ॥ भानवी ॥ ४ ॥ —

तां भानवीं संप्रति लक्षयामः स्यात्पञ्चमो न्यास इह ग्रहोंऽशः ॥ २८८ ॥

---

— ॥ अथ पञ्चम विभाषाः ॥ २ ॥ —

— ॥ भम्माणी ॥ १ ॥ —

विभाषयोः संप्रति पञ्चमस्य भम्माणिकाख्यां प्रथमां भणामः ।
हीनर्षभा सा मृदुतारषड्जा तारा भवेन्मध्यमपञ्चमाभ्याम् ॥ २८९ ॥
तथा निषादेन च सा नियोज्या महोत्सवेष्वित्युदिता मुनीन्द्रैः ।

---

— ॥ आन्धाली ॥ २ ॥ —

आन्धालिकाख्यां कथये विभाषां स्यात्पञ्चमो न्यास इह ग्रहोंऽशः ।
अल्पो निषादस्त्वितरे स्वराः स्युर्भूयस्तरा इत्युदिता किलैषा ॥

---

— ॥ अथ भिन्नपञ्चमविभाषा ॥ १ ॥ —

— ॥ कौशली ॥ १ ॥ —

वक्ष्यामि भिन्नादिमपञ्चमस्य चैकां विभाषामपि कौशलीं ताम् ।
अंशो निषादोऽपि च धैवतोऽन्त्यो विवर्जिता सा ऋषभस्वरेण ॥ २९१॥

— ॥ अथ टक्ककैशिकविभाषा ॥ १ ॥ —

— ॥ द्राविडी ॥ १ ॥

वक्ष्यामि टक्कादिमकैशिकस्य तां द्रविडीनामवतीं विभाषाम् ।
सा मध्यमांशापि च धैवतान्ता समन्विता षड्जकधैवताभ्याम् ॥२९२
तथैव गान्धारनिषादकाभ्यां सा संगता स्यादिति वेदितव्यम् ।

— ॥ अथ मालवकैशिकविभाषाः ॥ २ ॥ —

— ॥ काम्भोजी ॥ १ ॥ —

विभाषयोर्मालवकैशिकस्य काम्भोजिकाख्यां प्रथमां प्रवक्ष्ये ॥ २९३
न्यासग्रहांशाः पुनरत्र षड्जो निषादवह्नी गमकोज्ज्वला सा ।
विवर्जिता त्वर्षभपञ्चमाभ्यां मन्द्रस्थषड्जेत्यवधारणीयम् ॥ २९४

— ॥ देवारवर्धनी ॥ २ ॥ —

देवारवर्धन्यभिधां प्रवक्ष्ये षड्जग्रहांशामपि पञ्चमान्ताम् ।
सा किं च गान्धारनिषादहीने त्युक्ता विभाषाद्वितयी क्रमेण ॥ २९

— ॥ अथ भिन्नषड्जविभाषाः ॥ ४ ॥ —

— ॥ पौरालिका ॥ १ ॥ —

ता भिन्नषड्जप्रभवाश्चतस्रः पौरालिकाद्याऽऽत्र भवे द्विभाषा ।
सा मध्यमांशापि च धैवतान्तास्याद् दुर्बला स्यादृषभस्वरेण ॥ २
तत्रर्षभो मध्यमपञ्चमौ च तौ संघटन्ते हि परस्परेण ।

— ॥ मालवी ॥ २ ॥ —

तां मालवीं संप्रति लक्षयामः स्याद्धैवतो न्यास इह ग्रहोंऽशः ॥ २९७ ॥
गान्धारषड्जर्षभधैवतैस्तु सा भूयसी मन्द्रगधैवता च ।

— ॥ कालिन्दी ॥ ३ ॥ —

कालिन्दिकां तामथ लक्षयामो गान्धारकांशापि च धैवतान्त्या ॥२९८॥
सा पञ्चमेनाप्यृषभेण हीना समस्वरा स्वल्पनिषादका च ।
सा विस्मयाख्ये च रसे प्रयोज्या स्याद्भिन्नषड्जप्रभवा च सेयम् ॥

— ॥ देवारवर्धनी ॥ ४ ॥ —

देवारवर्धन्यभिधां वदामः सा धैवतांशान्त्यनिषादका च ।
विवर्जिता चाप्यृषभस्वरेण स्याद्भिन्नषड्जप्रभवा विभाषा ॥ ३०० ॥

— ॥ अथ वेसरषाडवविभाषा ॥ —

— ॥ पार्वती ॥ १ ॥ —

विभाषिकां वेसरषाडवस्य पार्वत्यभिख्यां प्रतिपादयामः ।
षड्जो ग्रहोंऽशः सकलस्वरा चेत्युक्तत्रयान्यत्पुनरूहनीयम् ॥ ३०१ ॥

— ॥ अथ मालवपञ्चमविभाषा ॥ —

— ॥ भावनी ॥ १ ॥ —

विभाषयोर्मालवपञ्चमस्य तां भावनीं संप्रति लक्षयामः ।
न्यासो ग्रहोंऽशोऽपि च पञ्चमोऽपन्यासस्तु षड्ज स्त्वृषभेण हीना ॥

— ॥ विभावनी ॥ २ ॥ —

विभावनीं तामथ लक्षयामो न्यासो ग्रहोंऽशोऽपि च पञ्चमोऽस्याः ।
गान्धारको मध्यमधैवतौ च स्वल्पास्तथा मन्द्रगपञ्चमा च ॥ ३०३ ॥

— ॥ अथ अनुक्तहेतुविभाषा ॥ १ ॥ —

— ॥ पल्लवी ॥ १ ॥ —

अनुक्तहेतुं कथये विभाषां पल्लव्यभिख्यामिह धैवतोंऽशः ।
न्यासश्च षड्जर्षभभूयसी सा तारस्थगान्धारयुता च पूर्णा ॥ ३०४ ॥
एकाधिका विंशतिरीरितास्ता विभाषिकास्त्वन्तरभाषिकाश्च ।

---

— ॥ अथ अन्तरभाषाः ॥ ४ ॥ —

— ॥ अथ ककुभस्य अन्तरभाषा ॥ —

— ॥ सालवाहनी ॥ १ ॥ —

वक्ष्ये चतस्रः ककुभप्रसूताः सा सालवाहन्यभिधोच्यतेऽत्र ॥ ३०५ ॥
सा धैवतांशा ऋषभग्रहांशा गान्धारकोऽस्यामृषभेण युक्तः ।

---

— ॥ अनुक्तहेत्वन्तरभाषाः ॥ —

— ॥ भासवलिता ॥ १ ॥ —

तिसृष्वथानूदितहेतुषु प्राग्भासादिमां तां वलितां प्रवक्ष्ये ॥ ३०६ ॥
न्यासो ग्रहोंऽशोऽपि च धैवतोऽस्याः स्वल्पर्षभा पञ्चमवर्जिता च ।

---

— ॥ किरणावली ॥ २ ॥ —

संलक्षयामः किरणावलीं तां न्यासो ग्रहोंऽशोऽपि च धैवतोऽस्याः ॥
तारस्थगान्धारनिषादहृद्या मन्द्रस्फुरन्मध्यमसंयुता च ।

---

— ॥ शकललिता ॥ ३ ॥ —

अथोच्यते सा ललिता शकाद्या षड्जग्रहांशापि च धैवतान्त्या ।
युक्तो निषादोऽत्र तु धैवतेनेत्युक्ताश्चतस्रोऽन्तरभाषिकाश्च ॥ ३०८ ॥

---

— ॥ अथ रागाङ्गाः ॥ २१ ॥ —

एकाधिकां विंशतिमीरयामो रागाङ्गरागानधुना क्रमेण ।

— ॥ शङ्कराभरणः ॥ १ ॥ —

आद्यं तु तेषां प्रतिपादयामस्तं शंकराख्याभरणं च रागम् ॥ ३०९ ॥
न्यासो ग्रहोंऽशोऽपि च मध्यमश्चेत्स मध्यमादिः कथितस्तदानीम् ।
स एष मन्द्रस्वरमुद्रितश्च छायान्तरेणापि युतो यदि स्यात् ॥ ३१० ॥
स्याच्छंकराख्याभरणाभिधानो रागस्तदा शंकरवल्लभोऽयम् ।

— ॥ घण्टारवः ॥ २ ॥ —

घण्टारवाख्यं कथयामि रागं स धैवतांशोऽपि च मध्यामान्तः ॥३११॥
मन्द्रस्थगान्धारकमेदुरोऽयं तथैव तारस्थनिषादहृद्यः ।
रागस्य भिन्नादिमषड्जनाम्नः स्यादङ्गमित्येष भुवि प्रतीतः ॥ ३१२ ॥

— ॥ हंसकः ॥ ३ ॥ —

अथोच्यते हंसकरागलक्ष्म स धैवतस्तत्र भवेद्ग्रहोंऽशः ।
विवर्जितः षड्ज इहैष चांगरागस्य भिन्नादिमषड्जकस्य ॥ ३१३ ॥

— ॥ दीपकः ॥ ४ ॥ —

अथोच्यते दीपकरागलक्ष्म षड्जो ग्रहोंऽशोऽस्य तु मध्यमोऽन्तः ।
गान्धारकः पञ्चमकस्तथाल्पः स मध्यमो दीप्त इह प्रतीतः ॥ ३१४ ॥
अङ्गं भवेत्कैशिकमध्यमस्य भिन्नादिमस्येत्यवधारणीयम् ।
धन्नासिकामुच्चतरां वदन्ति केचित्पुनर्दीपकरागमेनम् ॥ ३१५ ॥

— ॥ रीतिः ॥ ५ ॥ —

रीतिं ब्रुवे षड्ज इह ग्रहोंऽशो न्यासश्च भिन्नादिमषड्जकाङ्गे ।

— ॥ कर्णाटिका ॥ ६ ॥ —

कर्णाटिकां तामिह लक्षयामो न्यासो ग्रहो यत्र तु तारषड्जः ॥ ३१६ ॥
सा धैवतांशा हनुमत्प्रिया च समस्वरा मन्द्रगमध्यमा च ।

— ॥ अथ अनुक्तहेतुविभाषा ॥ १ ॥ —

— ॥ पल्लवी ॥ १ ॥ —

अनुक्तहेतु कथये विभाषां पल्लव्यभिख्यामिह धैवतोंऽशः ।
न्यासश्च षड्जर्षभभूयसी सा तारस्थगान्धारयुता च पूर्णा ॥ ३०४ ॥
एकाधिका विंशतिरीरितास्ता विभाषिकास्त्वन्तरभाषिकाश्च ।

— ॥ अथ अन्तरभाषाः ॥ ४ ॥ —

— ॥ अथ ककुभस्य अन्तरभाषा ॥ —

— ॥ सालवाहनी ॥ १ ॥ —

वक्ष्ये चतस्रः ककुभप्रसूताः सा सालवाहन्यभिधोच्यतेऽत्र ॥ ३०५ ॥
सा धैवतांशा ऋषभग्रहांशा गान्धारकोऽस्यामृषभेण युक्तः ।

— ॥ अनुक्तहेत्वन्तरभाषाः ॥ —

— ॥ भासवलिता ॥ १ ॥ —

तिसृष्वथानूदितहेतुषु प्राग्भासादिमां तां वलितां प्रवक्ष्ये ॥ ३०६ ॥
न्यासो ग्रहोंऽशोऽपि च धैवतोऽस्याः स्वल्पर्षभा पञ्चमवर्जिता च ।

— ॥ किरणावली ॥ २ ॥ —

संलक्षयामः किरणावलीं तां न्यासो ग्रहोंऽशोऽपि च धैवतोऽस्याः ॥
तारस्थगान्धारनिषादहृद्या मन्द्रस्फुरन्मध्यमसंयुता च ।

— ॥ शाकललिता ॥ ३ ॥ —

अथोच्यते सा ललिता शकाद्या षड्जग्रहांशापि च धैवतान्त्या ।
युक्तो निषादोऽत्र तु धैवतेनेत्युक्ताश्चतस्रोऽन्तरभाषिकाश्च ॥ ३०८ ॥

— ॥ अथ रागाङ्गाः ॥ २१ ॥ —

एकाधिकां विंशतिमीरयामो रागाङ्गरागानधुना क्रमेण ।

— ॥ शङ्कराभरणः ॥ १ ॥ —

आद्यं तु तेषां प्रतिपादयामस्तं शंकराख्याभरणं च रागम् ॥ ३०९ ॥
न्यासो ग्रहोंऽशोऽपि च मध्यमश्चेत्स मध्यमादिः कथितस्तदानीम् ।
स एष मन्द्रस्वरमुद्रितश्च छायान्तरेणापि युतो यदि स्यात् ॥ ३१० ॥
स्याच्छंकराख्याभरणाभिधानो रागस्तदा शंकरवल्लभोऽयम् ।

— ॥ घण्टारवः ॥ २ ॥ —

घण्टारवाख्यं कथयामि रागं स धैवतांशोऽपि च मध्यामान्तः ॥३११॥
मन्द्रस्थगान्धारकमेदुरोऽयं तथैव तारस्थनिषादहृद्यः ।
रागस्य भिन्नादिमषड्जनाम्नः स्यादङ्गमित्येष भुवि प्रतीतः ॥ ३१२ ॥

— ॥ हंसकः ॥ ३ ॥ —

अथोच्यते हंसकरागलक्ष्म स धैवतस्तत्र भवेद्ग्रहोंऽशः ।
विवर्जितः षड्ज इहैष चांगरागस्य भिन्नादिमषड्जकस्य ॥ ३१३ ॥

— ॥ दीपकः ॥ ४ ॥ —

अथोच्यते दीपकरागलक्ष्म षड्जो ग्रहोंऽशोऽस्य तु मध्यमोऽन्तः ।
गान्धारकः पञ्चमकस्तथाल्पः स मध्यमो दीप्त इह प्रतीतः ॥ ३१४ ॥
अङ्गं भवेत्कैशिकमध्यमस्य भिन्नादिमस्येत्यवधारणीयम् ।
धन्नासिकामुच्चतरां वदन्ति केचित्पुनर्दीपकरागमेनम् ॥ ३१५ ॥

— ॥ रीतिः ॥ ५ ॥ —

रीतिं ब्रुवे षड्ज इह ग्रहोंऽशो न्यासश्च भिन्नादिमषड्जकाङ्गे ।

— ॥ कर्णाटिका ॥ ६ ॥ —

कर्णाटिकां तामिह लक्षयामो न्यासो ग्रहो यत्र तु तारषड्जः ॥ ३१६ ॥
सा धैवतांशा हनुमत्प्रिया च समस्वरा मन्द्रगमध्यमा च ।

— ॥ लाटी ॥ ७ ॥ —

लाटीं ब्रुवे लाटमहीपलाल्या न्यासो ग्रहोंऽशोऽत्र च षड्ज एव ॥३१७॥

— ॥ पाञ्चाली ॥ ८ ॥ —

पाञ्चाल्यभिख्यं कथयामि रागं स्याद्धैवतो न्यास इह ग्रहोंऽशः ।
गान्धारषड्जर्षभभाक्च तारगान्धारको मन्द्रगमध्यमश्च ॥ ३१८ ॥

— ॥ मध्यमादिः ॥ ९ ॥ —

स्यान्मध्यमग्रामभवात्र मध्यमांशग्रहा तत्र तु मध्यमादिः ।

— ॥ मालवश्रीः ॥ १० ॥ —

अथोच्यते संप्रति मालवश्रीः संजायते मालवकैशिकात्सा ॥ ३१९ ॥
तारस्थमन्द्रस्थितषड्जकांशन्यासग्रहा किंच समस्वरेयम् ।

— ॥ तोडी ॥ ११ ॥ —

तोडीं ब्रुवे षाडवरागजन्यां न्यासो ग्रहोंऽशोऽपि च मध्यमोऽस्याः ॥
कम्पस्फुरत्पञ्चमिका च मन्द्रतारस्थगान्धारविभूषितासौ ।
आनन्दकारिण्यपि सा समान्यस्वरा च सेयं मुनिभिर्निरुक्ता ॥ ३२१ ॥

— ॥ बङ्गालः ॥ १२ ॥ —

बङ्गालरागस्य वदामि लक्ष्म न्यासो ग्रहोंऽशोऽपि च मध्यमोऽस्य ।
संजायते षाडवनामरागात्स च प्रहर्षे विनियोजनीयः ॥ ३२२ ॥
लक्ष्यानुरोधे त्विह पञ्चमस्योद्ग्राहोऽथ वा लक्ष्यममानकं स्यात् ।

— ॥ भैरवः ॥ १३ ॥ —

वक्ष्याम्यथो भैरवनामरागं यो भिन्नषड्जाह्वयरागजन्यः ॥ ३२३ ॥

॥ रघुनाथभूपविरचिता ॥

# ॥ सङ्गीतसुधा ॥

— ॥ भैरवः ॥ १३ ॥ —

वक्ष्याम्यथो भैरवनामरागं यो भिन्नषड्जाह्वयरागजन्यः ॥ ३२३ ॥
स धैवतांशोऽपि च मध्यमान्तो विवर्जितश्चर्षभपञ्चमाभ्याम् ।
स्यात्प्रार्थनायां विनियोजनीयः समस्वरोऽसाविति सङ्गिरन्ते ॥ ३२४ ॥

— ॥ वराली ॥ १४ ॥ —

अथो वरालीमभिदध्महे तां जन्यां च भिन्नादिमपञ्चमेन ।
षड्जग्रहन्यासयुता तथैव सा धैवतांशा मृदुमध्यमा च ॥ ३२५ ॥
तारस्फुरद्धैवतिका समान्यस्वरा च शृङ्गाररसे च गेया ।

— ॥ गुर्जरी ॥ १५ ॥ —

तां गुर्जरीं संप्रति लक्षयामो जाता तु या पञ्चमषाडवेन ॥ ३२६ ॥
अंशो ग्रहः स्यादृषभश्च तस्यां न्यासो भवेन्मध्यगमध्यमश्च ।
तारर्षभा चर्षभधैवताभ्यां वह्नी च शृङ्गाररसे च गेया ॥ ३२७ ॥

— ॥ गौडः ॥ १६ ॥ —

अपञ्चमष्टक्कभवस्तु गौडो न्यासो ग्रहोंऽशोऽत्र भवेन्निषादः ।

— ॥ कोलाहलः ॥ १७ ॥ —

कोलाहलं टक्कभवं प्रवक्ष्ये तारस्वरैष्टक्कवदेष सर्वैः ॥ ३२८ ॥

— ॥ वसन्तः ॥ १८ ॥ —

हिन्दोलजन्यं कथये वसन्तं पूर्णस्तु हिन्दोलक एव सोऽयः ।

— ॥ धन्यासी ॥ १९ ॥ —

वक्ष्यामि धन्यास्यभिधां च जातां शुद्धादिमात्कैशिकमध्यमाद्या ॥
षड्जग्रहोंऽशोऽपि च मध्यमोऽन्तः स्यादल्पगान्धारकपञ्चमश्च ।
विवर्जितोऽसावृषभस्वरेण वीरे रसे स्याद्विनियोजनीयः ॥ ३३० ॥

---

— ॥ देशी ॥ २० ॥ —

देश्युच्यते सा किल रेवगुप्तजातर्षभान्ता ग्रहकादनन्ता ।
षड्जे निषादोऽपि च मध्यमे च या भूयसी पञ्चमवर्जिता च ॥ ३३१ ॥
मन्द्रस्थगान्धारमनोहरा च गेया रसे सा करुणाभिधाने ।

---

— ॥ देशाख्या ॥ —

देशाख्यकालक्षणमीरयामो जाता हि गान्धारकपञ्चमात्सा ॥ ३३२ ॥
न्यासश्च गान्धार इह ग्रहोंऽशो निषादमन्द्रा च समस्वरेयम् ।
विवर्जिता स्यादृषभस्वरेण गान्धारभाजा स्फुरितेन युक्ता ॥ ३३३ ॥

---

— ॥ अथ भाषाङ्गाः ॥ —

रागाङ्गरागाः कथिताः समस्ता भाषाङ्गरागानधुना प्रवक्ष्ये ।

---

— ॥ गाम्भीरी ॥ १ ॥ —

ते विंशतिस्तत्र वदामि गाम्भीर्याख्यं तु षड्जोऽत्र ग्रहोंऽशकश्च ॥ ३३४
सर्वस्वराणां बहुलत्वमेवं समस्वरत्वं सहतारषड्जम् ।

---

— ॥ वेहारी ॥ २ ॥ —

मांशग्रहान्त्यः स निषादहीनस्तारस्थषड्जो मृदुमध्यमश्च ॥ ३३५ ॥
समस्वरस्तारयुतश्च वेहार्याख्यो हि रागः कथितः प्रवीणैः ।

---

— ॥ श्वसिता ॥ ३ ॥ —

वक्ष्यामि रागं श्वसिताभिधानं गान्धारकस्तत्र भवेद् ग्रहोंऽशः॥ ३३६ ॥
अंशस्तु षड्जः पुनरत्र मन्द्रः समस्वरोऽपर्षभपञ्चमश्च ।

— ॥ उत्पली ॥ ४ ॥ —

उत्पल्यभिख्यं कथयामि रागं स्यान्मध्यमो न्यास इह ग्रहोंऽशः ॥
समस्वरस्तारगधैवतश्च तारस्थितौ पञ्चमषड्जकौ द्वौ ।
स्यान्मन्द्रगस्थानगतो निषादः संपूर्ण इत्येष भुवि प्रतीतः ॥ ३३८ ॥

— ॥ गौली ॥ ५ ॥ —

तं गौल्यभिख्यं कथयामि रागं स्याद्धैवतो न्यास इह ग्रहोंऽशः ।
तथैव गान्धारनिषादहीनस्तारर्षभो बहृवृषभश्च षड्जः ॥ ३३९ ॥
भूयस्तरां धैवतकश्च गाने भवेदमुष्मिन्निति वेदितव्यम् ।

— ॥ नादान्तरी ॥ ६ ॥ —

नादान्तरीं तामथ वर्णयामः स मध्यमः स्यादिह तु ग्रहोंऽशः ॥ ३४० ॥
स पञ्चमो न्यासतया प्रतीतस्तारर्षभा मन्द्रमनोहरा च ।
गान्धारकाल्पापि च धैवतेन बह्वी तथा षड्जनिषादकाभ्याम् ॥ ३४१ ॥

— ॥ नीलोत्पली ॥ ७ ॥ —

नीलोत्पलीलक्ष्म निरूपयामः स्याद्धैवतोंऽशो ग्रह एव तस्याः ।
न्यासस्तु तारस्थितषड्ज एव समस्वरा मन्द्रगपञ्चमा सा ॥ ३४२ ॥
तथैव गान्धारनिषादहीना नीलोत्पलीयं कथिता मुनीन्द्रैः ।

— ॥ छाया ॥ ८ ॥ —

छायाभिधानं कथयामि रागं स्यान्मध्यमो न्यास इह ग्रहोंऽशः ॥३४३॥
मन्द्रर्षभः षड्जविवर्जितश्च गान्धारतारोऽधिकपञ्चमश्च ।
अल्पे भवन्त्यत्र च पञ्चमेन विना स्वराश्चेति विवेचनीयम् ॥ ३४४ ॥

— ॥ तरङ्गिणी ॥ ९ ॥ —

तरङ्गिणीं तामथ लक्षयामः सा धैवतांशा रिषभग्रहान्या ।
समस्वरा मध्यमषड्जमन्द्रा पूर्णा च तारर्षभधैवता च ॥ ३४५ ॥

— ॥ गान्धारगतिः ॥ १० ॥ —

वक्ष्यामि गान्धारगतेश्च लक्ष्म गान्धारकांशापि च षड्जकान्त्या ।
समस्वरा पञ्चमकस्वरोऽत्र तारा निषादर्षभधैवताः स्युः ॥ ३४६ ॥

— ॥ वेरञ्जिका ॥ ११ ॥ —

वेरञ्जिकां संप्रति वर्णयामो न्यासग्रहांशः पुनरत्र षड्जः ।
मन्द्रस्थषड्जा निधभूयसी च पाल्पा च तारस्थितमध्यमा च ॥

— ॥ डोम्बक्रिया ॥ १२ ॥ —

डोम्बक्रियां वच्मि तु भिन्नषड्जभाषास्थभेदत्रवणाप्रसूताम् ।
षड्जग्रहांशामपि धैवतान्तां विवर्जितां चर्षभपञ्चमाभ्याम् ॥ ३४८ ॥

— ॥ सावेरी ॥ १३ ॥ —

सावेर्यभिख्यां ककुभीयभाषारगान्तिकारागभवां वदामि ।
षड्जो ग्रहोऽशोऽत्र तु धैवतोऽन्यो गान्धारतारा मृदुमध्यमा च ॥
स्यादल्पषड्जा गतपञ्चमा च गेया रसे सा करुणाभिधाने ।

— ॥ वेलावली ॥ १४ ॥ —

योक्ता विभाषा ककुभस्य भोगवर्धन्यभिख्या किल तत्प्रसूता ॥ ३५० ॥
वेलावलीं तामिह वर्णयामः स्याद्धैवतो न्यास इह ग्रहोऽशः ।
गान्धारमन्द्रा च समस्वरा च तारस्फुरद्धैवतसंयुता च ॥ ३५१ ॥
कम्पस्फुरत्षड्जवती प्रयोज्या सा विप्रलम्भे मुरवैरिहृद्या ।

— ॥ प्रथममञ्जरी ॥ १५ ॥ —

मञ्जर्यभिख्यां प्रथमादिमां तां वक्ष्ये ग्रहोंऽशोऽत्र तु पञ्चमोऽन्त्यः ॥
भूयिष्ठगान्धारक मध्यमा च तारस्फुरद्धैवतकर्षभा च ।
मन्द्रस्थगान्धारसमन्विता च महोत्सवे सा विनियोजनीया ॥ ३५३ ॥

— ॥ आदिकामोदी ॥ १६ ॥ —

वङ्गालिकायाः किल भिन्नषड्जप्रभेदभूता कथिता हि भाषा ।
तदुद्भवां संकथयेऽधुनाऽऽदिकामोदिकां मन्द्रगमध्यमान्ताम् ॥ ३५४ ॥
स्याद्धैवतो न्यास इह ग्रहोंऽशो गान्धारतारा च समस्वरा च ।

— ॥ नागध्वनिः ॥ १७ ॥ —

तद्टक्कभाषात्मकवेगरञ्जीसंजात नागध्वनिलक्ष्म वक्ष्ये ॥ ३५५ ॥
न्यासो ग्रहोंऽशोऽत्र तु षड्ज एव विवर्जितो धैवतपञ्चमाभ्याम् ।
वीरे रसेऽसौ विनियोजनीयो भवेदिति प्राज्ञ उदीरयन्ति ॥ ३५६ ॥

— ॥ वराटी ॥ १८ ॥ —

वराटिकां संप्रति वर्णयामः कुशीलवानां कुतुकाय शुद्धाम् ।
न्यासो ग्रहोंऽशः पुनरत्र षड्जो निषादगान्धारकधैवताढ्या ॥ ३५७ ॥
तारस्फुरद्धैवतषड्जका च शान्ते रसे सा विनियोजनीया ।

— ॥ नट्टा ॥ १९ ॥ —

हिन्दोलभाषात्मकपिञ्जरीजां नट्टां प्रवक्ष्ये सह लक्षणेन ॥ ३५८ ॥
समस्वरां गीतविदो वदन्ति तां तारगान्धारकपञ्चमां च ।
धनी क्रमात्तारगमन्द्रगौ च न्यासो ग्रहोंऽशोऽत्र तु षड्ज एव ॥ ३५९ ॥

— ॥ कर्णाटबङ्गालः ॥ २० ॥ —

कर्णाटबङ्गालमथाङ्गमाहुः सन्न्यासयुक्तं खलु वेगरञ्ज्याः ।

तारस्थगान्धार इह ग्रहोंऽशः शृङ्गारयोग्यः स विपञ्चमश्च ॥ ३६० ॥
समीरिता विंशतिभेदभिन्ना भाषाङ्गरागाः पुनरत्र सम्यक् ।

---

— ॥ अथ क्रियाङ्गाः ॥ —

भाषाङ्गरागानखिलान्निरूप्य क्रियाङ्गरागान्दश पञ्च वक्ष्ये ।
आद्याऽत्र भावक्र्यभिधा स्वभावक्री तद्द्वितीयाऽथ परा शिवक्री ॥
भवेच्चतुर्थी मकरादिमक्री त्रिणेत्रपूर्वक्र्यभिधा परा च ।
षष्ठः पुनः स्यात्कुमुदादिमक्री परा दनुक्री किल सप्तमीस्यात् ॥ ३६२ ॥
ओजक्र्यभिख्या पुनरष्टमीस्यादिन्द्रक्र्यभिख्या नवमी च वेद्या ।
अन्या भवेन्नागकृतिस्तथैकादशी भवेद्धन्यकृतिस्तु नाम्ना ॥ ३६३ ॥
स्याद् द्वादशी सा विजयादिमक्री क्रियाङ्गनामान्युदितानि चैवम् ।
स्याद् द्वादशानामपि च क्रियाङ्गनाम्नां च साधारण लक्ष्म वक्ष्ये ॥
न्यासो ग्रहोंऽशोऽधिकषड्जकत्वं समानमेषामितरत्तु सर्वम् ।
पूर्णत्वतत्तद्गमकान्वितत्वं स्वराल्पताद्यं किल लक्ष्यगम्यम् ॥ ३६५ ॥

---

— ॥ रामकृतिः ॥ —

वक्ष्यामहे रामकृतिं क्रियाङ्गरागं तमापञ्चमतारमन्द्रम् ।
न्यासो ग्रहोंऽशः पुनरत्र षड्जो भवेदमुष्मिन्रिषभोऽधिकश्च ॥ ३६६ ॥

---

— ॥ गौडकृतिः ॥ —

वक्ष्यामहे गौडकृतिं क्रियाङ्गं न्यासो ग्रहोंऽशोऽपि च षड्ज एव ।
सा मध्यमेनापि च पञ्चमेन बह्वी विहीनर्षभधैवता च ॥ ३६७ ॥
तारस्थगान्धारसमन्विता च मन्द्रस्फुरत्पञ्चमसंयुता च ।

---

— ॥ देवकृतिः ॥ —

वक्ष्यामहे देवकृतिं क्रियाङ्गं न्यासांशषड्जामपि धैवताद्याम् ॥ ३६८ ॥

विवर्जितां चर्षभपञ्चमाभ्यां समस्वरां मन्द्रनिषादयुक्ताम् ।
सा मध्यमेन प्रचुरेण युक्ता वीरे रसे सा विनियोजनीया ॥ ३६९ ॥

---

— ॥ अथ उपाङ्ग रागाः ॥ —

— ॥ पूर्णाटिका ॥ १ ॥ —

त्रिंशत्युपाङ्गेष्वथ संप्रवक्ष्ये पूर्णाटिकां धैवतकग्रहांशाम् ।
न्यासो भवेन्मध्यम एव तस्यां संपूर्णता पञ्चमभूरिता च ॥ ३७० ॥
तां सालगं केचन वर्णयन्ति रागं ह्युपाङ्गं किल भिन्नषड्जे ।

---

— ॥ देवालः ॥ २ ॥ —

देवालरागस्य वदामि लक्ष्म स्यान्मध्यमो न्यास इह ग्रहोंऽशः ॥ ३७१॥
मन्द्रर्षभो मन्द्रगधैवतश्च भवेन्निषादर्षभधैवतोत्थः ।
स्यान्मध्यमालम्बितकम्पितोऽसौ भवेदुपाङ्गं बहुलाख्यरागे ॥ ३७२ ॥
तां देवलामाह मतङ्गमौनी कामोदलक्ष्मात्र वदन्ति चैके ।

---

— ॥ कुरञ्जी ॥ ३ ॥ —

कुरञ्जिकां संप्रति लक्षयामः स्यात्पञ्चमो न्यास इह ग्रहोंऽशः ॥ ३७३ ॥
मन्द्रस्थगान्धारयुतर्षभेण तथा निषादेन च वर्जिता च ।
षड्जेन बह्वी सहपञ्चमेन भवेदुपाङ्गं (ललिता) बहुलाख्यरागे ॥ ३७४ ॥
स्यान्मध्यमग्रामभवाऽत्र मध्यमांशग्रहा तत्र तु मध्यमादिः ।

---

— ॥ अथ वराट्युपाङ्गानि ॥ —

वक्ष्याम्युपाङ्गानि बराटिकायाः षड्जग्रहान्तादिमकानि षट् च ॥

---

— ॥ कौन्तलिका ॥ १ ॥ —

स्यात्कौन्तलीकान्वितधैवताच समन्द्रषड्जा च निषादभूरिः ।

— ॥ द्राविडी ॥ २ ॥ —

स्याद् द्राविडी तत्र तु भूरिशालिनिषादमन्द्रा स्फुरितर्षभा च ॥ ३७६ ॥

— ॥ सैन्धवी ॥ ३ ॥ —

स्यात्सैन्धवी धैवतषड्जकम्पाऽन्विता च गान्धारकभूयसी सा ।
मन्द्रस्फुरन्मध्यमसंयुता च तथैव शृङ्गाररसे च गेया ॥ ३७७ ॥

— ॥ उपस्थान वराटिका ॥ ४ ॥ —

वक्ष्याम्युपस्थानवराटिकां तां या मण्डिता मध्यमधैवताभ्याम् ।
मन्द्रस्थिताभ्यामपि तादृशेन निषादकेनापि च भूषिता सा ॥ ३७८ ॥

— ॥ हस्तस्वरवराटी ॥ ५ ॥ —

हस्तस्वराद्यां कथये वराटीं स्यात्पञ्चमः कम्पित आहतश्च ।
मन्द्रस्थितः स्यादिह धैवतश्च ग्रहादिकं पूर्ववदेव वेद्यम् ॥ ३७९ ॥

— ॥ प्रतापवराटी ॥ ६ ॥ —

प्रतापपूर्वां कथये वराटीं सा मन्द्रषड्जाऽपि च कम्प्रषड्जा ।
स्यादद्भुते सा विनियोजनीया वराट्युपाङ्गानि षडीरितानि ॥ ३८० ॥

— ॥ अथ तोड्युपाङ्गानि ॥ —

— ॥ छायातोडी ॥ १ ॥ —

छायादिमां तां कथयामि तोडीं रागाङ्गमध्ये प्रथमं निरुक्ताम् ।
तोडी विहीनर्षभपञ्चमा चेच्छायाभिधा तोड्यभिधा तदा सा ॥

— ॥ तुरुष्कतोडी ॥ २ ॥ —

तुरुष्कतोडीमधुनाभिधास्ये तोड्येव सा ताडितक स्वरा चेत् ।
तथाऽल्पगान्धारयुता निषादे स्याद् भूयसी सा किल धैवते च ॥

— ॥ गुर्जर्युपाङ्गानि ॥ —

— ॥ महाराष्ट्रगुर्जरी ॥ १ ॥ —

वक्ष्ये महाराष्ट्र्यभिधं तु रागं न्यासो ग्रहः स्यादृषभस्तथांशः ।
निषादमन्द्रा गतपञ्चमा च गेयोत्सवे ताडितकस्वरेयम् ॥ ३८३ ॥

---

— ॥ सौराष्ट्रगुर्जरी ॥ २ ॥ —

सा गुर्जरी कम्प्रनिषादवल्ली सौराष्ट्रिकाद्या किल गुर्जरी स्यात् ।

---

— ॥ दक्षिणगुर्जरी ॥ ३ ॥ —

सा गुर्जरी कम्पितमध्यमा च स्यात्ताडितान्यस्वरसंयुता च ॥ ३८४ ॥
यदा तदा दक्षिणगुर्जरीति भजेदभिख्यामिति वेदितव्यम् ।

---

— ॥ द्राविडगुर्जरी ॥ ४ ॥ —

मन्द्रे च तारे स्फुरितर्षभा चेत्सा गुर्जरी द्राविडगुर्जरीति ॥ ३८५ ॥
चत्वारि सौराष्ट्र्यभिधादिमानि गुर्जर्युपाङ्गानि निरूपितानि ।

---

— ॥ वेलावल्युपाङ्गानि ॥ —

— ॥ भुञ्छी ॥ १ ॥ —

भुञ्छी तु हीना किल मध्यमेन न्यासो ग्रहोंऽशोऽपि च धैवतोऽस्याम् ॥
आन्दोलिता पञ्चमषड्जयोः सा स्याद्विप्रलम्भे विनियोजनीया ।

---

— ॥ स्तम्भावती ॥ २ ॥ —

स्तम्भावती स्यादपपञ्चमा सा न्यासो ग्रहोंऽशोऽत्र तु षड्ज एव ॥
आन्दोलिता मध्यमके निषादे तथैव शृङ्गाररसे प्रयोज्या ।

---

— ॥ छायावेलावली ॥ ३ ॥ —

सा कम्प्रमध्यस्थितमध्यमा चेच्छायादिवेलावलिका तदा स्यात् ॥३८८

—— ॥ प्रतापवेलावली ॥ ४ ॥ —

प्रतापवेलावलिका च सैव स्यादाहता चर्षभपञ्चमेन ।
चत्वारि चैवं कथितानि वेलावल्या उपाङ्गानि यथाक्रमेण ॥ ३८९ ॥

—

— ॥ भैरवी ॥ (भैरवोपाङ्गम्) —

तां भैरवोपाङ्गतया प्रतीतां भैरव्यभिख्यां प्रतिपादयामः ।
स्याद्धैवतो न्यास इह ग्रहोंऽशो गान्धारकः स्यादिह तारमन्द्रः ॥ ३९०
शेषाः समस्ताः समतां प्रयान्ति स्वरा इति प्राञ्च उदीरयन्ति ।

—

— ॥ सिंहली कामोदी ॥ (कामोदोपाङ्गम् ) —

कामोदिका मन्द्रगमध्यमा च कम्पस्फुरद्धैवतिका यदि स्यात् ॥ ३९१ ॥
सा सिंहलीकादिमका तदा स्यात्कामोदिकोपाङ्गमिमां वदन्ति ।

—

— ॥ छायानट्टा ॥ (नट्टोपाङ्गम्) —

नट्टा यदि स्यान्मृदुपञ्चमा च कम्प्रा च गान्धारनिषादकाभ्याम् ॥ ३९२
छायादिनट्टा भवतीति नट्टारागस्य चोपाङ्गमिमां गृणन्ति ।

—

— ॥ कोलाहला (टक्कोपाङ्गम्) —

वक्ष्यामहे संप्रति टक्कभाषाकोलाहलां रामकृतिं च जाताम् ॥ ३९३ ॥
संन्यासषड्जापि च मध्यमांशा विवर्जिता सा किल पञ्चमेन ।
भाषाङ्गमध्ये कथिता च सेयमुपाङ्गभावं कथमश्नुवीत ॥ ३९४ ॥
अत्रोच्यते सेयमुपाङ्गतामप्युपाङ्गसारूप्यवशादुपैति ।
अन्यत्र चैवं पुनरूहनीयं वीरे रसे सा विनियोजनीया ॥ ३९५ ॥

—

— ॥ भल्लातिका ॥ (हिन्दोलोपाङ्गम्) —

हिन्दोलभाषात्मकतां प्रयातच्छेवाटिकायां किल तत्प्रसूता ।
भल्लातिका स्यादृषभेण हीना स्याद्धैवतो न्यास इह ग्रहोंऽशः ॥ ३९६ ॥
मन्द्रस्फुरद्धैवतसंयुता सा भवेच्च शृङ्गाररसे नियोज्या ।

---

— ॥ आन्धाली ॥ —

यो ग्रामरागेषु निरूपितः प्राक् शुद्धादिमः पञ्चमनामरागः ॥ ३९७ ॥
तदीयभाषात्मकदाक्षिणात्यविभाषिकान्धाल्युदितां वदामः ।

---

— ॥ मल्हारी ॥ —

मल्हारिका मन्द्रगमध्यमा सा स्यात्पञ्चमो न्यास इह ग्रहोंऽशः ॥ ३९८ ॥
गान्धारहीनापि च ताडिता च सेयं तु शृङ्गाररसे प्रयोज्या ।

---

— ॥ मल्हारः ॥ —

आन्धाल्युपाङ्गं प्रवदामि सम्यङ् मल्हारकं तारनिषादयुक्तम् ॥ ३९९ ॥
स्याद्धैवतो न्यास इह ग्रहोंऽशो वर्ज्यश्च षड्जोऽत्र तु पञ्चमश्च ।
मन्द्रस्थगान्धारविवर्जितश्च स्यादौडुवोऽयं कथितो मुनीन्द्रैः ॥ ४०० ॥

---

— ॥ कर्णाटगौडः ॥ —

कर्णाटगौडं प्रतिपादयामो न्यासो ग्रहोंऽशः पुनरत्र षड्जः ।
स्याद्देशवालोऽपि स एव षड्जे त्वान्दोलितश्चर्षभपञ्चमेन ॥ ४०१ ॥

---

— ॥ तुरुष्कगौडः ॥ —

तौरुष्कगौडं प्रतिपादयामो न्यासो ग्रहोंऽशोऽत्र निषाद एव ।
गान्धारभूरिर्मृदुताडितश्च विवर्जितश्चर्षभपञ्चमाभ्याम् ॥ ४०२ ॥

---

— ॥ द्राविडगौडः ॥ —

अथोच्यते द्राविडगौडरागो न्यासो ग्रहोंऽशोऽत्र निषाद एव ।
गान्धाररूपस्तिरुपेण युक्तस्तथा स्फुरत्पञ्चमषड्जकश्च ॥ ४०३ ॥
इतीरितास्त्रिंशदुपाङ्गरागाः सर्वे निरुक्ता दशभेदभिन्नाः ।

---

— ॥ प्रसिद्धरागाः ॥ —

समीक्ष्य नन्दीश्वरसंहितां तामालोक्य शास्त्रं भरतप्रणीतम् ॥ ४०४ ॥
ग्रन्थं बृहद्देश्यभिधं मतङ्गमुनिप्रणीतं निपुणं निरीक्ष्य ।
विचार्य तां याष्टिकसंहितां च ज्ञात्वाञ्जनानन्दनसंहितां च ॥ ४०५ ॥
उमापतेराधुनिकस्य तन्त्रमुद्वीक्ष्य नन्दीशमतानुसारि ।
सङ्गीतसारं समवेक्ष्य विद्यारण्याभिधश्रीचरणप्रणीतम् ॥ ४०६ ॥
निशाम्य सङ्गीतकचन्द्रिकाख्यां कृतिं च भट्टादिममाधवस्य ।
श्रीशार्ङ्गदेवेन कृतां च सप्ताध्यायीं तथा लक्ष्मविरोधिलक्ष्याम् ॥ ४०७ ॥
अबोधकात्यल्पतरप्रयोगामुद्दिष्टरागानुदितस्वरूपाम् ।
एनां स्फुटीकर्तुमिह प्रवृत्तौ यौ ब्राह्मणौ केशवकल्लिनाथौ ॥ ४०८ ॥
टीकाद्वयेनापि कृतेन ताभ्यामबोधितास्पष्टपदार्थभेदाम् ।
त्यक्त्वामथो गायकवैणिकाद्यैर्विलोक्य लक्ष्यस्य च लक्षणस्य ॥ ४०९ ॥
यथा विरोधो न भवेत्तथैव पद्यावलीज्ञानवतां जनानाम् ।
यथैकवारश्रवणेन सद्यो जायेत सङ्गीतरहस्यबोधः ॥ ४१० ॥
निरूपितास्ते निपुणं तथैव लक्ष्यानुरूपैर्ललितैर्वचोभिः ।
न्यासस्वरांशग्रहतारमन्द्रापन्याससंन्याससुखैर्विशेषैः ॥ ४११ ॥
तल्लक्षणैरप्यपरैश्च वादिविवादिसंवाद्यनुवादिभेदैः ।
निरूपिता लक्षणतो विविच्य रागाश्चतुःषष्ट्यधिके शते द्वे ॥ ४१२ ॥

---

— ॥ श्रीविद्यारण्यमतम् ॥ —

कर्णाटसिंहासनभाग्यविद्यारण्याभिधश्रीचरणाग्रणीभ्यः ।
आरभ्य रागान्प्रचुरप्रयोगान्पञ्चाशतं चाकलये षडङ्गान् ॥ ४१३ ॥
रागास्तु पञ्चाशदिहोपदिष्टा नट्टादयः सर्वजगत्प्रसिद्धाः ।

---

— ॥ मेलाः ॥ —

तेषां मताः पञ्चदशैव मेलाः क्रमात्तदुद्देशमिहोमनामः ॥ ४१४ ॥

मेलेषु तेषु प्रथमोऽथ नट्टामेलस्ततो गुर्जरिकाख्यमेलः ।

मेलस्तृतीयस्तु वराटिकायाः श्रीरागमेलस्तु भवेच्चतुर्थः ॥ ४१५ ॥

स्यात्पञ्चमो भैरविकाख्यमेलोऽन्यः शङ्कराद्याभरणस्य मेलः ।

स्यात्सप्तमस्त्वाहरिकाख्यमेलो वसन्तभैरव्यभिधस्य मेलः ॥ ४१६ ॥

स्यादष्टमो गायकबोधहेतुः सामन्तमेलो नवमो निरुक्तः ।

काम्बोदिकाया दशमस्तु मेलस्त्वेकादशश्चापि मुखारिकायाः ॥ ४१७ ॥

मेलो भवेद् द्वादश एव शुद्धरामक्रियायास्तदनन्तरं स्यात् ।

केदारगौडस्य च मेल एको हीजुज्जिकायास्त्वपरोऽत्र मेलः ॥ ४१८ ॥

देशाक्षिकामेल इहान्तिमः स्यान्मेलाः क्रमात्पञ्चदशोपदिष्टाः ।

रागांस्तु मेलप्रभवांश्च तत्तद्रागप्रसङ्गेऽपि निरूपयामः ॥ ४१९ ॥

---

— ॥ वीणानिरूपणम् ॥ —

निरूपितानामपि मेलकानां स्फुटा विपञ्च्यां भवति प्रतीतिः ।

निरूप्यते तेन तथात्र वीणा सा चात्र वीणा त्रिविधा विभाति ॥ ४२० ॥

तत्रादिमा स्यात्किल शुद्धमेलवीणा च सा सर्वजनैकहृद्या ।

ततो द्वितीया खलु मध्यमेलवीणा च सा सर्वजगत्प्रसिद्धा ॥ ४२१ ॥

स्यादच्युतश्रीरघुनाथभूपमेलाख्यवीणा कथिता तृतीया ।

तिस्रोऽपि वीणाः प्रतिपादयामो यथाक्रमं वैणिकबोधहेतोः ॥ ४२२ ॥

---

— ॥ शुद्धमेलवीणा ॥ —

यथेच्छमाकल्पितवल्लकी च स्वरव्यवस्था च यथेच्छमुक्ता ।

वीणोपरिस्थानगताश्चतस्रस्ता लोहतन्त्रीः परिकल्प्य पश्चात् ॥ ४२३ ॥

पार्श्वे तु तन्त्रीत्रितयं प्रकल्प्य कार्या च सा द्वादशपर्वयुक्ता ।

पर्वक्रमेण स्वरसंनिवेशः प्रकाश्यते वैणिकबोधहेतोः ॥ ४२४ ॥

षड्जो भवेत्केवलयापि तन्त्र्या तत्पर्वणि स्पर्शनमन्तरेण ।

आद्ये च पर्वण्यृषभो निवेश्यः स्याच्छुद्धगान्धार इह द्वितीये ॥ ४२५ ॥

गान्धारकः पर्वणि तत्तृतीये साधारणः पर्वणि तच्चतुर्थे ।

गान्धारकः स्याच्च्युतमध्यमादिस्ततः परं पञ्चमपर्वणि स्यात् ॥ ४२६ ॥

शुद्धादिमो मध्यमको निवेश्यस्ततः परं पर्वणि चापि षष्ठे ।
स्यान्मध्यमोऽयं च्युतपञ्चमादिरेवं स्वरान्पर्वसु षट्सु युञ्ज्यात् ॥ ४२७॥

स्यात्पञ्चमः पर्वणि सप्तमे च तथाष्टमे पर्वणि धैवतः स्यात् ।
निवेशनीयो नवमे निषादः कैशिक्यभिख्यो दशमे निषादः ॥ ४२८ ॥

एकादशे काकलिको निषादः स्याद् द्वादशे तारकषड्ज एव ।
शिष्टेषु पर्वस्वपि सूक्ष्मभूतेष्वेवं निवेश्याः सकलाः स्वरास्ते ॥ ४२९ ॥

पर्वक्रमेण स्वरसंनिवेशं निरूप्य तन्त्रीक्रमतो वदामः ।
तन्त्र्यादिमायामनुमन्द्रषड्जस्तन्त्र्यां निवेश्यस्तदनन्तरं तु ॥ ४३० ॥

द्वितीयतन्त्र्यामनुमन्द्रपूर्वः स्यात्पञ्चमश्चापि निवेशनीयः ।
तृतीयतन्त्र्यामपि मन्द्रषड्जो मन्द्रादिमो मध्यमकश्चतुर्थ्याम् ॥ ४३१ ॥

तन्त्रीत्रयेऽथो विनिवेशिते तु ततो वदामः स्वरयोजनं च ।
मध्यस्थषड्जेन समाननादा भवेदिह प्राथमिकी तु तन्त्री ॥ ४३२ ॥

द्वितीयतन्त्रीः किल पञ्चमेन मन्द्रस्थितेनापि समाननादा ।
तृतीयतन्त्रीः खलु मन्द्रषड्जसमाननादा कथिता प्रवीणैः ॥ ४३३ ॥

एताश्चतस्रः श्रुतिपूर्वतन्त्र्यो नान्ये स्वराश्चापि भवन्ति तत्र ।
एवं निरुक्ता खलु शुद्धमेलवीणा प्रवीणव्यवहारयोग्या ॥ ४३४ ॥

---

### — ॥ मध्यमेलवीणा ॥ —

ततः परं संप्रति मध्यमेलवीणां विशेषेण निरूपयामः ।
पूर्वोदिता या खलु शुद्धमेलवीणात्र तस्यामुपरिस्थतन्त्र्याम् ॥ ४३५ ॥

प्रास्तः स्वरः प्रागनुमन्द्रषड्जः स्यात्पञ्चमोऽस्यामनुमन्द्रपूर्वः ।
तन्त्रीर्द्वितीया खलु यानुमन्द्रपूर्वेण युक्ता खलु पञ्चमेन ॥ ४३६ ॥

तस्यां निवेश्यः किल मन्द्रषड्जस्तृतीयतन्त्र्यां स्वरमीरयामः ।
तृतीयतन्त्रीः किल मन्द्रषड्जयुक्ता पुरा संप्रति तत्र तन्त्र्याम् ॥ ४३७ ॥

मन्द्रादिमः पञ्चम एव वेद्यश्चतुर्थतन्त्र्यां स्वरमामनामः ।
तन्त्रीस्तु मन्द्रादिममध्यमेन युक्ता तुरीया किल वाथ तस्याम् ॥ ४३८॥

मन्द्रादिषड्जो विनिवेशनीयः पार्श्वस्थतन्त्रीत्रितयं यदैव ।
ऊर्ध्वस्थतन्त्रीत्रयतुल्यनादं तदा भवेन्मध्यममेलवीणा ॥ ४३९॥

— ॥ अच्युतश्रीरघुनाथभूपमेलवीणा ॥ —

तामच्युतश्रीरघुनाथभूपमेलाख्यवीणां प्रतिपादयामः ।
पूर्वोक्तवीणाद्वय एव मध्यमेलाख्यवीणा खलु या च तस्याम् ॥ ४४० ॥

तन्त्रीसमेतश्रुतिपञ्चमां च तथैव मन्द्रस्थितपञ्चमां च ।
तथान्यतन्त्रीमपि पञ्चमेनानुमन्द्रपूर्वेण विशोभमानाम् ॥ ४४१ ॥

विधाय तिस्रोऽपि समाननादास्तन्त्रीसहायेन च मध्यमेन ।
आद्यं स्वरं पञ्चममेव कृत्वा वाद्येत वीणा यदि वैणिकेन ॥ ४४२ ॥

एषाऽच्युतश्रीरघुनाथभूपमेलाख्यवीणा कथिता तृतीया ।
समस्तरागैकनिदानभूता मेलद्वयं चाप्यतिरिच्य सेयम् ।
रक्तिप्रदा श्रीरघुनाथभूपमहीमहेन्द्रेण विनिर्मिता च ॥ ४४३ ॥

आचन्द्रतारान्तमियं हि वीणा भूयान्मुदे गायकवैणिकानाम् ।
तिस्रोऽपि वीणाः प्रतिपाद्य वक्तुं रागानुपोद्घातमिहामनामः ॥ ४४४ ॥

---

— ॥ उपोद्घातः ॥ —

कदाचिदागात्कदलीवनान्तमासेदिवान्याष्टिकमाञ्जनेयः ।
सङ्गीतविद्योपनिषद्रहस्यमध्यापयन्तं धुरि दक्षमुख्यान् ॥ ४४५ ॥

देशीयरागेष्वपि च स्वरेषु श्रुतिष्वमूषामपि लक्षणेषु ।
नानाविरोधानिह याष्टिकं तं ते दक्षमुख्यास्त्विवति पर्यपृच्छन् ॥ ४४६ ॥

सप्त स्वरा द्वादश वैकृता ये तेषां चतस्रः श्रुतयो न चान्याः ।
पञ्चश्रुतिः षट्श्रुतिकश्च देशीरागेऽपि केषांचिदिह स्वराणाम् ॥ ४४७ ॥

अतो भवेच्छास्त्रविरोध एषां त्यागे तु तासां न हि रागलाभः ।
एवं विरोधे परिशङ्क्यमाने ततस्त्ववादीत्परिहारमेवम् ॥ ४४८ ॥

शास्त्रस्य लक्ष्यस्य मिथो विरोधो न स्याद्यथा स्यादपि रागलाभः ।
स पर्यहार्षीदिति तान्विरोधान्द्राग्याष्टिको रामपदाब्जसेवी ॥ ४४९ ॥

तां याष्टिकोक्तामविरोधरीतिं यक्षौघगीतामपि गानशैलीम् ।
आलोच्य बुद्ध्या चिरमाञ्जनेयो लक्ष्याविरुद्धं प्रणिनाय शास्त्रम् ॥ ४५० ॥

एषां श्रुतीनां नियमः स्वराणां न ग्रामजातिप्रमुखस्य चास्ति ।
भजन्ति नानाविधदेशजाताश्छायास्तथैते किल देशिरागाः ॥ ४५१ ॥

इत्याञ्जनेयेन विचार्य सम्यक् शास्त्रे निरुक्ताः किल देशिरागाः ।
नट्टादिकानां च सहेतुकानां लक्ष्माणि वक्ष्याम्यथ तेन तेन ॥ ४५२ ॥

---

— ॥ नट्टारागः ॥ —

द्वे धैवतीमार्षभिकां च हित्वा याः पञ्च शुद्धा इह जातयः स्युः ।
ता ग्रामरागे प्रकृतित्वमाप्ता हिन्दोलनाम्नीत्यवधारणीयम् ॥ ४५३ ॥
हिन्दोलरागात्प्रबभूव भाषा पिञ्जर्यभिख्यानवती किलेयम् ।
नट्टा तु तज्जन्यतयोपदिष्टा वक्ष्यामि तस्याः किल मेलमादौ ॥ ४५४ ॥
षड्जस्तथा मध्यमपञ्चमौ च शुद्धाः स्वराः षट्छ्रुतिभिः समेतः ।
सधैवतः स्यादृषभोऽन्तरश्च गान्धारकः काकलिको निषादः ॥ ४५५ ॥
एतैः स्वरैः सप्तभिरत्र नट्टामेलो युतो गायकसंप्रदायात् ।
एवं निरुक्ते खलु साधु नट्टामेले ततोऽस्याः किल लक्ष्म वक्ष्ये ॥ ४५६ ॥
न्यासो ग्रहोंऽशः पुनरत्र षड्जः स एव वादी किल पञ्चमोऽसौ ।
संवादिभावं भजते विवादी गान्धारकश्चापि निषादकश्च ॥ ४५७ ॥
सधैवतः स्यादृषभोऽनुवादी नट्टागतं लक्षणमित्थमुक्तम् ।

---

— ॥ रागसामान्यलक्षणम् ॥ —

अनुक्तमन्यद्यदिहास्ति किंचिदानीय तत्तत्प्रकृतिभ्य एव ॥ ४५८ ॥
तस्य प्रयोगं प्रतिपादयामो यथाक्रमं गायकबोधहेतोः ।
आक्षिप्तिकादीनि निरूपयामो रागाङ्गभूतानि निरुक्तिपूर्वम् ॥ ४५९ ॥

---

— ॥ आक्षिप्तिका ॥ —

आक्षिप्यते स्म प्रथमं हि रागैराक्षिप्तिका नाम तदस्य युक्तम् ।
सैवोदितायित्तपदेन लोकैराक्षिप्तिकेयं तदिहादिमाङ्गम् ॥ ४६० ॥

---

॥ रघुनाथभूपविरचिता ॥

# ॥ सङ्गीतसुधा ॥



— ॥ रागवर्धनी ॥ —

आक्षिप्तिकायां स्फुटतां गतस्य रागस्य वृद्धिः क्रियतेऽनयेति ।
सा रागवर्धन्युदिता द्वितीयमङ्गं च लोका यडुपाख्यमाहुः ॥ ४६१ ॥
तद्रागवर्धन्यभिधानमङ्गमेतत्तु केचित् करणं वदन्ति ।

---

— ॥ विदारी ॥ —

या रागवर्धन्यभिधाङ्गयुग्मविभाजकोपाधिरसौ विदारी ॥ ४६२ ॥
यडुप्पुमुक्तायिगिरा विदारीं भाषानुरोधेन भणन्ति लोकाः ।

---

— ॥ स्थायी ॥ —

आदौ गृहीतः स्वर एव तानगणस्थितिः स्थायिपदाभिधानम् ॥ ४६३ ॥
तच्छास्त्रलोकव्यवहाररीत्या लभेत रागस्य चतुर्थमङ्गम् ।

---

— ॥ वर्तनी ॥ —

नानास्वराणामिह तानवर्गे यद्वर्तते तेन तु वर्तनीयम् ॥ ४६४ ॥
एषैव लोके मकरिण्यभिख्यामाप्नोति लक्ष्यप्रवणप्रयोगे ।

---

— ॥ न्यासः ॥ —

यन्न्यस्यते राग इहैव रागन्यासाह्वयं तेन तु षष्ठमङ्गम् ॥ ४६५ ॥
अस्यापि लक्ष्यज्ञजनाः प्रयोगे मुक्तायिसंज्ञां मुहुरादि्रयन्ते ।
गोशब्दपर्यायतयैव गावी गोणीति गोपोतलिकेति भिन्नाः ॥ ४६६ ॥

॥ रघुनाथभूपविरचिता ॥

# ॥ सङ्गीतसुधा ॥



## — ॥ रागवर्धनी ॥ —

आक्षिप्तिकायां स्फुटतां गतस्य रागस्य वृद्धिः क्रियतेऽनयेति ।
सा रागवर्धन्युदिता द्वितीयमङ्गं च लोका यडुपाख्यमाहुः ॥ ४६१ ॥
तद्रागवर्धन्यभिधानमङ्गमेतत्तु केचित् करणं वदन्ति ।

---

## — ॥ विदारी ॥ —

या रागवर्धन्यभिधाङ्गयुग्मविभाजकोपाधिरसौ विदारी ॥ ४६२ ॥
यडुप्पुमुक्तायिगिरा विदारीं भाषानुरोधेन भणन्ति लोकाः ।

---

## — ॥ स्थायी ॥ —

आदौ गृहीतः स्वर एव तानगणस्थितिः स्थायिपदाभिधानम् ॥ ४६३ ॥
तच्छास्त्रलोकव्यवहाररीत्या लभेत रागस्य चतुर्थमङ्गम् ।

---

## — ॥ वर्तनी ॥ —

नानास्वराणामिह तानवर्गे यद्वर्तते तेन तु वर्तनीयम् ॥ ४६४ ॥
एषैव लोके मकरिण्यभिख्यामाप्नोति लक्ष्यप्रवणप्रयोगे ।

---

## — ॥ न्यासः ॥ —

यन्न्यस्यते राग इहैव रागन्यासाह्वयं तेन तु षष्ठमङ्गम् ॥ ४६५ ॥
अस्यापि लक्ष्यज्ञजनाः प्रयोगे मुक्तायिसंज्ञां मुहुराद्रियन्ते ।
गोशब्दपर्यायतयैव गावी गोणीति गोपोतलिकेति भिन्नाः ॥ ४६६ ॥

यथैव नानाविधदेशभेदा भवन्ति शब्दा व्यवहारकाले ।
आयित्तकाद्या अपि तद्वदेवाक्षिप्तादिपर्यायतया भवेयुः ॥ ४६७ ॥
शास्त्रस्थितानामपि लौकिकानामतो न दोषो व्यवहारकाले ।
आक्षिप्तिकायाः प्रथमं प्रयोगं वक्ष्यामहे गायकबोधहेतोः ॥ ४६८ ॥

---

—॥ आक्षिप्तिका ॥—

आरभ्य तारस्थितषड्जमादौ मध्यर्षभाख्यावधि चावरुह्य ।
आरभ्य तस्मादपि तारषड्जपर्यन्तमप्यत्र यथाक्रमेण ॥ ४६९ ॥
गीत्वा च तानान् कतिचिद्यथेष्टं न्यस्येत् पुनस्तारगषड्ज एव ।

---

— ॥ रागवर्धनी ॥ —

तां रागवर्धन्यभिधां प्रवक्ष्ये त्वारभ्य मध्यस्थितपञ्चमं तु ॥ ४७० ॥
आरुह्य तारस्थितपञ्चमान्तमामध्यमान्तांस्त्ववरुह्य तानान् ।
गीत्वा च कांश्चित् पुनरत्र मध्यषड्जस्तथा न्यास इहोपदिष्टः ॥ ४७१ ॥

---

— ॥ विदारी ॥ —

तस्या विदारीमथ लक्षयामो लक्ष्यप्रबोधाय यथाक्रमेण ।
आरभ्य मध्यस्थितमध्यमान्तं तारर्षभावध्यधिरुह्य पश्चात् ॥ ४७२ ॥
मध्यर्षभावध्यवरुह्य तानान् न्यस्येत्तु गीत्वा पुनरत्र षड्जे ।
मुक्तायिसंज्ञास्य तु रागवर्धन्यन्तःस्थितैषा हि विदारिका स्यात् ॥ ४७३ ॥

---

— ॥ रागवर्धनी ॥ —

तां रागवर्धन्यभिधां द्वितीयां वक्ष्यामहे गायकबोधहेतोः ।
आरभ्य तारस्थितमध्यमान्तमारुह्य चातारनिषादमादौ ॥ ४७४ ॥
आ मध्यषड्जादवरुह्य चापि स्वैरं विचित्रान् द्रुतमानयुक्तान् ।
क्रमेण तानान् कतिचिच्च गीत्वा न्यस्येत् पुनर्मध्यमषड्ज एव ॥ ४७५ ॥
अस्या विदारीमधुना विदध्यात्ततो हि मध्यस्थितमध्यमात्तु ।
आरुह्य चातारगतर्षभं च मध्यर्षभान्तं च ततोऽवरोहेत् ॥ ४७६ ॥
गीत्वा विचित्रान् पुनरत्र तानान् न्यस्येत् पुनस्तारगषड्ज एव ।

---

— ॥ षड्जस्थायी ॥ —

षड्जान्तिमस्थायिनमत्र वक्ष्याम्यारभ्य तारस्थितषड्जमादौ ॥ ४७७ ॥
क्रमेण चातारनिषादकान्तं षड्जर्षभौ मध्यमपञ्चमौ च ।
निषादकश्चेति च पञ्च ये स्युः प्रत्येकमेकं हि च तानमेषाम् ॥ ४७८ ॥
स्वपूर्वपूर्वस्वरयोजनात् स्वोत्तरोत्तरस्यापि विवर्जनेन ।
आरोहणेनाप्यवरोहणेन तानान् विचित्रान् दश साधु गीत्वा ॥ ४७९ ॥
न्यस्येत् पुनस्तारगषड्ज एव षड्जादिमस्थाय्युदितः किलैवम् ।

---

— ॥ पञ्चमस्थायी ॥ —

तं पञ्चमस्थायिनमामनामस्त्वारभ्य मध्यस्थितपञ्चमान्तम् ॥ ४८० ॥
यथाक्रमं तारगपञ्चमान्तं सपञ्चमः किं च निषादषड्जौ ।
तथर्षभो मध्यमपञ्चमौ चेत्येषां स्वराणां क्रमशस्तु षण्णाम् ॥ ४८१ ॥
प्रत्येकमेकैकतानमेषां स्वपूर्वपूर्वस्वरयोजनेन ।
तथोत्तरेषामपि वर्जनेन त्वारोहणेनाप्यवरोहणेन ॥ ४८२ ॥
गीत्वा क्रमाद्द्वादश तानभेदान् न्यस्येत् पुनर्मध्यमपञ्चमेऽस्मिन् ।

---

— ॥ मध्यमस्थायी ॥ —

स्थाय्युच्यते मध्यममध्यमस्य त्वारभ्य मध्यस्थितमध्यमान्तम् ॥ ४८३ ॥
समध्यमः पञ्चमको निषादः षड्जर्षभौ मध्यम इत्यमीषाम् ।
प्रत्येकमेकैकतानमेषां स्वपूर्वपूर्वस्वरयोजनेन ॥ ४८४ ॥
तथोत्तरेषामपि वर्जनेन त्वारोहणेनाप्यवरोहणेन ।
गीत्वा क्रमाद्द्वादश तानभेदान् न्यस्येत् पुनर्मध्यममध्यमेऽस्मिन् ॥ ४८५ ॥

---

— ॥ रिषभस्थायी ॥ —

मध्यर्षभस्थायिनमत्र वक्ष्याम्यारभ्य मध्यर्षभमेव चादौ ।
आ चर्षभात्तारगतात् क्रमेण तच्चर्षभो मध्यमपञ्चमौ च ॥ ४८६ ॥
निषादषड्जावृषभः षडेते प्रत्येकमेकैकतानमेषाम् ।
स्वपूर्वपूर्वस्वरयोजनात् स्वोत्तरोत्तरस्यापि च वर्जनेन ॥ ४८७ ॥

— ॥ षड्जस्थायी ॥ —

षड्जान्तिमस्थायिनमत्र वक्ष्याम्यारभ्य तारस्थितषड्जमादौ ॥ ४७७ ॥
क्रमेण चातारनिषादकान्तं षड्जर्षभौ मध्यमपञ्चमौ च ।
निषादकश्चेति च पञ्च ये स्युः प्रत्येकमेकं हि च तानमेषाम् ॥ ४७८ ॥
स्वपूर्वपूर्वस्वरयोजनात् स्वोत्तरोत्तरस्यापि विवर्जनेन ।
आरोहणेनाप्यवरोहणेन तानान् विचित्रान् दश साधु गीत्वा ॥ ४७९ ॥
न्यस्येत् पुनस्तारगषड्ज एव षड्जादिमस्थाय्युदितः किलैवम् ।

---

— ॥ पञ्चमस्थायी ॥ —

तं पञ्चमस्थायिनमामनामस्त्वारभ्य मध्यस्थितपञ्चमान्तम् ॥ ४८० ॥
यथाक्रमं तारगपञ्चमान्तं सपञ्चमः किं च निषादषड्जौ ।
तथर्षभो मध्यमपञ्चमौ चेत्येषां स्वराणां क्रमशस्तु षण्णाम् ॥ ४८१ ॥
प्रत्येकमेकैकतानमेषां स्वपूर्वपूर्वस्वरयोजनेन ।
तथोत्तरेषामपि वर्जनेन त्वारोहणेनाप्यवरोहणेन ॥ ४८२ ॥
गीत्वा क्रमाद्द्वादश तानभेदान् न्यस्येत् पुनर्मध्यमपञ्चमेऽस्मिन् ।

---

— ॥ मध्यमस्थायी ॥ —

स्थाय्युच्यते मध्यममध्यमस्य त्वारभ्य मध्यस्थितमध्यमान्तम् ॥ ४८३ ॥
समध्यमः पञ्चमको निषादः षड्जर्षभौ मध्यम इत्यमीषाम् ।
प्रत्येकमेकैकतानमेषां स्वपूर्वपूर्वस्वरयोजनेन ॥ ४८४ ॥
तथोत्तरेषामपि वर्जनेन त्वारोहणेनाप्यवरोहणेन ।
गीत्वा क्रमाद्द्वादश तानभेदान् न्यस्येत् पुनर्मध्यममध्यमेऽस्मिन् ॥ ४८५ ॥

---

— ॥ रिषभस्थायी ॥ —

मध्यर्षभस्थायिनमत्र वक्ष्याम्यारभ्य मध्यर्षभमेव चादौ ।
आ चर्षभात्तारगतात् क्रमेण तच्चर्षभो मध्यमपञ्चमौ च ॥ ४८६ ॥
निषादषड्जावृषभः षडेते प्रत्येकमेकैकतानमेषाम् ।
स्वपूर्वपूर्वस्वरयोजनात् स्वोत्तरोत्तरस्यापि च वर्जनेन ॥ ४८७ ॥

आरोहणेनाप्यवरोहणेन तानान् क्रमाद्द्वादश साधु गीत्वा ।
न्यस्येत् पुनर्मध्यगतर्षभेऽस्मिन् मध्यर्षभस्थायिनमेनमाहुः ॥ ४८८ ॥

---

— ॥ मध्यषड्जस्थायी ॥ —

स्थाय्युच्यते मध्यमषड्जकस्य चारभ्य मध्यस्थितषड्जमादौ ।
तारस्थषड्जावधि च क्रमेण षड्जर्षभौ मध्यमपञ्चमौ च ॥ ४८९ ॥
निषादषड्जाविति षट्स्वराणां प्रत्येकमेकैककतानमेषाम् ।
स्वपूर्वपूर्वस्वरयोजनात् स्वोत्तरोत्तरस्यापि च वर्जनेन ॥ ४९० ॥
आरोहणेनाप्यवरोहणेन तानान् क्रमाद्द्वादश साधु गीत्वा ।
पञ्चाप्यमून् स्थायिन एव गीत्वा गायेत्ततो वर्तनिकाक्रमेण ॥ ४९१ ॥

---

— ॥ वर्तनी ॥ —

आरभ्य मध्यस्थितषड्जमादावारुह्य चातारनिषादमत्र ।
आरभ्य षड्जं त्ववरुह्य तस्मात्तानांश्च कांश्चित् क्रमशोऽथ गीत्वा ॥ ४९२ ॥
न्यस्येत् पुनर्मध्यमषड्ज एवं वर्तन्युदीता मकरिण्यभिख्या ।

---

— ॥ न्यासः ॥ —

रागादिमन्यासमथाभिधास्ये त्वारभ्य तारर्षभमेव पूर्वम् ॥ ४९३ ॥
मध्यर्षभान्तं त्ववरुह्य भूयस्त्वारुह्य चातारगषड्जमेव ।
तानांश्च कांश्चित् क्रमशोऽथ गीत्वा न्यस्येत् पुनस्तारगषड्ज एव ॥ ४९४ ॥
न्यासस्तु रागस्य निरूपितोऽयं सायाह्नगानेऽस्य च रक्तिलाभः ।
श्रेयोविशेषश्च भवेज्जनानामिति स्फुटं संकथितात्र नट्टा ॥ ४९५ ॥

---

(२) — ॥ अथ गुर्जरीरागः ॥ —

संपूर्णरागः खलु गुर्जरी तन्मेलं तु रागप्रकृतिं वदन्ति ।
गौडस्य मेले परिकल्प्यमाने संपूर्णरागा न भवन्ति तस्मात् ॥ ४९६ ॥
त्यक्त्वा ततः संप्रति गौडमेलं ग्राह्यो भवेद्गुर्जरिकाख्यमेलः ।
नैतत् सहन्ते कतिचिन्नवीनाः संपूर्णभावः कथमस्य वेति ॥ ४९७ ॥
आरोहणे पञ्चमवर्जनेन सा गुर्जरी षाडव एव रागः ।
अतोऽस्य मेलो न च कल्पनीयः क्लृप्ते पुनर्मालवगौडमेले ॥ ४९८ ॥

नैतद्विचारक्षममेभिरुक्तं पूर्णो यतो गुर्जरिकाख्यरागः ।
यत्पञ्चमश्चाप्यवरोहमार्गे त्वयाप्ययं स्वीकृत एवं पक्षः ॥ ४९९ ॥
भवेदनेनैव निदर्शनेन त्वारोहणे पञ्चम एव तस्मिन् ।
कल्प्यस्त्वया मालवगौडमेलः प्रसिद्धयभावादिह गायनानाम् ॥ ५०० ॥
सा गुर्जरी सर्वजनप्रसिद्धा संपूर्णभावेन समन्वितेति ।
पञ्चोत्तराणां प्रकृतिर्दशानां रागान्तराणामत एष मेलः ॥ ५०१ ॥
तं गुर्जरीमेलमथाभिधास्ये षड्जर्षभौ मध्यमपञ्चमौ च ।
सधैवतश्चेति भवन्ति शुद्धा गान्धारकश्चान्तरनामधेयः ॥ ५०२ ॥
तथा भवेत् काकलिकानिषादः स्याद्गुर्जरीमेल उदीरितोऽयम् ।
न्यासो ग्रहोंऽशस्त्वृषभोऽत्र वेद्यः संपूर्णरागः कथितः प्रवीणैः ॥ ५०३ ॥
आरोहणे तस्य च केचिदङ्गीकुर्वन्ति वर्ज्यं किल पञ्चमं च ।

---

— ॥ आक्षिप्तिका ॥ —

आक्षिप्तिकास्या अपि लक्ष्यतेऽत्र ह्यारभ्य तारर्षभमेव पूर्वम् ॥ ५०४ ॥
मध्यर्षभान्तं च ततोऽवरुह्यारुह्यापि चा तारगतान्निषादात् ।
गीत्वा च तानान् कतिचिद्विचित्रान् न्यस्येच्च तारस्थितषड्ज एव ॥ ५०५ ॥

---

— ॥ रागवर्धनी ॥ —

तद्रागवर्धन्यथ तारवर्ती गान्धारगस्तारगधैवतान्तम् ।
आरुह्य चामध्यगषड्जमत्रावरुह्य तानानभिधाय कांश्चित् ॥ ५०६ ॥

---

— ॥ विदारी ॥ —

न्यस्येच्च तारस्थितिभाजि षड्जे विदारिकास्या अपि वर्ण्यतेऽथ ।
आरभ्य मध्यस्थितधैवतं प्राङ्मध्यर्षभान्तं त्ववरुह्य पश्चात् ॥ ५०७ ॥
आरुह्य तत्तारगतर्षभान्तं गीत्वा च तानान् कतिचिद्विचित्रान् ।
न्यस्येच्च तारस्थितिभाजि षड्जे तद्रागवर्धन्यभिधीयतेऽस्य ॥ ५०८ ॥

---

— ॥ रागवर्धनी ॥ —

आरभ्य तारर्षभमा च तारनिषादतः स्यादधिरोहणं च ।
आमध्यषड्जं त्ववरुह्य तानान् गीत्वा त्यजेन्मध्यमषड्ज एव ॥ ५०९ ॥

---

— ॥ विदारी ॥ —

अस्या विदारी त्वथ तारषड्जमारभ्य तस्मादवरुह्य पश्चात् ।
मध्यर्षभान्तं त्वधिरुह्य पश्चात्तारर्षभान्तं त्वधिरुह्य कांश्चित् ॥ ५१० ॥
तानान् विचित्रान् क्रमशोऽथ गीत्वा न्यस्येच्च तारस्थितषड्ज एव ।

———

— ॥ तारषड्जस्थायी ॥ —

अथोच्यते संप्रति तारषड्जस्थायी समारभ्य तु तारषड्जम् ॥ ५११ ॥
यत्र स्वरास्तारनिषादकान्तास्ते षट् स्वरा मध्यमवर्जनेन ।
प्रत्येकमेकैककतानमेषां स्वपूर्वपूर्वस्वरयोजनेन ॥ ५१२ ॥
अथोत्तरेषामपि वर्जनेन चारोहणेनाप्यवरोहणेन ।
तानांस्तथा द्वादश साधु गीत्वा न्यस्येत्तु तारस्थितषड्ज एव ॥ ५१३ ॥

———

— ॥ पञ्चमस्थायी ॥ —

स्थाय्युच्यते मध्यमपञ्चमस्य त्वारभ्य मध्यस्थितपञ्चमान्तम् ।
अत्र स्वरास्तारगपञ्चमान्ताः सप्तैव ते मध्यमवर्जनेन ॥ ५१४ ॥
प्रत्येकमेकैककतानमेषां पूर्वोक्तरीत्या च चतुर्दशैव ।
गीत्वा च तानान् क्रमशो विचित्रान् न्यस्येच्च मध्यस्थितपञ्चमेऽस्मिन् ॥ ५१५ ॥

———

— ॥ रिषभस्थायी ॥ —

अथोच्यते मध्यगतर्षभस्य स्थायी तु मध्यर्षभमेव चादौ ।
तारर्षभान्तं खलु सप्त ये स्युः स्वरा मता मध्यमवर्जनेन ॥ ५१६ ॥
प्रत्येकमेकैककतानमेषां पूर्वोक्तरीत्या तु चतुर्दशैव ।
गीत्वा च तानान् क्रमशो विचित्रान् न्यस्येत् पुनर्मध्यगतर्षभेऽस्मिन् ॥ ५१७ ॥

———

— ॥ षड्जस्थायी ॥ —

संलक्ष्यते संप्रति मध्यषड्जस्थायी समारभ्य तु मध्यषड्जम् ।
आतारषड्जं पुनरत्र सप्त स्वरास्तथा मध्यमवर्जनेन ॥ ५१८ ॥
प्रत्येकमेकैककतानमेषां पूर्वोक्तरीत्या तु चतुर्दशैव ।
गीत्वा च तानान् क्रमशो विचित्रान् न्यस्येत्तु मध्यस्थितषड्ज एव ॥ ५१९ ॥

———

— ॥ वर्तनी ॥ —

अथोच्यते वर्तनिका च मध्यषड्जं समारभ्य यथाक्रमेण ।
आरुह्य चातारनिषादमस्मादामध्यषड्जं त्ववरुह्य कांश्चित् ॥ ५२० ॥
तानान् विचित्रान् कतिचिच्च गीत्वा न्यस्येच्च मध्यस्थितषड्ज एव ।

— ॥ न्यासः ॥ —

न्यासस्तु रागस्य भवेत् पुरोक्तो विदारिकावत् पुनरुक्तवर्जम् ॥ ५२१ ॥
प्रगे प्रगेया खलु गुर्जरीयमुक्ताञ्जनेयस्य मतानुरोधात् ।

(३) — ॥ अथ सौराष्ट्ररागः ॥ —

वक्ष्यामि सौराष्ट्रमथास्य मेलः स्याद्गुर्जरीरागकमेल एषः ॥ ५२२ ॥
तल्लक्षणं तावदुदीरयामो न्यासो ग्रहोंऽशः पुनरत्र षड्जः ।
संवादिनौ मध्यमपञ्चमौ च निषादगान्धारयुगं विवादि ॥ ५२३ ॥

— ॥ आक्षिप्तिका ॥ —

आक्षिप्तिकामस्य पुनः प्रवक्ष्याम्यारभ्य तारस्थितषड्जमादौ ।
मध्यर्षभान्तं च ततोऽवरुह्य चारुह्य तारस्थितमध्यमान्तम् ॥ ५२४ ॥
गीत्वा च तानान् कतिचिद्विचित्रान् न्यस्येच्च तारस्थितषड्ज एव ।

— ॥ रागवर्धनी ॥ —

सा रागवर्धन्यभिधीयतेऽद्य प्रारभ्य तारस्थितपञ्चमाच्च ॥ ५२५ ॥
आरुह्य चातारनिषादमा च मध्यस्थषड्जादवरुह्य पश्चात् ।
प्रगाय तानान् कतिचित् प्रगल्भं मुञ्चेच्च किं चेदृशि मध्यषड्जे ॥ ५२६ ॥

— ॥ विदारी ॥ —

अस्या विदारीं पुनरीरयामः प्रारभ्य मध्यस्थितमध्यमं प्राक् ।
मध्यर्षभान्तं च ततोऽवरुह्यारुह्यापि तारस्थितपञ्चमान्तम् ॥ ५२७ ॥
प्रगाय तानान् कतिचित् प्रगल्भं न्यस्येच्च तारस्थितषड्ज एव ।

— ॥ रागवर्धनी ॥ —

अथ द्वितीयास्य तु रागवर्धन्यारभ्य तारस्थितमध्यमं प्राक् ॥ ५२८ ॥
आरुह्य चा तारगतान्निषादादा चावरुह्याप्यथ मध्यषड्जात् ।
नानाविधानाकलयंश्च तानान् न्यस्येच्च तानेव च मध्यषड्जे ॥ ५२९ ॥

———

— ॥ विदारी ॥ —

अस्या विदारीं निगदामि तारगान्धारमारभ्य किलावरुह्य ।
मध्यर्षभान्तं क्रमशस्तथैवारोहेच्च तारस्थितमध्यमान्तम् ॥ ५३० ॥
गीत्वा च तानान् कतिचिद्विचित्रान् न्यस्येच्च तारस्थितषड्ज एव ।

———

— ॥ तारषड्जस्थायी ॥ —

तारस्थषड्जस्य निरूप्यतेऽथ स्थायी समारभ्य तु तारषड्जम् ॥ ५३१ ॥
स्वरान्निषादादधिरुह्य ये स्युः प्रत्येकमेकैककतानमेषाम् ।
स्वपूर्वपूर्वस्वरयोजनेन तथोत्तरेषामपि वर्जनेन ॥ ५३२ ॥
आरोहणेनाप्यवरोहणेन गीत्वा तु तानांस्तु चतुर्दशैव ।

———

— ॥ पञ्चमस्थायी ॥ —

न्यस्येच्च तारस्थितषड्ज एव तं पञ्चमस्थायिनमामनामः ॥ ५३३ ॥
आरुह्य मध्यस्थितपञ्चमान्तमा पञ्चमात्तारगताः स्वरा ये ।
प्रत्येकमेकैककतानमेषां स्वपूर्वपूर्वस्वरयोजनेन ॥ ५३४ ॥
तथोत्तरेषामपि वर्जनेन चारोहणेनाप्यवरोहणेन ।
द्व्यष्टौ च तानान् पुनरत्र गीत्वा न्यस्येच्च मध्यस्थितपञ्चमेऽस्मिन् ॥ ५३५ ॥

———

— ॥ गान्धारस्थायी ॥ —

गान्धारकस्थायिनमत्र वक्ष्ये प्रारभ्य गान्धारममुं च मध्यम् ।
आ तारगान्धारमिह स्वरा ये सप्त स्थिता मध्यमवर्जनेन ॥ ५३६ ॥
प्रत्येकमेकैककतानमेषां स्वपूर्वपूर्वस्वरयोजनेन ।
तथोत्तरेषामपि वर्जनेन चारोहणेनाप्यवरोहणेन ॥ ५३७ ॥
तानान् प्रगायाथ चतुर्दशैव मध्यस्थगान्धारक एव जह्यात् ।

———

— ॥ रिषभस्थायी ॥ —

अथर्षभस्थायिनमामनामः प्रारभ्य मध्याद्दषभाद् भवन्ति ॥ ५३८ ॥
येऽष्ट स्वरास्तारगतर्षभान्ताः प्रत्येकमेकैककतानमेषाम् ।
स्वपूर्वपूर्वस्वरयोजनेन तथेतरेषामपि वर्जनेन ॥ ५३९ ॥
आरोहणेनाप्यवरोहणेन व्यष्टौ च तानान् क्रमशोऽथ गीत्वा ।
न्यस्येच्च मध्यर्षभ एव मध्यषड्जस्वरस्थायिनमामनन्ति ॥ ५४० ॥

— ॥ षड्जस्थायी ॥ —

आरभ्य मध्यस्थितषड्जमादावष्टौ स्वरांस्तारगषड्जकान्तम् ।
प्रत्येकमेकैककतानमेषां स्वपूर्वपूर्वस्वरयोजनेन ॥ ५४१ ॥
तथोत्तरेषामपि वर्जनेन चारोहणेनाप्यवरोहणेन ।
व्यष्टौ च तानान् क्रमशोऽथ गीत्वा न्यस्येच्च मध्यस्थितषड्ज एव ॥ ५४२ ॥

— ॥ वर्तनी ॥ —

अथोच्यते वर्तनिका क्रमेण प्रारभ्य मध्यस्थितषड्जमादौ ।
आरुह्य तत्तारनिषादकान्तमामध्यषड्जं तु ततोऽवरोहेत् ॥ ५४३ ॥
गीत्वा च तानान् कतिचिद्विचित्रान् न्यस्येच्च मध्यस्थितषड्ज एव ।

— ॥ न्यासः ॥ —

न्यासस्तु रागस्य पुरोक्तरागवर्धन्यपन्यासवदेव वेद्यः ॥ ५४४ ॥
सौराष्ट्ररागोऽयमतीव हृद्यः सदा प्रगीतः शुभदायकश्च ।

(४) — ॥ अथ मेचबौलिरागः ॥ —

निरूप्यते संप्रति मेचबौलिर्मेलो भवेद् गुर्जरिरागमेलः ॥ ५४५ ॥
न्यासो ग्रहोंऽशोऽत्र तु षड्ज एव संपूर्णरागः कथितः प्रवीणैः ।

— ॥ आक्षिप्तिका ॥ —

आक्षिप्तिकाख्यं खलु लक्ष्यतेऽत्र गांधारमारभ्य तु मध्यसंस्थम् ॥ ५४६ ॥
आरुह्य तारस्थितमध्यमान्तमामध्यगांधारमधोऽवरुह्य ।
गीत्वा च तानान् कतिचिद्विचित्रान्न्यस्येच्च तारस्थितषड्ज एव ॥ ५४७ ॥

— ॥ रागवर्धनी ॥ —

तद्रागवर्धन्यभिधीयतेऽथ प्रारभ्य मध्यस्थितधैवतं प्राक् ।
आरुह्य तारस्थितधैवतान्तमामध्यषड्जं च ततोऽवरुह्य ॥ ५४८ ॥
गीत्वा च तानान् कतिचिद्विचित्रान् न्यस्येच्च मध्यस्थितषड्ज एव ।

— ॥ विदारी ॥ —

तस्या विदारीमथ लक्षयामः प्रारभ्य मध्यस्थितपञ्चमं तु ॥ ५४९ ॥
आमध्यगांधारमतोऽवरुह्य चातारगांधारमतोऽधिरुह्य ।
गीत्वा च तानान् कतिचित् क्रमेण न्यस्येच्च तारस्थितषड्ज एव ॥ ५५० ॥

— ॥ रागवर्धनी ॥ —

तद्रागवर्धन्यभिधीयतेऽन्या प्रारभ्य तारर्षभमेव चादौ ।
आरुह्य चा तारनिषादमस्मादा मध्यषड्जं त्ववरुह्य कांश्चित् ॥ ५५१ ॥
तानांश्च गीत्वा खलु मध्यषड्जे न्यासो निरुक्तोऽथ विदारिकास्याः ।

— ॥ विदारी ॥ —

आरुह्य तारस्थितषड्जमादावामध्यगांधारमतोऽवरुह्य ॥ ५५२ ॥
आरुह्य तारस्थितमध्यमान्तं गीत्वा च तानान् कतिचिद्विचित्रान् ।
न्यस्येच्च तारस्थितषड्ज एव स्थायी तु तारस्थितषड्जकस्य ॥ ५५३ ॥

— ॥ षड्जस्थायी ॥ —

आरभ्य तारस्थितषड्जमादौ सप्त स्वरांस्तारनिषादकान्तान् ।
प्रत्येकमेकैककतानमेषां स्वपूर्वपूर्वस्वरयोजनेन ॥ ५५४ ॥
तथोत्तरेषामपि वर्जनेन चारोहणेनाप्यवरोहणेन ।
गीत्वा च तानांस्तु चतुर्दशैव न्यस्येच्च तारस्थितषड्ज एव ॥ ५५५ ॥

— ॥ पञ्चमस्थायी ॥ —

स्थाय्युच्यते संप्रति पञ्चमस्य प्रारभ्य मध्यस्थितपञ्चमं प्राक् ।
अष्टौ स्वरांस्तारगपञ्चमान्तान् प्रत्येकमेकैककतानमेषाम् ॥ ५५६ ॥
व्यष्टाप्यतः पूर्ववदेव गीत्वा तानांस्त्यजेन्मध्यगपञ्चमेऽस्मिन् ।

— ॥ गांधारस्थायी ॥ —

गांधारकस्थायिनमामनामो गांधारमारभ्य तु मध्यसंस्थम् ॥ ५५७ ॥
आतारगांधारमिहाष्टधा स्युः प्रत्येकमेकैककतानमेषाम् ।
व्यष्टाप्यतः पूर्ववदेव गीत्वा गांधारके मध्यगते त्यजेत्तान् ॥ ५५८ ॥

---

— ॥ मध्यषड्जस्थायी ॥ —

अथोच्यते संप्रति मध्यषड्जस्थायी समारभ्य तु मध्यषड्जम् ।
आतारषड्जं पुनरष्टधा स्युः प्रत्येकमेकैककतानमेषाम् ॥ ५५९ ॥
व्यष्टाप्यतः पूर्ववदेव गीत्वा तानांस्त्यजेन्मध्यगषड्ज एव ।

---

— ॥ वर्तनी ॥ —

तद्वर्तनीं संप्रति कीर्तयामः प्रारभ्य मध्यस्थितषड्जमादौ ॥ ५६० ॥
आरुह्य चातारगषड्जमस्मादा मध्यषड्जादवरुह्य कांश्चित् ।
गीत्वा तु तानानथ मध्यषड्जे न्यस्येच्च रागन्यसनं तु तस्य ॥ ५६१ ॥
अपौनरुक्त्येन च पूर्वरागवर्धन्यपन्यासतयैव वेद्यम् ।
एवं निरुक्तः खलु मेचबौलिरागोऽधुना गायकबोधहेतोः ॥ ५६२ ॥

---

(५) — ॥ अथ च्छायागौलरागः ॥ —

छायादिगौलं प्रतिपादयामो मेलस्य तस्यापि च गुर्जरीवत् ।
निषाद एवात्र भवेद् ग्रहोंऽशो न्यासश्च संपूर्णतयात्र वेद्यः ॥ ५६३ ॥

---

— ॥ आक्षिप्तिका ॥ —

आक्षिप्तिकामत्र निरूपयामः प्रारभ्य मध्यस्थितषड्जमादौ ।
आ मध्यमात् पञ्चमतोऽवरुह्यारुह्यापि चातारगपञ्चमं च ॥ ५६४ ॥
प्रगाय तानान् कतिचित् प्रगल्भं न्यस्येत् पुनस्तारगषड्ज एव ।

---

— ॥ रागवर्धनी ॥ —

अथोच्यते संप्रति रागवर्धन्यारभ्य तारर्षभमेव पूर्वम् ॥ ५६५ ॥
आरुह्य तारस्थितधैवतान्तमा मध्यषड्जादवरुह्य पश्चात् ।
तानान् विचित्रान् कतिचिच्च गीत्वा न्यस्येच्च मध्यस्थितषड्ज एव ॥ ५६६ ॥

---

— ॥ विदारी ॥ —

अस्या विदारीमथ लक्षयामः प्रारभ्य मध्यस्थितपञ्चमं च ।
आ मध्यषड्जादवरुह्य पश्चादारुह्य चातारगषड्जमस्मात् ॥ ५६७ ॥
तानांश्च गीत्वा कतिचित् प्रगाय मुञ्चेत् पुनर्मध्यगषड्ज एव ।

— ॥ रागवर्धनी ॥ —

सा रागवर्धन्यभिधा द्वितीया विदार्यमुष्याश्च यथापुरं स्तः ॥ ५६८ ॥
अपौनरुक्त्यादपि ते प्रगेये षड्जस्वरस्थायिनमामनामः ।

— ॥ तारषड्जस्थायी ॥ —

आरभ्य तारस्थितषड्जमादौ सप्त स्वरांस्तारनिषादकान्तान् ॥ ५६९ ॥
प्रत्येकमेकैककतानमेषां स्वपूर्वपूर्वस्वरयोजनेन ।
तथोत्तरेषामपि वर्जनेन चारोहणेनाप्यवरोहणेन ॥ ५७० ॥
प्रगाय तानांस्तु चतुर्दशैव न्यस्येत्तु तारस्थितषड्ज एव ।

— ॥ पञ्चमस्थायी ॥ —

अथोच्यते मध्यगपञ्चमस्य स्थायी तु मध्यस्थितपञ्चमं तम् ॥ ५७१ ॥
आरभ्य ये तारगपञ्चमान्ता व्यष्टौ तु पूर्वोक्तवदेव तानान् ।
गीत्वा पुनर्मध्यगपञ्चमेऽस्मिन् मुञ्चेच्च वैचित्र्यवशेन तानान् ॥ ५७२ ॥

— ॥ मध्यषड्जस्थायी ॥ —

अथोच्यते संप्रति मध्यषड्जस्थायी समारभ्य तु मध्यषड्जात् ।
ये तारषड्जावधिकस्वराश्च व्यष्टापि पूर्वोक्तवदेव तानान् ॥ ५७३ ॥
गीत्वा पुनर्मध्यगषड्ज एव न्यस्येदथो वर्तनिकां वदामः ।

— ॥ वर्तनी ॥ —

आरभ्य मध्यस्थितषड्जमादावारुह्य चातारनिषादमस्मात् ॥ ५७४ ॥
आ मध्यषड्जादवरुह्य पश्चात् प्रगाय तानान् कतिचित् प्रगल्भम् ।
न्यस्येच्च मध्यस्थितषड्ज एव न्यासस्तु रागस्य विदारिकावत् ॥ ५७५ ॥

(६) — ॥ अथ गुण्डक्रियारागः ॥ —

गुण्डक्रियामाकलयामि तस्या मेलो भवेद् गुर्जरिकाख्यमेलः ।
न्यासो ग्रहोंऽशोऽपि च षड्ज एव तस्यास्त्वियं पूर्णतया प्रतीता ॥ ५७६ ॥

---

— ॥ आक्षिप्तिका ॥ —

आक्षिप्तिकामाकलयाम्यमुष्याः प्रारभ्य तारस्थितषड्जमादौ ।
आमध्यषड्जं त्ववरुह्य पश्चादारुह्य तारोपहितर्षभान्तम् ॥ ५७७ ॥
तानान् विचित्रान् कतिचित् प्रगायन् न्यस्येत् पुनस्तारगषड्ज एव ।

---

— ॥ रागवर्धनी ॥ —

अथोच्यते संप्रति रागवर्धन्यारभ्य मध्यस्थितपञ्चमं प्राक् ॥ ५७८ ॥
आरुह्य तारस्थितधैवतान्तमामध्यषड्जादवरुह्य पश्चात् ।
प्रगाय तानान् कतिचिद्विचित्रान् न्यस्येच्च मध्यस्थितषड्ज एव ॥ ५७९ ॥

---

— ॥ विदारी ॥ —

अस्या विदारीं कथयामि मध्यभाजं ह्युपक्रम्य च धैवतान्तम् ।
आ मध्यषड्जादवरुह्य पश्चादारुह्य चातारगषड्जमस्मात् ॥ ५८० ॥
तानान् विचित्रान् कतिचित् प्रगाय न्यस्येत्तु तारस्थितषड्ज एव ।

---

— ॥ रागवर्धनी ॥ —

सा रागवर्धन्यपि या द्वितीया विदार्यमुष्याश्च यथापुरस्तः ।
अपौनरुक्त्यादिह ते प्रगेये षड्जस्य तु स्थायिनमामनामः ॥ ५८१ ॥

---

— ॥ षड्जस्थायी ॥ —

आरभ्य तारस्थितषड्जमादौ सप्त स्वरांस्तारनिषादकान्तान् ।
प्रत्येकमेकैकतानमेषां स्वपूर्वपूर्वस्वरयोजनेन ॥ ५८२ ॥
तथोत्तरेषामपि वर्जनेन चारोहणेनाप्यवरोहणेन ।
प्रगाय तानांस्तु चतुर्दशैव न्यस्येत्तु तारस्थितषड्ज एव ॥ ५८३ ॥

---

— ॥ मध्यमस्थायी ॥ —

तं मध्यमस्थायिनमामनामः प्रारभ्य मध्यस्थितमध्यमं तम् ।
येऽष्ट स्वरास्तारगमध्यमान्ताः पूर्वोक्तरीत्या परिगाय तानान् ॥ ५८४ ॥
द्व्यष्टौ त्यजेन्मध्यगमध्यमेऽस्मिन् स्थायी तु मध्यस्थितषड्जकस्य ।

— ॥ षड्जस्थायी ॥ —

आरभ्य मध्यस्थितषड्जमादौ येऽष्ट स्वरास्तारगमध्यमान्तम् ॥ ५८५ ॥
आरुह्य चातारनिषादमस्मादा मध्यषड्जादवरुह्य पश्चात् ।
गीत्वा च तानान् कतिचिद्विचित्रान् न्यस्येच्च मध्यस्थितषड्ज एव ॥ ५८६ ॥

— ॥ न्यासः ॥ —

न्यासस्तु रागस्य भवेद्विदारी यथा तथैवापुनरुक्ति गेयः ।

(७) — ॥ सालगनाटिकारागः ॥ —

अथोच्यते सालगनाटिकाख्यरागस्य मेलः किल गुर्जरीवत् ॥ ५८७ ॥
सालङ्गनाट्यां कथयन्ति रागे पञ्चश्रुती धैवतकर्षभौ द्वौ ।
अथोऽस्य मेलान्तरमामनन्ति नव्याः परे केचन नैपुणेन ॥ ५८८॥
तदुक्तमेलं प्रतिपादयामः सालङ्गनाट्याः सह लक्षणेन ।
षड्जस्तथा मध्यमपञ्चमौ च शुद्धाश्च पञ्चश्रुतिकर्षभश्च ॥ ५८९ ॥
पञ्चश्रुतिर्धैवतकस्ततोऽत्र गांधारकश्च च्युतमध्यमादिः ।
च्युतादिमः षड्जनिषादकश्च स्वरैः पुनः सप्तभिरन्वितो यः ॥ ५९० ॥
सालङ्गनाट्याः खलु मेल उक्तो रागांस्ततस्तत्प्रभवान् वदामः ।
सालङ्गनाटो खलु पूर्वगौलः सावेरिका शुद्धवसन्तकश्च ॥ ५९१ ॥
सालङ्गपूर्वा खलु भैरवी चेत्येतन्मुखास्तत्र भवन्ति रागाः ।
न शोभते नव्यमतं तदेतत्तद्गुर्जरीमेलगतार्थभावात् ॥ ५९२ ॥
मेलान्तरं तत्प्रभवाश्च रागा न कल्पनीयाः खलु गौरवेण ।
पूर्वोदिते गुर्जरिकाख्यमेले शुद्धौ मतौ धैवतकर्षभौ द्वौ ॥ ५९३ ॥
तत्रैव चैकश्रुतिकल्पने स्यात्तद्गुर्जरीमेलज एष रागः ।
सालङ्गनाट्याह्वयरागमेले ये संभवन्तीत्युदिताश्च रागाः ॥ ५९४ ॥
सर्वेऽपि मेलान्तरसंभवास्ते तच्च क्रमेण प्रतिपादयामः ।
सावेरिका सालगनाटिका च शुद्धो वसन्तश्च तथैव रागः ॥ ५९५ ॥
ते गुर्जरीमेलभवास्तु भिन्नषड्जो भवेद्भैरविकाख्यमेलात् ।
नारायणी स्यात् खलु शंकराभरणाख्यरागात् सहपूर्वगौडः ॥ ५९६ ॥

सालङ्कभैरव्यपि संभवेत् सा श्रीरागमेलादिति वेदितव्यम् ।
लक्ष्मोच्यते सालगनाटिकाया न्यासो ग्रहोंऽशः पुनरत्र षड्जः ॥ ५९७ ॥
अतोऽपि वादी स तु पञ्चमोऽत्र संवादिनामा स च पञ्चमोऽपि ।
शत्रू हि गांधारनिषादकौ चानुवादिनौ चर्षभधैवतौ द्वौ ॥ ५९८ ॥

---

## — ॥ आक्षिप्तिका ॥ —

आक्षिप्तिकां तावदुदीरयामस्त्वारभ्य तारादृषभात्तथैव ।
मध्यर्षभान्तं त्ववरुह्य तस्मादारोहणं तारगतर्षभान्तम् ॥ ५९९ ॥
गीत्वा च तानान् कतिचिद्विचित्रान् न्यस्येच्च तारस्थितषड्ज एव ।
आरभ्य तारादृषभात्तु मध्यषड्जावधि स्यादवरोहणं च ॥ ६०० ॥
आरुह्य तत्तारगधैवतान्तं गीत्वा च तानान् कतिचिद्विचित्रान् ।
न्यस्येच्च मध्यस्थितषड्ज एव तस्या विदारीं तु निरूपयामः ॥ ६०१ ॥

---

## — ॥ विदारी ॥ —

आरभ्य तारस्थितषड्जमादौ मध्यर्षभान्तं त्ववरोहणं स्यात् ।
आरुह्य तत्तारगमध्यमान्तं गीत्वा च तानान् कतिचिद्विचित्रान् ॥ ६०२ ॥
न्यस्येत्तु तारस्थितषड्ज एव सा रागवर्धन्यभिधीयतेऽन्या ।

---

## — ॥ रागवर्धनी ॥ —

आद्यावदेषा पुनरुक्ततानैर्गेया विदारीसहिता क्रमेण ॥ ६०३ ॥

---

## — ॥ षड्जस्थायी ॥ —

षड्जस्य तु स्थायिनमामनामस्त्वारभ्य तारस्थितषड्जमादौ ।
षड्जर्षभौ मध्यमपञ्चमौ च सधैवताः पञ्च तु ये स्वराः स्युः ॥ ६०४ ॥
स्वपूर्वपूर्वस्वरयोजनेन तथोत्तरेषामपि वर्जनेन ।
आरोहणनाप्यवरोहणेन प्रत्येकमेकैकतानमेषाम् ॥ ६०५ ॥
दशापि तानान् क्रमशोऽथ गीत्वा न्यस्येच्च तारस्थितषड्ज एव ।

---

— ॥ पञ्चमस्थायी ॥ —

तं पञ्चमस्थायिनमामनामस्त्वारभ्य मध्यस्थितपञ्चमं तु ॥ ६०६ ॥
मध्यस्थितः पञ्चम एव तारौ षड्जर्षभौ मध्यमपञ्चमौ च ।
प्रत्येकमेकैककतानमेषां स्वपूर्वपूर्वस्वरयोजनेन ॥ ६०७ ॥
तथोत्तरेषामपि वर्जनेन त्वारोहणेनाप्यवरोहणेन ।
दशापि तानान् क्रमशोऽथ गीत्वा न्यस्येच्च मध्यस्थितपञ्चमेऽस्मिन् ॥ ६०८ ॥

— ॥ मध्यषड्जस्थायी ॥ —

अथोच्यते संप्रति मध्यषड्जस्थायी समारभ्य तु मध्यषड्जम् ।
षड्जर्षभौ मध्यमपञ्चमौ च सधैवतस्तारगतश्च षड्जः ॥ ६०९ ॥
प्रत्येकमेकैककतानमेषां स्वपूर्वपूर्वस्वरयोजनेन ।
तथोत्तरेषामपि वर्जनेन चारोहणेनाप्यवरोहणेन ॥ ६१० ॥
तानांस्तथा द्वादश तु क्रमेण न्यस्येच्च मध्यास्थितषड्ज एव ।

— ॥ वर्तनी ॥ —

अथोच्यते वर्तनिका क्रमेण त्वारभ्य मध्यस्थितपञ्चमं तु ॥ ६११ ॥
आरुह्य चातारगधैवतं चावरुह्य मध्यस्थितपञ्चमान्तम् ।
तानान् विचित्रान् कतिचिच्च गीत्वा न्यस्येच्च मध्यस्थितषड्ज एव ॥ ६१२ ॥

— ॥ न्यासः ॥ —

न्यासस्तु रागस्य निरूप्यतेऽस्यास्त्वारभ्य तारस्थितषड्जमादौ ।
मध्यर्षभान्तं त्ववरोहणं स्यादारुह्य तत्तारगमध्यमान्तम् ॥ ६१३ ॥
गीत्वा च तानान् कतिचिद्विचित्रान् न्यस्येच्च तारास्थितषड्ज एव ।
निरूपितः सालगनाटिकाख्यो रागोऽञ्जनासूनुमतानुसारात् ॥ ६१४ ॥

(८) — ॥ अथ शुद्धवसन्तरागः ॥ —

शुद्धे वसन्तेऽपि च कल्पयन्ति सालङ्गनाट्याश्रितमेव मेलम् ।
श्रीरागनिष्ठर्षभधैवतौ यौ तावेव चात्रर्षभधैवतौ स्तः ।
इत्यादियुक्त्या परिकल्पयन्ति मेलान्तरं तच्च न युक्तियुक्तम् ॥ ६१५ ॥
अत्रापि चैकश्रुतिकल्पनेन स गुर्जरीमेलज एष रागः ।
प्रकल्पयन्त्यस्य च षाडवत्वमारोहणे पञ्चमवर्जनेन ॥ ६१६ ॥

तदत्र सम्यक्परिशोध्यमानेऽप्यारोहरीतावरोहसाम्यात् ।
संपूर्णभावं भजते तु लक्ष्ये न षाडवो लक्ष्यविरोधतः स्यात् ॥ ६१७ ॥
तस्मादयं शुद्धवसन्तरागः स्याद् गुर्जरीमेलत एव जातः ।
वक्ष्यामहे शुद्धवसन्तलक्ष्म न्यासो ग्रहोंऽशः पुनरत्र षड्जः ॥ ६१८ ॥

---

— ॥ आक्षिप्तिका ॥ —

आक्षिप्तिकामस्य निरूपयामः प्रक्रम्य तारस्थितषड्जमादौ ।
आ मध्यगान्मध्यमतोऽवरुह्यारोहेच्च तारस्थितमध्यमान्तम् ॥ ६१९ ॥
तानान् विचित्रान् कतिचित् प्रगाय न्यस्येच्च तारस्थितषड्ज एव ।

---

— ॥ रागवर्धनी ॥ —

तद्रागवर्धन्यभिधीयतेऽथ तारस्थितान्मध्यमतोऽवरुह्य ॥ ६२० ॥
तारस्फुरद्धैवतकान्तमस्मादा मध्यषड्जादवरुह्य पश्चात् ।
प्रगाय तानान् कतिचित् प्रगल्भं मध्यस्थिते षड्ज इह प्रजह्यात् ॥ ६२१ ॥

---

— ॥ विदारी ॥ —

अस्या विदारीमथ लक्षयामस्तारर्षभान्मध्यगमध्यमान्तम् ।
तत्रावरुह्य क्रमतोऽवरोहेत्तस्मात् पुनस्तारगमध्यमान्तम् ॥ ६२२ ॥
प्रगाय तानान् विविधान् यथेच्छं तारस्थषड्जे तदनु प्रजह्यात् ।

---

— ॥ रागवर्धनी ॥ —

तद्रागवर्धन्यभिधीयतेऽन्या प्रहाय मध्यस्थितषड्ज एव ॥ ६२३ ॥

---

— ॥ विदारी ॥ —

अस्या विदारीमभिदध्महेऽथ मध्यस्थितान्मध्यमतोऽधिरुह्य ।
क्रमेण तारस्थितमध्यमान्तं प्रगाय तानान् विविधान् यथेच्छम् ॥ ६२४ ॥
न्यस्येच्च तारस्थितषड्ज एव षड्जस्य तु स्थायिनमामनामः ।

---

— ॥ षड्जस्थायी ॥ —

प्रारभ्य तारस्थितषड्जमादावारुह्य गान्धारविवर्जनेन ॥ ६२५ ॥
यावद्भवेत्तारगतो निषादस्तस्मात् पुनः पञ्चमवर्जनेन ।
आ तारषड्जादवरुह्य गायेत् प्रत्येकमेकैककतानरीत्या ॥ ६२६ ॥
बद्धानिहैकादश तानभेदान् न्यस्येच्च तारस्थितषड्ज एव ।

———

— ॥ पञ्चमस्थायी ॥ —

तं पञ्चमस्थायिनमामनामः प्रक्रम्य मध्यस्थितपञ्चमान्तम् ॥ ६२७ ॥
क्रमेण तारस्थितपञ्चमान्तमारुह्य गांधारविवर्जनेन ।
विनावरुह्यापि च पञ्चमेन प्रत्येकमेकैककतानरीत्या ॥ ६२८ ॥
त्रयोदशादाय तु तानभेदान् न्यस्येच्च मध्यस्थितपञ्चमेऽस्मिन् ।

———

— ॥ षड्जस्थायी ॥ —

षड्जस्य तु स्थाय्यथ मध्यमस्य मध्यस्थषड्जात् प्रभृति क्रमेण ॥ ६२९ ॥
आरुह्य गांधारविवर्जनेन ह्यातारषड्जादवरोहणे तु ।
यथापुरं पञ्चमवर्जनेन प्रगाय तानांश्चतुरो दशापि ॥ ६३० ॥
मुञ्चेच्च मध्यस्थित एव षड्जे तद्वर्तनीं सम्प्रति वर्णयामः ।

———

— ॥ वर्तनी ॥ —

प्रक्रम्य मध्यस्थितधैवतान्तमारुह्य तारस्थितधैवतान्तम् ॥ ६३१ ॥
आमध्यषड्जादवरुह्य तानान् गीत्वा त्यजेन्मध्यगषड्ज एव ।

———

— ॥ न्यासः ॥ —

न्यासं तु रागस्य निरूपयामः प्रक्रम्य तारस्थितधैवतान्तम् ॥ ६३२ ॥
आमध्यषड्जादवरुह्य तस्मादारुह्य तारस्थितमध्यमान्तम् ।
गीत्वा च तानान् कतिचिद्विचित्रान् मध्यस्थिते षड्ज इह प्रमुञ्चेत् ॥ ६३३ ॥
तुरीययामे दिवसस्य गाने श्रेयस्करः श्रोतृजनस्य सोऽयम् ।

———

(९) — ॥ अथ नादरामक्रियारागः ॥ —

स्वतन्त्रमेलं परिकल्प्य नादरामक्रियारागगतं नवीनाः ॥ ६३४ ॥
तज्जन्यरागानपि कल्पयन्ति गांधारसाधारणभावयोगात् ।
अयुक्तमेतन्मतमन्तराख्यगांधारयोगादिह लक्ष्यमार्गे ॥ ६३५ ॥
अन्तर्गतो गुर्जरिकाख्यमेले स्वतन्त्रमेलं न सहेत रागः ।
तस्मादियं साधु भवेच्च नादरामक्रिया गुर्जरिकाख्यमेले ॥ ६३६ ॥
निरूप्यते सम्प्रति नादरामक्रियाख्यरागः सह लक्षणेन ।
न्यासग्रहांशाः पुनरत्र षड्जः संपूर्णभावं भजते च सोऽयम् ॥ ६३७ ॥

---

— ॥ आक्षिप्तिका ॥ —

आक्षिप्तिकां तावदुदीरयामः प्रारभ्य मध्यस्थितधैवतान्तम् ।
आमध्यगांधारमतोऽवरुह्यारोहेच्च तारस्थितमध्यमान्तम् ॥ ६३८ ॥
प्रगाय तानान् कतिचिद्विचित्रान् न्यस्येच्च तारस्थितषड्ज एव ।

---

— ॥ रागवर्धनी ॥ —

सा रागवर्धन्यभिधीयतेऽस्य मध्यस्थषड्जात् प्रभृति क्रमेण ॥ ६३९ ॥
आरुह्य तारस्थितमध्यमान्तं मध्यस्थषड्जावधि चावरुह्य ।
प्रगाय तानान् कतिचित् प्रगल्भान् मध्यस्थषड्जे पुनरेव जह्यात् ॥ ६४० ॥

---

— ॥ विदारी ॥ —

विदारिकास्याः किल तारषड्जादारुह्य तारस्थितपञ्चमान्तम् ।
आमध्यगांधारमतोऽवरुह्य गीत्वा च तानान् कतिचिद्विचित्रान् ॥ ६४१ ॥
न्यस्येच्च तारस्थितषड्ज एव तद्रागवर्धन्यभिधीयतेऽन्या ।
मध्यर्षभोपक्रममा च तारनिषादमारुह्य ततोऽवरोहेत् ॥ ६४२ ॥
आमध्यषड्जादधिगाय नानातानांस्त्यजेन्मध्यमषड्ज एव ।
अस्या विदारी किल तारषड्जादामध्यगांधारमथावरुह्य ॥ ६४३ ॥
आतारगांधारमथोऽवरोहेद्गीत्वा च तानान् कतिचिद्विचित्रान् ।

---

— ॥ षड्जस्थायी ॥ —

न्यस्येच्च तारस्थितषड्ज एव षड्जस्य तु स्थायिनमामनामः ॥ ६४४ ॥
तारात्तु षड्जात् क्रमशस्तु तारनिषादपर्यन्तमिह स्वरा ये ।
प्रत्येकमेषां पुनरेकमेकमारोहणेनाप्यवरोहणेन ॥ ६४५ ॥
तानान् किलोद्गाय चतुर्दशैवं न्यस्येच्च मध्यस्थितषड्ज एव ।

---

— ॥ गांधारस्थायी ॥ —

गांधारकस्थाय्यथ मध्यगं च गांधारमारभ्य तमानुपूर्व्यात् ॥ ६४६ ॥
आतारगांधारमथाधिरोहेदारोहरीत्या दश षट् च तानान् ।
गीत्वा विमुञ्चेदपि मध्यभाजि गांधारनाम्नि स्वर एव तस्मिन् ॥ ६४७ ॥

— ॥ षड्जस्थायी ॥ —

षड्जस्य च स्थाय्यथ मध्यगस्य प्रक्रम्य मध्यस्थितषड्जमादौ ।
आतारषड्जादधिरुह्य पश्चादा मध्यषड्जादपि चावरुह्य ॥ ६४८ ॥
षट् चापि तानान् दश तच्च गीत्वा मुञ्चेच्च किञ्चेह तु मध्यषड्जे ।

— ॥ वर्तनी ॥ —

तद्वर्तनीं कीर्तयितुं प्रवर्ते प्रक्रम्य मध्यस्थितषड्जमादौ ॥ ६४९ ॥
आरुह्य चा तारनिषादमध्यादा मध्यषड्जादवरुह्य पश्चात् ।
उद्गाय तानानुपरि प्रगल्भं न्यस्येच्च मध्यस्थितषड्ज एव ॥ ६५० ॥

— ॥ न्यासः ॥ —

रागस्य तु न्यासमुदीरयामः प्रक्रम्य तं रागविवर्धनीवत् ।
गीत्वापि तानान् पुनरुक्तहीनान् न्यस्येच्च मध्यस्थितषड्ज एव ॥ ६५१ ॥
चतुर्थयामे दिवसस्य गाने श्रेयस्करः श्रोतृजनस्य स स्यात् ।

(१०) — ॥ अथ गौलरागः ॥

वक्ष्यामहे सम्प्रति गौलरागमेलो भवेदत्र च गुर्जरीवत् ॥ ६५२ ॥
गौलस्य चैतस्य वदामि लक्ष्म न्यासो ग्रहोंऽशोऽत्र निषाद एव ।
वादी भवेदत्र निषादकः संवादी तु गांधार इहोपदिष्टः ॥ ६५३ ॥
स षाडवो धैवतलोपतः स्याल्लक्ष्यानुसाराहृषभस्त्विहांशः ।
गांधारकस्येव भवेन्निषादः संवादिनोंऽशत्वमतः कथं वा ॥ ६५४ ॥
भवेदमुष्मिन्नृषभेंऽशता तु स्वरैरनेकैर्व्यवधीयमाने ।
अत्रोच्यतेऽन्यस्वरशत्रुभूते गांधारके किञ्च निषादनाम्नि ॥ ६५५ ॥
प्रधानभावोंऽशसमानयुक्तस्तस्मादिह स्यादृषभस्वरोंऽशः ।
रागाभियुक्तैरत एव कैश्चित् संकीर्णरागत्वमुदीर्यतेऽस्य ॥ ६५६ ॥

प्रत्येकमेकैककतानमत्र स्वपूर्वपूर्वस्वरयोजनेन ।
तथोत्तरेषामपि वर्जनेनाप्यारोहणेनाप्यवरोहणेन ॥ ६६६ ॥
तानान् विचित्रान् दश साधु गीत्वा न्यस्येत् पुनस्तारगषड्ज एव

---

— ॥ पञ्चमस्थायी ॥ —

तं पञ्चमस्थायिनमामनामस्त्वारभ्य मध्यस्थितपञ्चमान्तम् ॥ ६६७ ॥
सपञ्चमं मध्यनिषादतारषड्जर्षभा मध्यमपञ्चमाश्च ।
प्रत्येकमेकैककतानमेषां स्वपूर्वपूर्वस्वरयोजनेन ॥ ६६८ ॥
तथोत्तरेषामपि वर्जनेन त्वारोहणेनाप्यवरोहणेन ।
गीत्वा क्रमाद् द्वादश तानभेदान् न्यस्येत् पुनर्मध्यमपञ्चमेऽस्मिन् ॥ ६६९ ॥

---

— ॥ रिषभस्थायी ॥ —

मध्यर्षभस्थायिनमामनामस्त्वारभ्य मध्यस्थमिहर्षभान्तम् ।
तारर्षभान्तं किल धैवतं च गांधारकं किञ्च विवर्ज्य षण्णाम् ॥ ६७० ॥
प्रत्येकमेकैककतानमेषां स्वपूर्वपूर्वस्वरयोजनेन ।
तथोत्तरेषामपि वर्जनेनाप्यारोहणेनाप्यवरोहणेन ॥ ६७१ ॥
गीत्वा क्रमाद् द्वादश तानभेदान् न्यस्येत् पुनर्मध्यगतर्षभेऽस्मिन् ।

---

— ॥ षड्जस्थायी ॥ —

स्थाय्युच्यते मध्यगषड्जकस्य त्वारभ्य मध्यस्थितषड्जमादौ ॥ ६७२ ॥
गांधारकं धैवतकं च मुक्त्वा तारस्थषड्जावधि तत्र षण्णाम् ।
प्रत्येकमेकैककतानमेषां स्वपूर्वपूर्वस्वरयोजनेन ॥ ६७३ ॥
तथोत्तरेषामपि वर्जनेन त्वारोहणेनाप्यवरोहणेन ।
गीत्वा क्रमाद् द्वादश तानभेदान् न्यस्येत् पुनर्मध्यगषड्ज एव ॥ ६७४ ॥

---

— ॥ वर्तनी ॥ —

गौलस्य वर्तन्यधुनोच्यते सा त्वारभ्य मध्यस्थितषड्जमादौ ।
आरुह्य चातारनिषादमस्मादामध्यषड्जं त्ववरोहणेन ॥ ६७५ ॥
गीत्वा च तानान् कतिचिद्यथेच्छं न्यस्येत् पुनर्मध्यगषड्ज एव ।

---

— ॥ न्यासः ॥ —

न्यासं तु रागस्य ततो वदामस्त्वारभ्य मध्यस्थितपञ्चमान्तम् ॥ ६७६ ॥
मध्यर्षभान्तं त्ववरुह्य तस्मादारुह्य तारस्थितमध्यमान्तम् ।
तानान् विचित्रान् पुनरुक्तिहीनान् न्यस्येत्तु तारस्थितषड्ज एव ॥ ६७७ ॥
सर्वेषु कालेषु स एष गेयः श्रेयस्करो रक्तिकरश्च गौळः ।

---

११ — ॥ अथ बौलिरागः ॥ —

यदा भवेदत्र तु बौलिरागो ग्रहस्वरो मध्यमकस्तदानीम् ॥ ६७८ ॥
वर्ज्यं निषादं कथयन्ति लक्ष्म विचक्षणा गायकसंप्रदायात् ।
तस्मादिदानीं नववैणिकानां न युज्यते मध्यमवर्जवार्ता ॥ ६७९ ॥
ग्रहस्वरस्यापि च वर्जभावः कथं भवेदत्र विचारणायाम् ।
एवं विरोधे परिहारमत्र वक्ष्यामहे वैणिकसंप्रदायात् ॥ ६८० ॥
आलापरागादिषु षड्ज एव ग्रहस्वरः सर्वजनप्रसिद्धः ।
षड्जे गृहीते सति मध्यमेऽपि निषादसंज्ञोऽत्र तुरीयभावात् ॥ ६८१ ॥
अन्यत्र पक्षान्तरमत्र चोक्तं प्रबन्धयुक्तस्वरखण्डितायाम् ।
स्यान्मध्यमस्य ग्रहता तु युक्ता वर्जक्रिया सा च तथोपपन्ना ॥ ६८२ ॥
बौल्याख्यरागं कथयामि तस्य मेलो भवेत् संप्रति गुर्जरीवत् ।
स्यान्मध्यमो न्यास इह ग्रहोंऽशो निषादलोपेन हि षाडवः स्यात् ॥ ६८३ ॥
निषादशब्देन च मध्यमोऽत्र लक्ष्ये तुरीयत्वगुणान्वितेन ।
ग्रहस्वरापेक्षितमात्रवर्जस्वरोऽथ मध्यस्वर एव नान्यः ॥ ६८४ ॥

---

— ॥ आक्षिप्तिका ॥ —

अक्षिप्तिकां तस्य निरूपयामस्त्वारभ्य तारस्थितषड्जमादौ ।
मध्यर्षभान्तं च ततोऽवरुह्याप्यातारगान्धारमथोऽधिरुह्य ॥ ६८५ ॥
तानान् विचित्रान् कतिचिच्च गीत्वा न्यस्येच्च तारस्थितषड्ज एव ।

---

— ॥ रागवर्धनी ॥ —

सा रागवर्धन्यथ मध्यमस्थगांधारमारभ्य यथाक्रमेण ॥ ६८६ ॥
आरुह्य तारस्थितपञ्चमान्तमामध्यषड्जान्तमतोऽवरुह्य ।
तानांश्च गीत्वा किल मध्यसंस्थगांधारकन्यास इहोपदिष्टः ॥ ६८७ ॥

---

— ॥ विदारी ॥ —

तस्या विदारीमथ तारषड्जमारभ्य मध्योपहितर्षभान्तम् ।
आतारगान्धारमतोऽधिरुह्य तानान् विचित्रान् कतिचिच्च गीत्वा ॥ ६८८ ॥
न्यस्येच्च तारस्थितषड्ज एव सा रागवर्धन्यपि च द्वितीया ।
विदारिका चापि यथापुरं ते गेये पुनस्ते पुनरुक्तिवर्जे ॥ ६८९ ॥

———

— ॥ षड्जस्थायी ॥ —

षड्जस्वरस्थायिनमामनामस्त्वारभ्य तारस्थितषड्जमादौ ।
येऽत्र स्वरा मध्यमवर्जनेन ते षट् स्वरास्तारनिषादकान्ताः ॥ ६९० ॥
प्रत्येकमेकैककतानमेषां स्वपूर्वपूर्वस्वरयोजनेन ।
तथोत्तरेषामपि वर्जनेन चारोहणेनाप्यावरोहणेन ॥ ६९१ ॥
गीत्वा पुनर्द्वादश साधु तानान् न्यस्येत् पुनस्तारगषड्ज एव ।

———

— ॥ पञ्चमस्थायी ॥ —

तं पञ्चमस्थायिनमत्र वक्ष्ये त्वारभ्य मध्यस्थितपञ्चमं च ॥ ६९२ ॥
सप्त स्वरास्तारगपञ्चमान्ता यथापुरं साधु च गानयोग्याः ।
तानान् विचित्रान् क्रमशोऽथ गीत्वा न्यस्येत् पुनर्मध्यगपञ्चमेऽस्मिन् ॥ ६९३ ॥

———

— ॥ रिषभस्थायी ॥ —

अथर्षभस्थायिनमामनामस्त्वारभ्य मध्यर्षभमेव चादौ ।
सप्त स्वरास्तारगतर्षभान्ताः पूर्वोक्तरीत्या तु चतुर्दशैव ॥ ६९४ ॥
गीत्वा तु तानांश्च विचित्ररूपान् न्यस्येत् पुनर्मध्यगतर्षभेऽस्मिन् ।

———

— ॥ वर्तनी ॥ —

अथोच्यते वर्तनिकामथास्यामारभ्य मध्यस्थितषड्जमादौ ॥ ६९५ ॥
आरुह्य चातारनिषादकान्तमामध्यषड्जादवरुह्य तानान् ।
गीत्वा च कांश्चित् क्रमशो विचित्रान् न्यस्येच्च मध्यस्थितषड्ज एव ॥ ६९६ ॥

———

— ॥ न्यासः ॥ —

न्यासस्तु रागस्य तथा प्रगेयो विदारिकावत् पुनरुक्तिहीनः ।

———

(१२) — ॥ अथ कर्णाटबङ्गालरागः ॥ —

कर्णाटबङ्गालमथामनामो मेलस्तु तस्यापि च गुर्जरीवत् ॥ ६९७ ॥
तल्लक्ष्म वक्ष्येंऽश इव ग्रहश्च न्यासश्च गांधार इतीह बोध्यः ।
निषादलोपादिह षाडवत्वमाक्षिप्तिकामस्य ततोऽभिधास्ये ॥ ६९८ ॥

— ॥ आक्षिप्तिका ॥ —

आरुह्य तारस्थितषड्जमादावा मध्यषड्जादवरुह्य पश्चात् ।
आरुह्य चातारगमध्यमं तु गीत्वा च तानान् कतिचिद्विचित्रान् ॥ ६९९ ॥
न्यस्येच्च तारस्थितषड्ज एव स्याद्रागवर्धन्यपि तस्य सैषा ।

— ॥ रागवर्धनी ॥ —

आरभ्य गांधारकमेव तारमारुह्य तारस्थितधैवतान्तम् ॥ ७०० ॥
आ मध्यषड्जादवरुह्य तानान् गीत्वा ततो न्यस्य तु मध्यषड्जे ।

— ॥ विदारी ॥ —

असौ विदार्यस्य तु तारषड्जमारभ्य मध्यस्थितधैवतान्तम् ॥ ७०१ ॥
ततोऽवरोहेदथ चाधिरोहेत्क्रमेण तारस्थितपञ्चमान्तम् ।
गीत्वा च तानान् कतिचिच्च तारषड्जे पुनर्न्यासमतो विदध्यात् ॥ ७०२ ॥

— ॥ रागवर्धनी ॥ —

एवं द्वितीयाऽपि च रागवर्धन्यस्या विदारी पुनरुक्तिहीना ।

— ॥ षड्जस्थायी ॥ —

स्थायी तु तारस्थितषड्जमादौ प्रक्रम्य तारस्थितधैवतान्तम् ॥ ७०३ ॥
स्वराः षडेवात्र भवन्ति तेषां प्रत्येकमेकैककतानरीत्या ।
स्वपूर्वपूर्वस्वरयोजनेन तथोत्तरेषामपि वर्जनेन ॥ ७०४ ॥
आरोहणेनाप्यवरोहणेन गीत्वा पुनर्द्वादश तत्र तानान् ।
न्यस्येच्च तारस्थितषड्ज एव तन्मध्यमस्थायिनमामनामः ॥ ७०५ ॥

— ॥ मध्यमस्थायी ॥ —

प्रारभ्य मध्यस्थितमध्यमं प्राक् सप्त स्वरास्तारगमध्यमान्ताः ।
प्रत्येकमेकैककतानमेषां स्वपूर्वपूर्वस्वरयोजनेन ॥ ७०६ ॥
तथोत्तरेषामपि वर्जनेन चारोहणेनाप्यवरोहणेन ।
चतुर्दश प्राग्वदिहैव तानान् गीत्वा त्यजेन्मध्यगमध्यमेऽस्मिन् ॥ ७०७ ॥

---

— ॥ रिषभस्थायी ॥ —

अथर्षभस्थाय्यभिधीयतेऽस्य प्रक्रम्य मध्यर्षभमेव पूर्वम् ।
सप्त स्वरास्तारगतर्षभान्ताश्चतुर्दश प्राग्वदिहापि तानान् ॥ ७०८ ॥
गीत्वा त्यजेन्मध्यगतर्षभे च तद्वर्तनीं चापि ततो वदामः ।

---

— ॥ वर्तनी ॥ —

प्रारभ्य मध्यस्थितधैवतं प्रागारुह्य तारस्थितमध्यमान्तम् ॥ ७०९ ॥
मध्यर्षभान्तं च ततोऽवरुह्य गीत्वा च तानान् कतिचित् क्रमेण ।
न्यस्येच्च मध्यस्थितषड्ज एव न्यासं तु रागस्य ततो वदामः ॥ ७१० ॥

---

— ॥ न्यासः ॥ —

या रागवर्धन्युदिता स तस्य विदारिकावद्भवतीति वेद्यम् ।
प्रगे प्रगेयः खलु राग एष श्रेयस्करो रक्तिकरो जनानाम् ॥ ७११ ॥

---

(१३) — ॥ अथ ललितरागः ॥ —

मेलेन साकं ललिताख्यरागलक्ष्माधुना साधु निरूपयामः ।
मेलस्तु तस्यापि च गुर्जरीवन्न्यासो ग्रहोंऽशः पुनरत्र षड्जः ॥ ७१२ ॥
स षाडवः पञ्चमवर्जनात् स्यादाक्षिप्तिकामस्य निरूपयामः ।

---

— ॥ आक्षिप्तिका ॥ —

तारस्थषड्जात् प्रभृति क्रमात् प्रागामध्यगांधारमथोऽवरुह्य ॥ ७१३ ॥
आतारगांधारमथ क्रमादारुह्यापि गीत्वा कतिचिच्च तानान् ।
न्यस्येच्च तारस्थितषड्ज एवातो रागवर्धन्यभीयतेऽस्य ॥ ७१४ ॥

---

— ॥ रागवर्धनी ॥ —

आरभ्य तारस्थितमध्यमं प्रागारुह्य तत्तारगधैवतं च ।
आमध्यगांधारमतोऽवरुह्य गीत्वा च तानान् कतिचिद्विचित्रान् ॥ ७१५ ॥
न्यस्येच्च मध्यस्थितषड्ज एव तस्या विदारीमथ वर्णयामः ।

— ॥ विदारी ॥ —

आरभ्य मध्यस्थितषड्जमादावारुह्य चा मध्यनिषादतोऽपि ॥ ७१६ ॥
आ तारषड्जादवरुह्य गीत्वा तानान् विमुञ्चेदथ तारषड्जे ।
तद्रागवर्धन्यपरोच्यतेऽथ प्रारभ्य गांधारमतश्च तारम् ॥ ७१७ ॥

— ॥ रागवर्धनी ॥ —

आरुह्य चा तारनिषादतोऽपि मध्यस्थषड्जावधि चावरुह्य ।
गीत्वा च तानान् कतिचिच्च मध्यषड्जे त्यजेदत्र विदारिकाऽस्य ॥ ७१८ ॥

— ॥ विदारी ॥ —

प्रारभ्य तारस्थितषड्जमादावारुह्य गांधारत आ च मध्यात् ।
आ तारगाद्धैवततोऽवरुह्य गीत्वा च तानान् कतिचित् क्रमेण ॥ ७१९ ॥
षड्जस्वरे तारगते विमुञ्चेत् स्थायी तु तारस्थितषड्जकस्य ।

— ॥ षड्जस्थायी ॥ —

प्रारभ्य तारस्थितषड्जमादौ स्वराः षडा तारनिषादतः स्युः ॥ ७२० ॥
प्रत्येकमेकैकतानमेषां स्वपूर्वपूर्वस्वरयोजनेन ।
तथोत्तरेषामपि वर्जनेन चारोहणेनाप्यवरोहणेन ॥ ७२१ ॥
गीत्वा ततो द्वादश तत्र तानांस्तारस्थषड्जे विसृजेच्च पश्चात् ।

— ॥ गांधारस्थायी ॥ —

गांधारकस्थाय्यथ वक्ष्यतेऽत्र प्रारभ्य गांधारमतश्च मध्यात् ॥ ७२२ ॥
आतारगांधारमतः स्वरा ये सप्तात्र तानांश्च चतुर्दशैषाम् ।
गीत्वा च पूर्वोदितमानुपूर्व्या गांधारके मध्यगते विजह्यात् ॥ ७२३ ॥

— ॥ षड्जस्थायी ॥ —

स्थायी ततो मध्यगषड्जकात्स्यात् षड्जं पुरोपक्रममाण एव ।
मध्यस्थमातारगताच्च षड्जात् सप्त स्वरास्तत्र चतुर्दशैषाम् ॥ ७२४ ॥
तानान् पुनः पूर्ववदेव गीत्वा षड्जस्वरे मध्यगते विमुञ्चेत् ।

---

— ॥ वर्तनी ॥ —

तद्वर्तनीं चापि निरूपयामो मध्यस्थितं प्रक्रममाण एव ॥ ७२५ ॥
षड्जं पुनस्तारगधैवतान्तमारुह्य चामध्यगषड्जमत्र ।
आरुह्य गीत्वा कतिचिच्च तानान् न्यस्येत् पुनर्मध्यगषड्ज एव ॥ ७२६ ॥

---

— ॥ न्यासः ॥ —

न्यासस्तु रागस्य निरूप्यतेऽत्र गेयस्त्वयं पूर्वविदारिकावत् ।
तानैर्मनोज्ञैः पुनरुक्तिहीनैर्निरूपितेयं ललिताभिधैषा ॥ ७२७ ॥
प्रगे प्रगेया शुभरक्तिदा सा श्रेयस्करी श्रोतृजनाव्रजानाम् ।

---

(१४) — ॥ अथ मलहरीरागः ॥ —

निरूप्यते सा मलहर्यथासौ मेलस्तु तस्या अपि गुर्जरीवत् ॥ ७२८ ॥
स्याद्धैवतो न्यास इह ग्रहोंऽशो निषादलोपादपि षाडवत्वम् ।
केचित् प्रवीणास्त्ववरोहणेऽस्या गांधारसत्तामपि वर्णयन्ति ॥ ७२९ ॥

---

— ॥ आक्षिप्तिका ॥ —

आक्षिप्तिकां तावदुदीरयामः प्रारभ्य तारर्षभमेव चादौ ।
आरुह्य तारास्थितमध्यमान्तं मध्यर्षभान्तं त्ववरुह्य कांश्चित् ॥ ७३० ॥
गीत्वाऽत्र तानानिह तारषड्जे न्यासो विधेयः खलु गातृमुख्यैः ।

---

— ॥ रागवर्धनी ॥ —

तद्रागवर्धन्यभिधीयतेऽथ प्रारभ्य तारर्षभमत्र पूर्वम् ॥ ७३१ ॥
आरुह्य तारस्थितधैवतान्तमामध्यषड्जं त्ववरुह्य पश्चात् ।
गीत्वा च तानान् कतिचिद्विचित्रान् न्यस्येच्च मध्यस्थितषड्ज एव ॥ ७३२ ॥

---

— ॥ विदारी ॥ —

अस्या विदारी त्वथ मध्यषड्जमारुह्य तारस्थितमध्यमान्तम् ।
आरुह्य चा मध्यगतर्षभाच्चावरुह्य तानानभिगाय कांश्चित् ॥ ७३३ ॥
न्यस्येच्च तारस्थितषड्ज एव तद्रागवर्धन्यपि च द्वितीया ।

---

— ॥ रागवर्धनी ॥ —

ज्ञेया विदार्या सह पूर्वरीत्या षड्जस्वरस्थाय्यभिधीयतेऽत्र ॥ ७३४ ॥

---

— ॥ षड्जस्थायी ॥ —

आरभ्य तारस्थितषड्जमादौ पञ्च स्वरास्तारगधैवतान्ताः ।
प्रत्येकमेकैककतानमेषां स्वपूर्वपूर्वस्वरयोजनेन ॥ ७३५ ॥
तथोत्तरेषामपि वर्जनेन चारोहणेनाप्यवरोहणेन ।
तानान् विचित्रान् दश साधु गीत्वा न्यस्येच्च मध्यस्थितषड्ज एव ॥ ७३६ ॥

---

— ॥ पञ्चमस्थायी ॥ —

तं पञ्चमस्थायिनमामनामः प्रारभ्य मध्यस्थितपञ्चमं तम् ।
स्वराः स्युरातारगपञ्चमाः षड् विना निषादेन भवन्ति तेषाम् ॥ ७३७ ॥
प्रत्येकमेकैककतानमेषां पूर्वोक्तवद् द्वादश तत्र तानान् ।
गीत्वा त्यजेन्मध्यगपञ्चमे तु स्थायी ततो मध्यगषड्जकस्य ॥ ७३८ ॥

---

— ॥ षड्जस्थायी ॥ —

आदावुपक्रम्य तु मध्यषड्जं तारस्थषड्जावधयः स्वराः षट् ।
प्रत्येकमेकैककतानमेषां पूर्वोक्तवद् द्वादश तत्र तानान् ॥ ७३९ ॥
गीत्वा ततो मध्यगषड्ज एव न्यस्येच्च तद्वर्तनिकोच्यतेऽथ ।

---

— ॥ वर्तनी ॥ —

आरभ्य मध्यस्थितषड्जमादावारुह्य तारस्थितधैवतान्तम् ॥ ७४० ॥
आ मध्यषड्जादवरुह्य तानान् गीत्वा विजह्यादथ मध्यषड्जे ।

---

— ॥ न्यासः ॥ —

रागस्य तु न्यास इहापि पूर्वविदारिकेवापुनरुक्ति गेयः ॥ ७४१ ॥

---

(१५) — ॥ अथ पाडीरागः ॥ —

रामक्रियामेलमुशन्ति पाडीरागस्य लोके कतिचिन्नवीनाः ।
वरालिका षट्श्रुतिमध्यमस्य संबन्धतस्तत् खलु नैव युक्तम् ॥ ७४२ ॥
चतुःश्रुतेस्तत्र तु मध्यमस्य शुद्धस्य योगादिह रागसिद्धौ ।
नैवात्र मेलान्तरकल्पनं स्यात्तद्गुर्जरीमेलज एष रागः ॥ ७४३ ॥
निरूपयामो निपुणं तु पाडीं न्यासो ग्रहोंऽशः पुनरत्र षड्जः ।
गांधारलोपात् किल षाडवोऽयमाक्षिप्तिकामस्य च वर्णयामः ॥ ७४४ ॥

---

— ॥ आक्षिप्तिका ॥ —

प्रारभ्य तारस्थितषड्जमादौ मध्यर्षभान्तं त्ववरुह्य पश्चात् ।
आरुह्य तारस्थितपञ्चमान्तं गीत्वा च तानान् कतिचिद्यथेच्छम् ॥ ७४५ ॥
न्यस्येच्च तारस्थितषड्ज एव तद्रागवर्धन्यभिधीयतेऽथ ।

---

— ॥ रागवर्धनी ॥ —

प्रक्रम्य मध्यस्थितपञ्चमं प्रागारुह्य तारस्थितधैवतान्तम् ॥ ७४६ ॥
मध्यस्थषड्जावधि चावरुह्य गीत्वा च तानान् कतिचिद्विचित्रान् ।
न्यस्येच्च मध्यस्थितषड्ज एव विदारिकां तां विशदीकरोमि ॥ ७४७ ॥

---

— ॥ विदारी ॥ —

प्रारभ्य मध्यस्थितपञ्चमं तं मध्यर्षभान्तं त्ववरुह्य तस्मात् ।
यथाक्रमं तावदथाधिरोहेद् यावद्भवेत्तारगपञ्चमोऽसौ ॥ ७४८ ॥
गीत्वा च तानान् विविधान् यथेच्छं न्यस्येच्च तारस्थितषड्ज एव ।

---

— ॥ रागवर्धनी ॥ —

सा रागवर्धन्यभिधीयतेऽन्या तारर्षभं प्रक्रममाण एव ॥ ७४९ ॥
आरुह्य तारस्थितधैवतान्तमा मध्यषड्जादवरुह्य पश्चात् ।
प्रगाय तानान् कतिचित् प्रगल्भं न्यस्येच्च मध्यस्थितषड्ज एव ॥ ७५० ॥

---

— ॥ विदारी ॥ —

अस्या विदारीमथ वर्णयामः प्रक्रम्य तारस्थितषड्जमादौ ॥ ७५१ ॥
मध्यर्षभान्तं त्ववरुह्य तस्मादारुह्य तारस्थितपञ्चमान्तम् ।
गीत्वा च तानान् कतिचिद्यथेच्छं न्यस्येच्च मध्यस्थितषड्ज एव ॥ ७५२ ॥

— ॥ षड्जस्थायी ॥ —

षड्जस्य तु स्थायिनमामनामः प्रारभ्य तारस्थितषड्जमादौ ।
तानान् विना मध्यगते निषादेऽप्याधैवतं तारगतांश्चतुर्णाम् ॥ ७५३ ॥
स्वपूर्वपूर्वस्वरयोजनात् स्वोत्तरोत्तरस्यापि विवर्जनाच्च ।
आरोहणेनाप्यवरोहणेन प्रत्येकमेकैकतानमेषाम् ॥ ७५४ ॥
अष्टौ तु तानानभिगाय पश्चान्न्यस्येच्च तारस्थितषड्ज एव ।

— ॥ पञ्चमस्थायी ॥ —

स पञ्चमस्थाय्यभिधीयतेऽस्य प्रक्रम्य मध्यस्थितपञ्चमं प्राक् ॥ ७५५ ॥
ये तु स्वरास्तारगपञ्चमान्तास्तानान् विना मध्यगते निषादे ।
प्राग्वत् पुनर्द्वादश तानभेदान् गीत्वा त्यजेन्मध्यगपञ्चमेऽस्मिन् ॥ ७५६ ॥

— ॥ रिषभस्थायी ॥ —

मध्यर्षभस्थायिविधिं वदामो मध्यर्षभानुक्रममानुपूर्व्यात् ।
तारर्षभान्तं किल मध्यमे च निषादके तानविवर्जनेन ॥ ७५७ ॥
प्राग्वच्च तानान् दश तु प्रगाय मुञ्चेच्च मध्यर्षभ एव तस्मिन् ।

— ॥ वर्तनी ॥ —

निरूपयामस्त्वथ वर्तनीं तामारभ्य मध्यस्थितषड्जमादौ ॥ ७५८ ॥
आरुह्य तारस्थितधैवतान्तं मध्यस्थषड्जावधि चावरुह्य ।
गीत्वा च तानान् कतिचित् प्रगल्भं न्यस्येच्च मध्यस्थितषड्ज एव ॥ ७५९ ॥

॥ न्यासः ॥

न्यासस्तु रागस्य निरुक्तरागविवर्तनीवत् पुनरत्र वेद्यः ।
तुरीययामे दिवसस्य गाने श्रेयस्करः श्रोतृजनस्य सोऽयम् ॥ ७६० ॥

(१६) — ॥ अथ सावेरीरागः ॥ —

सावेरिकालक्ष्म ततो वदामो मेलो भवेदत्र तु गुर्जरीवत् ।
स्यात् पञ्चमो न्यास इह ग्रहोंऽशो निषादगांधारकयोर्विलोपात् ॥ ७६१ ॥
स्यादौडुवोऽयं कथितस्तु रागस्त्वाक्षिप्तिकामस्य निरूपयामः ।

---

— ॥ आक्षिप्तिका ॥ —

आरभ्य तारस्थितषड्जमादौ मध्यर्षभान्तं त्ववरुह्य चास्मात् ॥ ७६२ ॥
आरुह्य तारस्थितमध्यमान्तं तानान् विचित्रान् कतिचिच्च गीत्वा ।
न्यस्येच्च तारस्थितषड्ज एव तद्रागवर्धन्यभिधीयतेऽथ ॥ ७६३ ॥

---

— ॥ रागवर्धनी ॥ —

आरभ्य तारस्थितपञ्चमान्तमारुह्य चातारगधैवतान्तम् ।
मध्यस्थषड्जावधि चावरुह्य तानान् विचित्रान् कतिचिच्च गीत्वा ॥ ७६४ ॥
न्यस्येत् पुनर्मध्यगषड्ज एव विदार्यमुष्यापि निरूप्यतेऽथ ।

---

— ॥ विदारी ॥ —

आरभ्य तारोपहितर्षभं प्राङ्मध्यर्षभान्तं त्ववरुह्य तस्मात् ॥ ७६५ ॥
आरभ्य तारस्थितमध्यमान्तं तानान् विचित्रान् कतिचित् प्रगाय ।
न्यस्येच्च तारस्थितषड्ज एव सा रागवर्धन्यभिधीयतेऽन्या ॥ ७६६ ॥

---

— ॥ रागवर्धनी ॥ —

आरभ्य मध्यस्थितपञ्चमं प्रागारुह्य तारस्थितधैवतान्तम् ।
मध्यस्थषड्जावधि चावरुह्य तानान् विचित्रान् कतिचिच्च गीत्वा ॥ ७६७ ॥
न्यस्येच्च मध्यस्थितषड्ज एव विदारिकान्या तु विविच्यतेऽत्र ।

---

— ॥ विदारी ॥ —

आरभ्य तारस्थितषड्जमादौ मध्यर्षभान्तं त्ववरुह्य पश्चात् ॥ ७६८ ॥
आरुह्य तारस्थितमध्यमान्तं नाना च तानानभिगाय चित्रान् ।
न्यस्येच्च मध्यस्थितषड्ज एव षड्जस्वरस्थायिनमामनामः ॥ ७६९ ॥

---

— ॥ षड्जस्थायी ॥ —

आरभ्य तारस्थितषड्जमादौ निरस्य गांधारनिषादकौ द्वौ ।
पञ्च स्वरास्तारगधैवतान्ताः प्रत्येकमेकैककतानमेषाम् ॥ ७७० ॥
स्वपूर्वपूर्वस्वरयोजनात् स्वोत्तरोत्तरेषामपि वर्जनेन ।
आरोहणेनाप्यवरोहणेन चोद्गाय तानानपि तान् दशैव ॥ ७७१ ॥
न्यस्येत्तु तारस्थितषड्ज एव तं पञ्चमस्थायिनमामनामः ।

---

— ॥ पञ्चमस्थायी ॥ —

प्रारभ्य मध्यस्थितपञ्चमं प्रागेते स्वरास्तारगपञ्चमान्ताः ॥ ७७२ ॥
यथापुरं द्वादश साधु गीत्वा तानांस्त्यजेन्मध्यगपञ्चमेऽस्मिन् ।

---

— ॥ मध्यमस्थायी ॥ —

तन्मध्यमस्थायिनमामनामः प्रारभ्य मध्यस्थितमध्यमं तम् ॥ ७७३ ॥
एते स्वरास्तारगमध्यमान्ता यथापुरं द्वादश साधु तानान् ।
गीत्वात्यजेन्मध्यगमध्यमेऽस्मिन् स्थाय्युच्यते मध्यगषड्जकस्य ॥ ७७४ ॥

---

— ॥ षड्जस्थायी ॥ —

आरभ्य मध्यस्थितषड्जमादौ ये तारषड्जावधयः स्वराः षट् ।
यथापुरं द्वादश साधु तानान् गीत्वा त्यजेन्मध्यगषड्ज एव ॥ ७७५ ॥

---

— ॥ वर्तनी ॥ —

तां वर्तनीं संप्रति लक्षयामस्त्वारभ्य मध्यस्थितषड्जमादौ ।
आरुह्य तारस्थितधैवतान्तं मध्यस्थषड्जान्तमतोऽवरुह्य ॥ ७७६ ॥
तानान् विचित्रान् कतिचित् प्रगाय त्यजेत् पुनर्मध्यगषड्ज एव ।

---

— ॥ न्यासः ॥ —

न्यासस्तु रागस्य विदारिकावत्तथा प्रगेयः पुनरुक्तिवर्जम् ॥ ७७७ ॥

---

(१५) — ।। अथ रेवगुप्तिरागः ।। —

वक्ष्यामहे संप्रति रेवगुप्तिं मेलो भवेदस्य तु गुर्जरीवत् ।
न्यासो ग्रहोंऽशस्त्वृषभोऽत्र वेद्यो विना निषादेन च मध्यमेन ।। ७७८ ।।
भवेदसावौडुवतां प्रपन्नस्त्वाक्षिप्तिकामस्य निरूपयामः ।

---

— ।। आक्षिप्तिका ।। —

आरभ्य मध्यस्थितधैवतं प्रागा मध्यषड्जादवरुह्य तस्मात् ।। ७७९ ।।
आरुह्य चातारगतर्षभं च प्रगाय तानान् कतिचिद्विचित्रान् ।
न्यस्येच्च तारस्थितषड्ज एवातो रागवर्धन्यभिधीयतेऽत्र ।। ७८० ।।

---

— ।। रागवर्धनी ।। —

आरभ्य तारर्षभमेव चादावारुह्य तानान् कतिचित् प्रगल्भम् ।
न्यस्येत् पुनर्मध्यगषड्ज एव तस्या विदारीं प्रतिपादयामः ।। ७८१ ।।

---

— ।। विदारी ।। —

प्रारभ्य तारस्थितषड्जमादावामध्यगांधारमतोऽवरुह्य ।
आतारगांधारमथाधिरुह्य तानान् विचित्रान् कतिचिच्च गीत्वा ।। ७८२ ।।
न्यस्येच्च तारस्थितषड्ज एव सा रागवर्धन्यभिधीयतेऽन्या ।

---

— ।। रागवर्धनी ।। —

आरभ्य मध्यस्थितधैवतं प्रागारुह्य तारस्थितधैवतान्तम् ।। ७८३ ।।
आ मध्यषड्जादवरुह्य पश्चात्तानांश्च नाना तदनु प्रगाय ।
न्यस्येच्च मध्यस्थितषड्ज एव तस्या विदारीं तदनु ब्रवीमि ।। ७८४ ।।
आरभ्य तारर्षभतस्ततोऽपि चामध्यगांधारमतोऽवरुह्य ।
तानान् विचित्रान् कतिचित् प्रगाय चातारगांधारमतोऽधिरुह्य ।। ७८५ ।।
न्यस्येच्च तारस्थितषड्ज एव षड्जस्वरस्थायिनमामनामः ।

---

— ।। षड्जस्थायी ।। —

आरभ्य तारस्थितषड्जमादौ विना निषादस्वरमध्यमाभ्याम् ।। ७८६ ।।
पञ्च स्वरा धैवतिकान्तिमाः स्युः प्रत्येकमेकैककतानमेषाम् ।
स्वपूर्वपूर्वस्वरयोजनात् स्वोत्तरोत्तरेषामपि वर्जनेन ।। ७८७ ।।

आरोहणेनाप्यवरोहणेन दशापि तानान् क्रमशः प्रगाय ।
न्यस्येच्च तारस्थितषड्ज एव स्थायी स्वरस्यैष तु पञ्चमस्य ॥ ७८८ ॥

---

— ॥ पञ्चमस्थायी ॥ —

प्रारभ्य मध्यस्थितपञ्चमं तं षट् च स्वरास्तारगपञ्चमान्ताः ।
पूर्वोक्तवद् द्वादश तत्र तानान् गीत्वा त्यजेन्मध्यगपञ्चमेऽस्मिन् ॥ ७८९ ॥
स्थाय्युच्यते मध्यगषड्जकस्य प्रारभ्य मध्यस्थितषड्जमादौ ।
तारस्थषड्जावधिकाः स्वराः षड्यथापुरं द्वादश तत्र तानान् ॥ ७९० ॥
प्रगाय मध्यस्थितषड्ज एव मुञ्चेच्च तद्वर्तनिकां वदामः ।

---

— ॥ वर्तनी ॥ —

प्रारभ्य मध्यस्थितषड्जमादावारुह्य तारस्थितधैवतान्तम् ॥ ७९१ ॥
आ मध्यषड्जादवरुह्य पश्चात्तानान् विचित्रांस्तदनु प्रगाय ।

---

— ॥ न्यासः ॥ —

न्यस्येच्च मध्यस्थितषड्ज एव न्यासस्तु रागस्य विदारिकावत् ॥ ७९२ ॥

---

१८ — ॥ अथ वराटीरागः ॥ —

मेलं प्रवक्ष्याम्यधुना वराट्याः षड्जर्षभौ पञ्चमधैवतौ च ।
गांधारकश्चेति च पञ्च शुद्धाः स्यान्मध्यमः षट्श्रुतिरेव तत्र ॥ ७९३ ॥
निषादकः काकलिसंज्ञकश्च निरूप्यतेऽस्याः पुनरत्र लक्ष्म ।
न्यासो ग्रहोंऽशः पुनरत्र षड्जः स एव वादी स च पञ्चमस्तु ॥ ७९४ ॥
संवादितामेति स मध्यमश्च विवादिगांधारनिषादकेयम् ।
स धैवतः स्यादृषभोऽनुवादी चाक्षिप्तिकां प्राक् तु निरूपयामः ॥ ७९५ ॥

---

— ॥ आक्षिप्तिका ॥ —

गांधारमारभ्य तु तारसंस्थं मध्यस्थितान्मध्यमतोऽवरुह्य ।
आतारगांधारमथाधिरोहेत्तानांश्च गीत्वा कतिचिद्यथेच्छम् ॥ ७९६ ॥
न्यस्येत् पुनस्तारगषड्ज एव सा रागवर्धन्यभिधीयतेऽस्याः ।

---

— ॥ रागवर्धनी ॥ —

आरभ्य मध्यस्थितषड्जमादावारुह्य तारस्थनिषादकान्तम् ॥ ७९७ ॥
आमध्यषड्जं त्ववरुह्य तस्माद्गीत्वा तु तानान् कतिचिद्विचित्रान् ।
न्यस्येत्तु मध्यस्थितषड्ज एव तस्या विदारीमथ वर्णयामः ॥ ७९८ ॥

---

— ॥ विदारी ॥ —

आरभ्य मध्यस्थितपञ्चमं तमामध्यषड्जं त्ववरुह्य तस्मात् ।
आरुह्य तत्तारगमध्यमान्तं गीत्वा च तानान् कतिचिद्विचित्रान् ॥ ७९९ ॥
न्यस्येत्तु तारस्थितषड्ज एव सा रागवर्धन्यभिधीयतेऽन्या ।

---

— ॥ रागवर्धनी ॥ —

आरभ्य मध्यस्थितपञ्चमं तमारुह्य तत्तारनिषादकान्तम् ॥ ८०० ॥
आमध्यषड्जं त्ववरुह्य तस्माद्गीत्वा च तानान् कतिचिद्विचित्रान् ।
न्यस्येत्तु मध्यस्थितषड्ज एव तस्या विदारीं प्रतिपादयामः ॥ ८०१ ॥

---

— ॥ विदारी ॥ —

आरभ्य तारस्थितषड्जमादावामध्यगांधारमतोऽवरोहेत् ।
आरुह्य तत्तारगमध्यमान्तं गीत्वा तु तानान् कतिचिद्विचित्रान् ॥ ८०२ ॥
न्यस्येत्तु तारस्थिषड्ज एव ततः परं स्थायिविधां वदामः ।

---

— ॥ षड्जस्थायी ॥ —

आरभ्य तारस्थितषड्जमादौ सप्तापि ये तारनिषादकान्ताः ॥ ८०३ ॥
स्वपूर्वपूर्वस्वरयोजनेन तथोत्तरेषापि वर्जनेन ।
प्रत्येकमेकैककतानमेषामारोहणेनाप्यवरोहणेन ॥ ८०४ ॥
चतुर्दशोद्गाय च तानभेदान् न्यस्येत्तु तारस्थितषड्ज एव ।

---

— ॥ मध्यमस्थायी ॥ —

तन्मध्यमस्थायिनमत्र वक्ष्ये त्वारभ्य मध्यस्थितमध्यमं च ॥ ८०५ ॥
अष्टापि ये तारगमध्यमान्ताः प्रत्येकमेकैककतानमेषाम् ।
स्वपूर्वपूर्वस्वरयोजनेन तथोत्तरेषामपि वर्जनेन ॥ ८०६ ॥

आरोहणेनाप्यवरोहणेन व्यष्टौ च तानान् पुनरत्र गीत्वा ।
न्यस्येत्तथा मध्यगमध्यमेऽस्मिंस्तथर्षभस्थायिनमामनामः ॥ ८०७ ॥

---

— ॥ रिषभस्थायी ॥ —

आरभ्य मध्यर्षभकं स्वरा ये तारर्षभान्ताः पुनरष्ट तेषाम् ।
स्वपूर्वपूर्वस्वरयोजनेन तथोत्तरेषामपि वर्जनेन ॥ ८०८ ॥
आरोहणेनाप्यवरोहणेन प्रत्येकमेकैककतानरीत्या ।
व्यष्टौ च तानान् पुनरत्र गीत्वा न्यस्येत्तु मध्यर्षभ एव तस्मिन् ॥ ८०९ ॥

---

— ॥ षड्जस्थायी ॥ —

निरूप्यते संप्रति मध्यषड्जस्थायी समारभ्य तु मध्यषड्जम् ।
आतारषड्जं पुनरष्टधा स्युस्तेषां स्वराणां क्रमतो विधाय ॥ ८१० ॥
स्वपूर्वपूर्वस्वरयोजनेन तथोत्तरेषामपि वर्जनेन ।
प्रत्येकमेकैककतानमेषामारोहणेनाप्यवरोहणेन ॥ ८११ ॥
व्यष्टौ तु तानान् पुनरत्र गीत्वा न्यस्येत्तु मध्यस्थितषड्जमादौ ।
आरुह्य चातारनिषादमस्मान्मध्यस्थषड्जावधि चावरुह्य ॥ ८१२ ॥
तानांश्च गीत्वा कतिचिद्विचित्रान् न्यस्येत्तु मध्यस्थितषड्ज एव ।

---

— ॥ न्यासः ॥ —

न्यासं तु रागस्य निरूपयामस्त्वारभ्य मध्यस्थितपञ्चमं तम् ॥ ८१३ ॥
आमध्यषड्जं त्ववरुह्य तस्मादारुह्य तत्तारगमध्यमान्तम् ।
गीत्वा च तानान् पुनरुक्तिहीनान् न्यस्येत्तु तारस्थितषड्ज एव ॥ ८१४ ॥
एषा विशेषात् कथिता वराटी सत्संप्रदायागतलक्ष्यरीत्या ।

---

(१९) — ॥ अथ श्रीरागः ॥ —

श्रीरागमेलं प्रतिपादयामः षड्जस्तथा मध्यमपञ्चमौ च ॥ ८१५ ॥
शुद्धास्तयोर्धैवतकर्षभौ द्वौ पञ्चश्रुती कैशिकको निषादः ।
गांधारकस्तत्र भवेत्तु साधारणस्वरैरेभिरयं युतः स्यात् ॥ ८१६ ॥
श्रीरागलक्ष्म प्रवदामि षड्जो न्यासो ग्रहोंऽशश्च भवेदमुष्य ।
गांधारके वैकृतके च तानो ह्यस्त्येव तस्मिन् परिपूर्ण एषः ॥ ॥ ८१७ ॥

---

— ॥ आक्षिप्तिका ॥ —

आक्षिप्तिकामस्य निरूपयामः प्रारभ्य मध्यस्थनिषादमादौ ।
मध्यर्षभान्तं त्ववरुह्य तारगांधारपर्यन्तमथाधिरोहेत् ॥ ८१८ ॥
गीत्वा च तानान् कतिचिद्विचित्रान् न्यस्येच्च तारस्थितषड्ज एव ।

———

— ॥ रागवर्धनी ॥ —

तद्रागवर्धन्यभिधीयतेऽथ प्रारभ्य तारर्षभमेव पूर्वम् ॥ ८१९ ॥
आ तारगात् पञ्चमतोऽधिरोहेदा मध्यषड्जादवरुह्य पश्चात् ।
गायेच्च तानान् कतिचिद्विचित्रान् न्यस्येच्च मध्यस्थितषड्ज एव ॥ ८२० ॥

———

— ॥ विदारी ॥ —

अस्या विदारीं कथयेऽथ मध्यगतर्षभं प्रक्रममाण एव ।
आतारगान्धारमथाधिरुह्यावरुह्य चामध्यगपञ्चमं च ॥ ८२१ ॥
प्रगाय तानानथ तत्र नाना षड्जे विमुञ्चेदपि मध्यभाजि ।

———

— ॥ रागवर्धनी ॥ —

तद्रागवर्धन्यभिधीयतेऽन्या प्रारभ्य तारस्थितमध्यमं तु ॥ ८२२ ॥
आरुह्य चातारनिषादमादावा मध्यषड्जादवरोहणं स्यात् ।
गीत्वा च तानान् विविधाननेकान् न्यस्येच्च मध्यस्थितषड्ज एव ॥ ८२३ ॥

———

— ॥ विदारी ॥ —

अस्या विदारीमथ वर्णयामः प्रारभ्य तारस्थितषड्जमादौ ।
मध्यर्षभान्तं त्ववरुह्य तारगांधारपर्यन्तमथाधिरोहेत् ॥ ८२४ ॥
गीत्वा च तानान् कचिद्विचित्रान् षड्जे तु तारस्थित एव जह्यात् ।

———

— ॥ षड्जस्थायी ॥ —

षड्जस्वरस्थायिनमामनामः प्रारभ्य तारस्थितषड्जमादौ ॥ ८२५ ॥
पञ्च स्वरास्तारनिषादकान्ता विहाय गांधारकधैवतौ द्वे ।
एकैकमेषामभिधाय तानं प्रत्येकमेवं दश तत्र गीत्वा ॥ ८२६ ॥
त्यजेच्च तारस्थितषड्ज एव तत्पञ्चमस्थायिनमामनामः ।

———

— ॥ पञ्चमस्थायी ॥ —

आरभ्य मध्यस्थितपञ्चमं प्राग्विहाय तौ मध्यमधैवतौ द्वौ ॥ ८२७ ॥
ये षट् स्वरास्तारगपञ्चमान्ताः प्रत्येकमेषां पुनरेकमेकम् ।
प्रगाय तु द्वादश तानभेदान् मध्यस्थिते पञ्चम एव जह्यात् ॥ ८२८ ॥

— ॥ षड्जस्थायी ॥ —

निरूप्यते संप्रति मध्यषड्जस्थायी समारभ्य तु मध्यषड्जम् ।
स्वराः षडातारगषड्जमत्र विहाय तौ मध्यमधैवतौ च ॥ ८२९ ॥
प्रत्येकमेकैकतानमेषामारोहणेनाप्यवरोहणेन ।
गीत्वा पुनर्द्वादश चैव मुञ्चेत् षड्जस्वरे मध्यगते ततश्च ॥ ८३० ॥

— ॥ वर्तनी ॥ —

तद्वर्तनीं संप्रति वर्णयामः प्रारभ्य मध्यस्थितषड्जमादौ ।
आरुह्य चातारनिषादमस्मादा मध्यषड्जादवरोहणं स्यात् ॥ ८३१ ॥
गीत्वा च तानान् विविधान् क्रमेण मध्यस्थषड्जे पुनरेव जह्यात् ।

— ॥ न्यासः ॥ —

न्यासस्तु रागस्य निरुक्तपूर्वविदारिकावत् पुनरत्र वेद्यः ॥ ८३२ ॥
सायाह्नगाने सति सर्वसंपत्प्रदायकोऽयं शुभरक्तिदश्च ।

(२०) ॥ —अथ सालगभैरवीरागः ॥ —

वक्ष्यामहे सालगभैरवीं तां श्रीरागमेलस्तु भवेदमुष्याः ॥ ८३३ ॥
तल्लक्षणं तावदुदीरयामो न्यासो ग्रहोंऽशः पुनरत्र षड्जः ।
संपूर्णभावं भजते च सोऽयमाक्षिप्तिकां तावदुदीरयामः ॥ ८३४ ॥

— ॥ आक्षिप्तिका ॥ —

आरभ्य तारस्थितषड्जमादौ मध्यर्षभान्तं त्ववरुह्य तस्मात् ।
आतारगांधारमथाधिरोहेद्गीत्वा च तानान् कतिचिद्विचित्रान् ॥ ८३५ ॥
मुञ्चेच्च तारस्थितषड्ज एव तद्रागवर्धन्यभिधीयतेऽथ ।

— ॥ रागवर्धनी ॥ —

तारस्थितान्मध्यमतोऽधिरुह्य ताराान्निषादाच्च ततोऽवरोहेत् ॥ ८३६ ॥
आमध्यषड्जं कतिचिच्च तानान् गीत्वा त्यजेन्मध्यगषड्ज एव ।

———

— ॥ विदारी ॥ —

वक्ष्ये विदारीमथ तारषड्जमारभ्य तन्मध्यगतर्षभान्तम् ॥ ८३७ ॥
अतोऽवरुह्य क्रमशोऽधिरोहेदातारगांधारमनेकतानान् ।
गीत्वा त्यजेन्मध्यगषड्ज एव त्वस्या विदारीमथ लक्षयामः ॥ ८३८ ॥
आरुह्य तारस्थितषड्जमादौ मध्यर्षभान्तं त्ववरुह्य तस्मात् ।
आतारगांधारमथाधिरोहेत् प्रगाय तानान् कतिचित् प्रगल्भम् ॥ ८३९ ।
न्यस्येच्च तारस्थितषड्ज एव तद्रागवर्धन्यभिधीयतेऽथ ।

———

— ॥ रागवर्धनी ॥ —

प्रक्रम्य तारस्थितपञ्चमं तमारुह्य तारस्थनिषादकान्तम् ॥ ८४० ॥
मध्यस्थषड्जान्तमतोऽवरुह्य गीत्वा च तानान् कतिचित् क्रमेण ।
मुञ्चेच्च मध्यस्थितषड्ज एव तस्या विदारीं कथये द्वितीयाम् ॥ ८४१ ॥

———

— ॥ विदारी ॥ —

मध्यस्थितात् पञ्चमतोऽवरुह्य मध्यर्षभान्तं तु ततोऽधिरोहेत् ।
आतारगांधारमनेकतानान् गीत्वा त्यजेन्मध्यमषड्ज एव ॥ ८४२ ॥

———

— ॥ षड्जस्थायी ॥ —

षड्जस्य तु स्थाय्यभिधीयतेऽथ प्रारभ्य तारस्थितषड्जमादौ ।
स्वराः स्युरा तारनिषादतो ये प्रत्येकमेकैककतानमेषाम् ॥ ८४३ ॥
उद्गाय तानांश्चतुरो दशापि षड्जस्वरे तारगते विजह्यात् ।

———

— ॥ पञ्चमस्थायी ॥ —

स्थाय्युच्यते संप्रति पञ्चमस्य याऽष्टस्वरी मध्यगपञ्चमादिः ॥ ८४४ ॥
भवेच्च तारस्थितपञ्चमान्ता पुरेव तस्यां दश षट् च तानान् ।
गायंस्त्यजेन्मध्यगपञ्चमेऽस्मिन्नथर्षभस्थायिनमामनामः ॥ ८४५ ॥

———

— ॥ रिषभस्थायी ॥ —

मध्यर्षभात्तारगतर्षभान्तं प्राग्वत् प्रगायन् दश षट् च तानान् ।
मध्यस्थितेऽस्मिन् रिषभे विमुञ्चेत् स्थाय्युच्यते मध्यगषड्जकस्य ॥ ८४६ ॥

---

— ॥ षड्जस्थायी ॥ —

मध्यस्थषड्जात् प्रभृति क्रमेण तारस्थषड्जावधि तु स्वराणाम् ।
तानान् प्रगायन् दश षट् पुरेव न्यस्येच्च मध्यस्थितषड्ज एव ॥ ८४७ ॥

---

— ॥ वर्तनी ॥ —

वर्तन्यमुष्याः खलु मध्यषड्जादारुह्य चातारनिषादमस्मात् ।
आ मध्यषड्जादवरुह्य तानान् गीत्वा त्यजेन्मध्यगषड्ज एव ॥ ८४८ ॥

---

— ॥ न्यासः ॥ —

विदारिकावद्धवतीह रागन्यासो दिनान्ते विदधीत गानम् ।

---

(२१) — ॥ अथ घण्टारवरागः ॥ —

घाण्टारवं केचिदमुं नवीनाः सबन्धतः षट्श्रुतिकर्षभस्य ॥ ८४९ ॥
जन्यं विदुः कन्नडगौलमेलाख्याज्ज्यं तथैतत् खलु युक्त्यभावात् ।
श्रीरागमेलोपगतर्षभेण रागस्य पञ्चश्रुतिनैव सिद्धेः ॥ ८५० ॥
मेलान्तरं तत्र न कल्पनीयं श्रीरागमेलेन गतार्थभावात् ।
श्रीरागमेलप्रभवश्च तस्माद्घण्टारवो राजत एष रागः ॥ ८५१ ॥
लक्ष्मोच्यते तस्य च पूर्ण एष स्याद्धैवतो न्यास इह ग्रहोंऽशः ।

---

— ॥ आक्षिप्तिका ॥ —

आक्षिप्तिकामस्य निरूपयामः प्रक्रम्य तारस्थितषड्जमादौ ॥ ८५२ ॥
आरुह्य तारस्थितमध्यमान्तमा मध्यषड्जादवरुह्य तस्मात् ।
गीत्वा च तानान् कतिचिद्विचित्रान् न्यस्येच्च मध्यस्थितषड्ज एव ॥ ८५३ ॥

---

— ॥ विदारी ॥ —

अस्या विदारीमथ वर्णयामः प्रारभ्य मध्यस्थितपञ्चमं प्राक् ।
आरुह्य तारस्थितमध्यमान्तमस्मात् पुनर्मध्यगपञ्चमान्तम् ॥ ८५४ ॥
अथावरोहेत् कतिचिच्च तानान् गीत्वा त्यजेत्तारगषड्ज एव ।

— ॥ रागवर्धनी ॥ —

तद्रागवर्धन्यभिधीयतेऽन्या तारस्थितात् पञ्चमतोऽवरुह्य ॥ ८५५ ॥
यावद्भवेत्तारगतो निषादस्त्वा मध्यषड्जाच्च ततोऽवरोहेत् ।
प्रगाय तानान् विविधान् यथेच्छं मुञ्चेच्च मध्यस्थित एव षड्जे ॥ ८५६ ॥

— ॥ विदारी ॥ —

अस्या विदार्यां प्रभृतीह मध्यनिषादतस्तारगमध्यमान्तम् ।
आरुह्य तस्मात् क्रमशोऽवरोहेद्यावत् पुनः पञ्चम एष मध्यः ॥ ८५७ ॥
उद्गाय तानानुचितान् यथेच्छं न्यस्येच्च मध्यस्थित एव षड्जे ।

— ॥ षड्जस्थायी ॥ —

निरूप्यते संप्रति तारषड्जस्थायी समारभ्य तु तारषड्जम् ॥ ८५८ ॥
स्वराः स्युरातारनिषादका ये प्रत्येकमेषामधिरोहणेन ।
तथाऽवरोहेण च तानमेकमेकं प्रगायंश्चतुरो दशैव ॥ ८५९ ॥
न्यस्येच्च तारस्थितषड्ज एव स्थाय्युच्यते मध्यगपञ्चमस्य ।

— ॥ पञ्चमस्थायी ॥ —

मध्यस्थितात् पञ्चमतो भवन्ति ये तु स्वरास्तारगपञ्चमान्ताः ॥ ८६० ॥
प्राग्वच्च तेषां दश षट् च तानान् गीत्वा त्यजेन्मध्यगपञ्चमेऽस्मिन् ।

— ॥ रिषभस्थायी ॥ —

मध्यर्षभस्थाय्यथ ये स्वराः स्युर्मध्यर्षभात्तारगतर्षभान्ताः ॥ ८६१ ॥
पुरेव तेषां दश षट् च तानान् गीत्वा त्यजेन्मध्यगतर्षभेऽस्मिन् ।

— ॥ षड्जस्थायी ॥ —

निरूप्यते संप्रति मध्यषड्जस्थायी समारभ्य तु मध्यषड्जम् ॥ ८६२ ॥
तारस्थषड्जावधि ये स्वराः स्युस्तेषां पुरोक्तेन हि वर्त्मनैव ।
व्यष्ट प्रगायन् क्रमशस्तु तानान् मुञ्चेच मध्यस्थितषड्ज एव ॥ ८६३ ॥

---

— ॥ वर्तनी ॥ —

तद्वर्तनी मध्यगषड्जतः प्रागारुह्य तारस्थनिषादकान्तम् ।
मध्यस्थषड्जान्तमतोऽवरोहन् गायंश्च तानान् कतिचिद्विचित्रान् ॥ ८६४ ॥
मुञ्चेच तारस्थितषड्ज एव न्यासस्तु रागस्य विदारिकावत् ।

---

— ॥ न्यासः ॥ —

स पौनरुक्त्येन विना प्रगेयः स्यात् सर्वदा रक्तिकृदेष गाने ॥ ८६५ ॥

---

(२२) — ॥ अथ वेलावलीरागः ॥ —

वेलावलीरागमुदीरयामः श्रीरागमेलः पुनरस्य मेलः ।
तल्लक्षणं तावदुदीरयामो न्यासो ग्रहोंऽशः किल धैवतोऽस्य ॥ ८६६ ॥
संपूर्णभावं भजते च सोऽयमाक्षिप्तिकामस्य ततो वदामः ।

---

— ॥ आक्षिप्तिका ॥ —

तारस्थषड्जात् प्रभृति क्रमेण चारुह्य मध्यस्थितपञ्चमान्तम् ॥ ८६७ ॥
आ तारषड्जादधिरुह्य तानान् गायन् प्रमुञ्चेदिह तारषड्जे ।

---

— ॥ रागवर्धनी ॥ —

तद्रागवर्धन्यभिधीयतेऽथ गांधारतस्तारगतान् क्रमेण ॥ ८६८ ॥
आरुह्य तारस्थितधैवतान्तमामध्यषड्जादवरुह्य तस्मात् ।
गायंश्च तानानुदितान् यथेच्छं मुञ्चेच मध्यस्थितषड्ज एव ॥ ८६९ ॥

---

— ॥ विदारी ॥ —

विदार्यथो मध्यगपञ्चमात् प्रागातारगांधारमथाधिरुह्य ।
मध्यर्षभान्तं त्ववरुह्य तानान् गायंस्त्यजेत्तारगषड्ज एव ॥ ८७० ॥

---

— ॥ रागवर्धनी ॥ —

गेया द्वितीयाऽपि च रागवर्धन्यतो विदार्याः प्रथमावदेव ।

— ॥ षड्जस्थायी ॥ —

निरूप्यते संप्रति तारषड्जस्थायी समारभ्य तु तारषड्जम् ॥ ८७१ ॥
स्वराः स्युरा तारनिषादतो ये क्रमेण तेषामधिरोहणेन ।
तथाऽवरोहेण च पूर्वपूर्वान् संयोज्य मुक्तोत्तरमुत्तरं च ॥ ८७२ ॥
प्रत्येकमेकैकतानरीत्या चतुर्दशोद्गाय च तानभेदान् ।
तारस्थिते षड्ज इह प्रमुञ्चेत् स्थाय्युच्यते मध्यगपञ्चमस्य ॥ ८७३ ॥

— ॥ पञ्चमस्थायी ॥ —

मध्यस्थितात् पञ्चमतो भवन्ति ये तु स्वरास्तारगपञ्चमान्ताः ।
पुरेव तेषां दश षट् च तानान् गीत्वा त्यजेन्मध्यगपञ्चमेऽस्मिन् ॥ ८७४ ॥

— ॥ षड्जस्थायी ॥ —

मध्यस्थषड्जस्य निरूप्यतेऽथ स्थायी समारभ्य तु मध्यषड्जम् ।
आ तारषड्जात् क्रमशः स्वराणां प्राग्वत् प्रगायन् दश षट् च तानान् ॥ ८७५ ॥
न्यस्येच्च मध्यस्थितषड्ज एव तद्वर्तनीं तावदुदीरयामः ।

— ॥ वर्तनी ॥ —

मध्यस्थषड्जादधिरुह्य तारगांधारपर्यन्तमतोऽवरोहेत् ॥ ८७६ ॥
आमध्यषड्जं कतिचिच्च तानान् गीत्वा त्यजेन्मध्यगषड्ज एव ।

॥ न्यासः ॥

न्यासस्तु रागस्य निरुक्तपूर्वविदारिकेवापुनरुक्ति गेया ॥ ८७७ ॥
गाने दिनस्य प्रथमे तु यामे श्रेयस्करः श्रोतृजनस्य सोऽयम् ।

(२३) — ॥ अथ देवगांधारीरागः ॥ —

सा देवगांधार्यभिधीयतेऽस्याः श्रीरागमेलं किल मेलमाहुः ॥ ८७८ ॥
षड्जग्रहो न्यास इह प्रतीतः संपूर्णभावं भजते च सोऽयम् ।

— ॥ आक्षिप्तिका ॥ —

आक्षिप्तिकां तावदुदीरयामस्तारस्थषड्जात् क्रमशोऽवरोहेत् ॥ ८७९ ॥
यावद्भवेन्मध्यगमध्यमोऽस्मादारुह्य तारस्थितमध्यमान्तम् ।
तथा च तानान् विविधान् प्रगाय न्यस्येच्च तारस्थितषड्ज एव ॥ ८८० ॥

---

— ॥ रागवर्धनी ॥ —

सा रागवर्धन्यभिधीयतेऽस्याः प्रारभ्य तारस्थितमध्यमान्तम् ।
आरुह्य तारस्थनिषादमस्मान्मध्यस्थषड्जावधि चावरुह्य ॥ ८८१ ॥
तानाननेकानपि च प्रगाय मुञ्चेच्च मध्यस्थितषड्ज एव ।

---

— ॥ विदारी ॥ —

अस्या विदारीमथ लक्षयामः प्रारभ्य मध्यस्थितपञ्चमान्तम् ॥ ८८२ ॥
आ मध्यगान्मध्यमतोऽवरुह्य चारुह्य तारस्थितमध्यमान्तम् ।
तानान् यथेच्छं कतिचित् प्रगाय तारस्थिते षड्ज इह प्रजह्यात् ॥ ८८३ ॥

---

— ॥ रागवर्धनी ॥ —

सा रागवर्धन्यपि च द्वितीया गेया विदारीसहिता पुरेव ।

---

— ॥ षड्जस्थायी ॥ —

षड्जस्य तु स्थायिनमामनामः प्रारभ्य तारस्थितषड्जमादौ ॥ ८८४ ॥
सप्त स्वरास्तारनिषादकान्ताः पूर्वोक्तरीत्या तु भवन्ति तत्र ।
प्रत्येकमेषां पुनरेकमेकमारोहणेनाप्यवरोहणेन ॥ ८८५ ॥
प्रगाय तानांश्च चतुर्दशैव न्यस्येच्च तारस्थितषड्ज एव ।

---

— ॥ मध्यमस्थायी ॥ —

स्थाय्युच्यते मध्यगमध्यमस्य प्रारभ्य मध्यस्थितमध्यमान्तम् ॥ ८८६ ॥
ये षट् स्वरास्तारगमध्यमान्ताः प्रत्येकमेकैककतानमेषाम् ।
आरोहणेनाप्यवराहेणेन गीत्वेति षट् किं च नवापि तानान् ॥ ८८७ ॥
न्यस्येच्च मध्यस्थितमध्यमेऽस्मिन् वर्तन्यभिख्यामपि वर्णयामः ।

---

— ॥ वर्तनी ॥ —

आरभ्य मध्यस्थितमध्यमान्तमारुह्य चातारनिषादमादौ ॥ ८८८ ॥
आमध्यषड्जं त्ववरुह्य तानान् गीत्वा त्यजेन्मध्यगषड्ज एव ।

— ॥ न्यासः ॥ —

न्यासं तु रागस्य ततो वदामः प्रारभ्य तारस्थितषड्जमादौ ॥ ८८९ ॥
आरुह्य चातारनिषादमत्र गायेच्च तानान् कतिचिद्विचित्रान् ।
न पञ्चमे धैवतके निषादे तानो भवेत् प्रातरियं तु गेया ॥ ॥ ८९० ॥

(२४) — ॥ अथ रीतिगौलरागः ॥ —

वक्ष्यामहे संप्रति रीतिगौलं श्रीरागमेलः पुनरस्य मेलः ।
अस्य स्वतन्त्रं परिकल्पयन्ति मेलं नवीनाः श्रुतिरीत्यविज्ञाः ॥ ८९१ ॥
शुद्धस्य योगेन किलर्षभस्य गांधारकस्येति मतं न युक्तम् ।
श्रीरागमेलोपगतर्षभस्य गांधारकस्यापि च दर्शनेन ॥ ८९२ ॥
लक्ष्ये न मेलान्तरकल्पनं स्याच्छ्रीरागमेलप्रभवस्तु सोऽयम् ।
लक्ष्मोच्यते तस्य निषाद एव न्यासो ग्रहोंऽशः स तु पूर्णरागः ॥ ८९३ ॥

— ॥ आक्षिप्तिका ॥ —

आक्षिप्तिकां वच्मि तु रीतिगौलरागस्य मध्यस्थनिषादतोऽधः ।
आ मध्यगान्मध्यमतोऽवरुह्य तारस्थितान्मध्यमतोऽधिरोहेत् ॥ ८९४ ॥
इच्छानुसारादभिगाय तानांस्तारस्थषड्जे तत एव जह्यात् ।

— ॥ रागवर्धनी ॥ —

स्याद्रागवर्धन्यभिधाऽस्य मध्यगांधारतस्तारगधैवतान्तम् ॥ ८९५ ॥
आरुह्य पश्चादवरुह्य मध्यषड्जावधि स्वानुगुणं प्रगाय ।
तानांश्च मुञ्चेदथ मध्यषड्जे सा रागवर्धन्युदिताऽऽदिमेयम् ॥ ८९६ ॥

— ॥ विदारी ॥ —

अस्या विदारीं कथयामि मध्यस्थितात् क्रमात् पञ्चमतोऽवरुह्य ।
आ मध्यषड्जादृिषभादथाधिरुह्यापि तारस्थितमध्यमान्तम् ॥ ८९७ ॥
इच्छानुसारादभिगाय तानान् मध्यस्थषड्जे विसृजेच्च पश्चात् ।

— ॥ रागवर्धनी ॥ —

आद्येव चैवास्य पुनर्विदारी स्याद्रागवर्धन्यपि च द्वितीया ॥ ८९८ ॥

— ॥ विदारी ॥ —

अन्या विदार्यप्यथ रागवर्धन्याद्यावदेवापुनरुक्तरीत्या ।

॥ षड्जस्थायी ॥

षड्जस्य तु स्थायिनमीरयामि षड्जादिमं तं रिषभोत्थितानाम् ॥ ८९९ ॥
षण्णां स्वराणां पुनरेकमेकं प्रत्येकमारोहणतोऽवरोहात् ।
गायन् क्रमाद् द्वादश चैव तानान् गीत्वा विजह्यादपि तारषड्जे ॥ ९०० ॥

— ॥ मध्यमस्थायी ॥ —

स्थायी च सा मध्यगमध्यमस्य प्रारभ्य मध्यस्थितमध्यमं तम् ।
अतारगान्मध्यमतोऽधिरोहावरोहमार्गेण चतुर्दशैव ॥ ९०१ ॥
तानान् विचित्रानभिगाय पश्चान्मध्यस्थिते मध्यम एव मुञ्चेत् ।

— ॥ रिषभस्थायी ॥ —

मध्यर्षभस्थाय्यथ चास्य मध्यस्थितर्षभात्तारगतर्षभान्तम् ॥ ९०२ ॥
चतुर्दशारोहणतोऽवरोहादुद्गाय तानान् कतिचित् क्रमेण ।
न्यस्येत्तु पश्चाद्रिषभे तु मध्यस्थिते ततो वर्तनिकां वदामः ॥ ९०३ ॥

— ॥ वर्तनी ॥ —

मध्यस्थषड्जात् प्रभृति क्रमादारोहेद्थातारनिषादमादौ ।
अथावरोहेदपि मध्यषड्जपर्यन्तमित्थं कतिचिद्विचित्रान् ॥ ९०४ ॥
उद्गाय तानानुपरि क्रमेण षड्जस्वरे मध्यगते विजह्यात् ।

— ॥ न्यासः ॥ —

न्यासस्तु रागस्य निरुक्तपूर्वविदारिकेवापुनरुक्ति गेया ॥ ९०५ ॥
अयं च सायाह्नि गीयमानः श्रेयस्करः श्रोतृजनस्य नित्यम् ।

(२५) — ॥ अथ मालवश्रीरागः ॥ —

निरूप्यते संप्रति मालवश्रीः श्रीरागमेलः पुनरस्य मेलः ॥ ९०६ ॥
न्यासो ग्रहोंऽशः पुनरत्र षड्जः स षाडवः स्यादृषभेण हीनः ।

---

— ॥ आक्षिप्तिका ॥ —

आक्षिप्तिकामस्य निरूपयामः प्रारभ्य तारस्थिषड्जमादौ ॥ ९०७ ॥
ततः पुनर्मध्यगमध्यमान्तं स्वरेषु षट्सु क्रमतोऽवरुह्य ।
आरुह्य तत्तारगमध्यमान्तं तानान् यथेच्छं कतिचिच्च गीत्वा ॥ ९०८ ॥
न्यस्येच्च तारस्थितषड्ज एव तद्रागवर्धन्यभिधीयतेऽथ ।

---

— ॥ रागवर्धनी ॥ —

आरभ्य मध्यस्थितमध्यमं प्रागारुह्य तारस्थितमध्यमान्तम् ॥ ९०९ ॥
आ मध्यगान्मध्यमतोऽवरुह्य गीत्वा च तानान् कतिचिद्विचित्रान् ।
न्यस्येच्च तारस्थितषड्ज एव सा रागवर्धन्यभिधीयतेऽन्या ॥ ९१० ॥

---

— ॥ विदारी ॥ —

तस्या विदार्यामथ मध्यषड्जादारुह्य तारस्थितमध्यमान्तम् ।
एषा विदार्या सह पूर्वरागविवर्धनीवत् कथिता बुधेन्द्रैः ॥ ९११ ॥

---

— ॥ रागवर्धनी ॥ —

आरभ्य मध्यस्थितमध्यमं प्रागारुह्य तारस्थितपञ्चमान्तम् ।
आ मध्यषड्जादवरुह्य गीत्वा तानांस्त्यजेन्मध्यगषड्ज एव ॥ ९१२ ॥

---

— ॥ षड्जस्थायी ॥ —

स्थाय्युच्यते तारगषड्जकस्य प्रारभ्य तारस्थितषड्जमादौ ।
ताभ्यां विनैवर्षभधैवताभ्यां पञ्च स्युरा तारनिषादतो ये ॥ ९१३ ॥
प्रत्येकमेषां पुनरेकमेकं गीत्वा दशैवं किल तानभेदान् ।
न्यस्येच्च तारस्थितषड्ज एव तत्पञ्चमस्थायिनमामनामः ॥ ९१४ ॥

---

— ॥ पञ्चमस्थायी ॥ —

आरभ्य मध्यस्थितपञ्चमं प्रागा तारगात् पञ्चमतः स्वराः षट् ।
प्रत्येकमेषां पुनरेकमेकं गीत्वेति च द्वादश तानभेदान् ॥ ९१५ ॥
मुञ्चेच्च मध्यस्थितपञ्चमे तु स्थाय्युच्यते मध्यगषड्जकस्य ।

---

— ॥ षड्जस्थायी ॥ —

आरभ्य मध्यस्थितषड्जमादावा तारषड्जादिह षट् स्वरा ये ॥ ९१६ ॥
प्रत्येकमेषां पुनरेकमेकं गीत्वेति च द्वादश तानभेदान् ।
न्यस्येच्च मध्यस्थितषड्ज एव तद्वर्तनीं संप्रति कीर्तयामः ॥ ९१७ ॥

---

— ॥ वर्तनी ॥ —

आरभ्य मध्यस्थितषड्जमादावारुह्य चा तारनिषादतः प्राक् ।
आमध्यषड्जं त्ववरुह्य गीत्वा तानान् विचित्रान् कतिचित् क्रमेण ॥ ९१८ ॥
न्यस्येच्च मध्यस्थितषड्ज एव न्यासं तु रागस्य ततो वदामः ।

---

— ॥ न्यासः ॥ —

भवेदयं प्राक्च विदारिकावद्द्वयः सदाऽयं शुभवृद्धिहेतुः ॥ ९१९ ॥

---

(२६) — ॥ अथ मध्यमादिरागः ॥ —

लक्ष्मोच्यते संप्रति मध्यमादेः श्रीरागमेलः खलु तस्य मेलः ।
स्यान्मध्यमन्यास इह ग्रहोंऽशो वर्ज्यौ तथैवर्षभधैवतौ द्वौ ॥ ९२० ॥

---

— ॥ आक्षिप्तिका ॥ —

आक्षिप्तिकामस्य निरूपयामः प्रारभ्य तारस्थितषड्जमादौ ।
मध्यर्षभान्तं त्ववरुह्य पूर्वमारभ्य तत्तारगमध्यमान्तम् ॥ ९२१ ॥
गीत्वा च तानान् विविधान् यथेच्छं न्यस्येच्च तारस्थितषड्ज एव ।

---

— ॥ रागवर्धनी ॥ —

तद्रागवर्धन्यभिधीयतेऽत्र प्रारभ्य तारस्थितपञ्चमं प्राक् ॥ ९२२ ॥
आरुह्य चातारनिषदमादौ मध्यस्थषड्जान्तमथावरुह्य ।
गीत्वा विचित्रानपि तत्र तानाञ्जह्याच्च मध्यस्थितषड्ज एव ॥ ९२३ ॥

— ॥ विदारी ॥ —

तस्या विदारीं कथयामि तारषड्जं समारभ्य ततोऽवरोहेत् ।
मध्यर्षभान्तं पुनरेव तत्रारोहेच्च तारस्थितमध्यमान्तम् ॥ ९२४ ॥
स्वैरं विचित्रानभिगाय तानान् मध्यस्थिते षड्ज इह प्रजह्यात् ।

— ॥ रागवर्धनी ॥ —

सा रागवर्धन्यभिधीयतेऽन्या तारस्थितात् पञ्चमतोऽवरोहेत् ॥ ९२५ ॥
यावद्भवेत्तारगतो निषादस्त्वा मध्यषड्जादवरुह्य तानान् ।
गीत्वाऽथ मुञ्चेदपि मध्यषड्जे सा रागवर्धन्युदिताऽत्र सम्यक् ॥ ९२६ ॥

— ॥ विदारी ॥ —

अस्या विदारी खलु तारषड्जात् प्रभृत्यथो मध्यगतर्षभान्तम् ।
ततोऽवरोहेत्तदनुक्रमेण त्वारुह्य तत्तारगमध्यमान्तम् ॥ ९२७ ॥
इच्छानुसारादभिगाय तानान् न्यस्येच्च मध्यस्थितषड्ज एव ।

— ॥ षड्जस्थायी ॥ —

षड्जस्य तु स्थायिनमामनामः प्रारभ्य तारस्थितषड्जमादौ ॥ ९२८ ॥
आ धैवतात्तारगताच्च पञ्च विनैव गांधारकधैवताभ्याम् ।
स्वपूर्वपूर्वस्वरयोजनात् स्वोत्तरोत्तरस्यापि विवर्जनाच्च ॥ ९२९ ॥
दशैव तानानभिगाय तत्रारोहावरोहक्रमतः प्रतीतान् ।
तारस्थषड्जे च ततस्तु मुञ्चेत् स्थाय्युच्यते मध्यगमध्यमस्य ॥ ९३० ॥

— ॥ मध्यमस्थायी ॥ —

आरभ्य मध्यस्थितमध्यमं तं षट् च स्वरास्तारगमध्यमान्ताः ।
प्रत्येकमेकैकमथो पुरेव गीत्वा पुनर्द्वादश तत्र तानान् ॥ ९३१ ॥
मध्यस्थिते मध्यम एव जह्यात् स्थाय्युच्यते मध्यगषड्जकस्य ।

— ॥ षड्जस्थायी ॥ —

आरभ्य मध्यस्थितषड्जमादौ गांधारकं धैवतमन्तरेण ॥ ९३२ ॥
स्वराः षडातारगषड्जमेव प्रत्येकमेषां पुनरेकमेकम् ।
गायेदिति द्वादश तानभेदान् गीत्वा त्यजेन्मध्यगषड्ज एव ॥ ९३३ ॥

---

— ॥ वर्तनी ॥ —

तद्वर्तनीं कीर्तयितुं प्रवर्ते प्रारभ्य मध्यस्थितषड्जमादौ ।
आरुह्य चा तारनिषादतः प्रागा मध्यषड्जादवरुह्य पश्चात् ॥ ९३४ ॥
गीत्वा च तानान् कतिचिद्विचित्रान् न्यस्येच्च मध्यस्थितषड्ज एव ।

---

— ॥ न्यासः ॥ —

न्यासस्तु रागस्य पुरा निरुक्तविदारिकेवापुनरुक्ति गेयः ॥ ९३५ ॥
अह्नः पुनः पश्चिमयामगाने श्रेयस्करः श्रोतृजनस्य सोऽयम् ।

---

(२७) — ॥ अथ धनाशीरागः ॥ —

धनाशिकारागमथाभिधास्ये श्रीरागमेलः पुनरत्र मेलः ॥ ९३६ ॥
वक्ष्यामि लक्ष्यानुगुणं तु लक्ष्म न्यासो ग्रहोंऽशः पुनरत्र षड्जः ।
स धैवतेनाप्यृषभेण हीनः स्यादौडुवो वैणिकसंप्रदायात् ॥ ९३७ ॥

---

— ॥ आक्षिप्तिका ॥ —

आक्षिप्तिकामस्य निरूपयामः प्रारभ्य तारस्थितषड्जमादौ ।
आमध्यगांधारमनुक्रमेणावरुह्य चारुह्य च तारभाजः ॥ ९३८ ॥
आ चैव गांधारत आत्ममेधानुरोधतः कानपि तत्र तानान् ।
उद्गाय मुञ्चेदथ तारषड्जे तद्रागवर्धन्यभिधीयतेऽथ ॥ ९३९ ॥

---

— ॥ रागवर्धनी ॥ —

आरभ्य तारस्थितषड्जमादावामध्यगांधारमतोऽवरुह्य ।

---

आतारगात् पञ्चमतोऽधिरुह्य गीत्वा च तानान् कतिचिद्विचित्रान् ॥ १४० ॥
ततो विजह्यादपि मध्यषड्जे तस्या विदारीं तदनु ब्रवीमि ।

---

— ॥ विदारी ॥ —

षड्जस्वरात्तारगतात् क्रमेण मध्यस्थगांधारमतोऽवरोहेत् ॥ १४१ ॥
आरुह्य तारस्थितमध्यमान्तं नानाविधानप्यभिगाय तानान् ।
तारस्थषड्जे तदनु प्रमुञ्चेत्तद्रागवर्धन्यभिधीयतेऽन्या ॥ १४२ ॥

---

— ॥ रागवर्धनी ॥ —

प्रक्रम्य तारस्थितमध्यमं प्रागारुह्य चा तारगतान्निषादात् ।
तथैव तारस्थितपञ्चमान्तं ततोऽवरोहन्नभिगाय तानान् ॥ १४३ ॥
मध्यस्थषड्जे विसृजेदमुष्या विदारिकाऽप्याद्यविदारिकावत् ।

---

— ॥ षड्जस्थायी ॥ —

षड्जस्य तु स्थायिनमीरयामो मध्यस्थषड्जप्रमुखस्वरा ये ॥ १४४ ॥
पञ्च स्वरास्तारगतान्निषादाद् द्वावन्तरेणर्षभधैवतौ च ।
प्रत्येकमेकैकतया तु तानानेषां दशारोहणतोऽवरोहेत् ॥ १४५ ॥
गीत्वा विमुञ्चेदपि तारषड्जेऽथ पञ्चमस्थाय्यभिधीयतेऽस्याः ।

---

— ॥ पञ्चमस्थायी ॥ —

प्रारभ्य मध्यस्थितपञ्चमं प्राक् तावत्तथैवर्षभधैवतौ द्वौ ॥ १४६ ॥
आ तारगात् पञ्चमतः स्वराः षट् प्रत्येकमेकैक इति क्रमेण ।
गीत्वा ततो द्वादश तानभेदान् मध्यस्थिते पञ्चम एव मुञ्चेत् ॥ १४७ ॥

---

— ॥ षड्जस्थायी ॥ —

अथोच्यते संप्रति मध्यषड्जस्थायी समारभ्य तु मध्यषड्जम् ।
आ तारषड्जादखिलस्वराणां तावन्तरेणर्षभधैवतौ द्वौ ॥ १४८ ॥
आरोहणेनाप्यवरोहणेन गीत्वा ततो द्वादश तानभेदान् ।
मध्यस्थषड्जे च विहाय वर्तन्यथोच्यते मध्यगतात्तु षड्जात् ॥ १४९ ॥

---

— ॥ वर्तनी ॥ —

आरुह्य चा तारगतान्निषदादामध्यषड्जादवरुह्य पश्चात् ।
तानाननेकांस्तदनु प्रगाय ततो विमुञ्चेदपि मध्यषड्जे ॥ ९५० ॥

— ॥ न्यासः ॥ —

न्यासस्तु रागस्य निरुक्तपूर्वविदारिकेवापुनरुक्ति गेयः ।
प्रातः प्रदोषे च स गीयमानः श्वःश्रेयसं श्रोतृजनस्य दद्यात् ॥ ९५१ ॥

२८ — ॥ अथ भैरवीरागः ॥ —

अथोच्यते भैरविकाख्यरागो मेलेऽत्र षड्जस्वरमध्यमौ द्वौ ।
सपञ्चमौ धैवतकश्च शुद्धाः पञ्चश्रुतिः स्यादृषभो निषादः ॥ ९५२ ॥
कैशिक्यभिख्यः कथितोऽत्र साधारणश्च गांधार इह प्रतीतः ।
एभिः स्वरैः सप्तभिरन्वितो यस्तं भैरवीमेलमुदीरयन्ति ॥ ९५३ ॥
पञ्चश्रुतेश्चाप्यृषभस्य योगाद्गांधारसाधारणभावतश्च ।
कैशिक्यभिख्यानयुतान्निषादादित्येतदस्या नियुनक्ति मार्गम् ॥ ९५४ ॥
पञ्चश्रुतिश्चापि हि धैवतोऽत्र लक्ष्येषु कुत्राप्युपलभ्यतेऽस्याम् ।
मेलान्तरं तेन न कल्पनीयं तस्याः समेष्वेष्वपरस्वरेषु ॥ ९५५ ॥
तद्भैरवीलक्ष्म वदामि षड्जो न्यासग्रहांशाविह धैवतः स्यात् ।
वादी तु षड्जः स तु पञ्चमः संवादी विवादी तु निषादसंज्ञः ॥ ९५६ ॥
गांधारकेण त्वनुवादिना तु स्यातां स्वरौ धैवतकर्षभौ द्वौ ।

— ॥ आक्षिप्तिका ॥ —

आक्षिप्तिकामस्य निरूपयामस्त्वारभ्य तारस्थनिषादमादौ ॥ ९५७ ॥
मध्यर्षभान्तं त्ववरुह्य तस्मादारुह्य तारस्थितमध्यमान्तम् ।
गीत्वा च तानान् कतिचिद्विचित्रान् न्यस्येच्च तारस्थितषड्ज एव ॥ ९५८ ॥

— ॥ रागवर्धनी ॥ —

सा रागवर्धन्यभिधीयतेऽस्यास्त्वारभ्य मध्यस्थितपञ्चमं तम् ।
आरुह्य तारस्थितधैवतान्तं मध्यस्थषड्जावधि चावरुह्य ॥ ९५९ ॥
गीत्वा विचित्रान् कतिचिच्च तानान् न्यस्येच्च मध्यस्थितषड्ज एव ।

— ॥ विदारी ॥ —

आद्यां विदारीं त्वथ लक्षयामस्त्वारभ्य मध्यस्थितषड्जमादौ ॥ ९६० ॥
आरुह्य तारस्थितमध्यमान्तं गीत्वा च तानान् कतिचिद्विचित्रान् ।
पूर्वोक्तरीत्याऽथ यथाक्रमेण न्यस्येच्च तारस्थितषड्ज एव ॥ ९६१ ॥

---

— ॥ रागवर्धनी ॥ —

सा रागवर्धन्यभिधीयतेऽन्या त्वारभ्य मध्यस्थनिषादमादौ ।
गीत्वा च तारस्थनिषादकान्तं तानान् विचित्रानवरोहरीत्या ॥ ९६२ ॥
न्यस्येच्च मध्यस्थितषड्ज एव वक्ष्ये विदारीमधुना द्वितीयाम् ।

---

— ॥ विदारी ॥ —

आरभ्य मध्यस्थितषड्जमादौ तथैव तारस्थितमध्यमान्तम् ॥ ९६३ ॥
गीत्वा च तानान् पुनरुक्तिहीनान् न्यस्येच्च तारस्थितषड्ज एव ।

---

— ॥ षड्जस्थायी ॥ —

षड्जस्य तु स्थायिनमामनामस्त्वारभ्य तारस्थितषड्जमादौ ॥ ९६४ ॥
स्वरास्तु ये तारनिषादकान्ताः प्रत्येकमेकैकतानमेषाम् ।
स्वपूर्वपूर्वस्वरयोजनेन तथोत्तरेषामपि वर्जनेन ॥ ९६५ ॥
आरोहणेनाप्यवरोहणेन गीत्वा च तानांस्तु चतुर्दशैव ।
न्यस्येच्च तारस्थितषड्ज एव तन्मध्यमस्थायिनमामनामः ॥ ९६६ ॥

---

— ॥ मध्यस्थायी ॥ —

आरभ्य मध्यस्थितमध्यमात्तु ये षट् स्वरास्तारगमध्यमान्ताः ।
प्रत्येकमेकैकतानमेषां स्वपूर्वपूर्वस्वरयोजनेन ॥ ९६७ ॥
तथोत्तरेषामपि वर्जनेन त्वारोहणेनाप्यवरोहणेन ।
द्व्यष्टौ च तानान् क्रमशोऽथ गीत्वा न्यस्येच्च मध्यस्थितमध्यमेऽस्मिन् ॥ ९६८ ॥

---

— ॥ रिषभस्थायी ॥ —

अथर्षभस्थायिनमामनामो मध्यर्षभोपक्रमतस्तथैव ।
ये ते स्वरास्तारगतर्षभान्ताः प्रत्येकमेकैकतानमेषाम् ॥ ९६९ ॥

स्वपूर्वपूर्वस्वरयोजनेन पूर्वोक्तरीत्या तु यथाक्रमेण ।
अथोत्तरेषामपि वर्जनेन चारोहणेनाप्यवरोहणेन ॥ ९७० ॥
द्व्यष्टौ च तानान् क्रमशोऽथ गीत्वा न्यस्येच्च मध्यर्षभकस्वरेऽस्मिन् ।

---

— ॥ षड्जस्थायी ॥ —

स्थाय्युच्यते मध्यमषड्जकस्य त्वारभ्य मध्यस्थितषड्जकं तम् ॥ ९७१ ॥
येऽष्ट स्वरास्तारगतर्षभान्ताः प्रत्येकमेकैककतानमेषाम् ।
स्वपूर्वपूर्वस्वरयोजनेन तथोत्तरेषामपि वर्जनेन ॥ ९७२ ॥
आरोहणेनाप्यवरोहणेन द्व्यष्टौ च तानान् क्रमशोऽथ गीत्वा ।
न्यस्येच्च मध्यस्थितषड्ज एव ततः परं वर्तनिकां च वक्ष्ये ॥ ९७३ ॥

---

— ॥ वर्तनी ॥ —

आरभ्य मध्यस्थितषड्जमादौ तथैव तारस्थनिषादकान्तम् ।
गीत्वा च तानान् कतिचिद्यथेच्छं न्यस्येच्च मध्यस्थितषड्ज एव ॥ ९७४ ॥

---

— ॥ न्यासः ॥ —

न्यासं तु रागस्य वदामि तारषड्जं समारभ्य ततोऽवरुह्य ।
मध्यर्षभान्तं त्ववरुह्य पश्चात्तानान् विचित्रान् कतिचिच्च गीत्वा ॥ ९७५ ॥
न्यस्येच्च तारस्थितषड्ज एव गेया च यामे दिवसस्य तुर्ये ।
निरूपितो भैरविकाख्यरागो मयाऽऽञ्जनेयस्य मतानुरोधात् ॥ ९७६ ॥

---

(२८) ॥ —अथ जयन्तसेनारागः ॥ —

जयन्तसेनाह्वयरागमेतं वक्ष्यामि मेलेन समं विशेषात् ।
स भैरवीमेलक एव मेलः स्यान्मध्यमो न्यास इह ग्रहोंऽशः ॥ ९७७ ॥
स षाडवश्चर्षभवर्जनेन ह्याक्षिप्तिकां तस्य निरूपयामः ।

---

— ॥ आक्षिप्तिका ॥ —

आरभ्य तारस्थितषड्जमादावा मध्यषड्जादवरुह्य पश्चात् ॥ ९७८ ॥
आरुह्य तारस्थितषड्जकान्तं तानान् विचित्रान् कतिचिच्च गीत्वा ।
न्यस्येच्च तारस्थितषड्ज एव तद्रागवर्धन्यभिधीयतेऽथ ॥ ९७९ ॥

---

प्रारभ्य मध्यस्थनिषादमादावारुह्य चातारनिषादमस्मात् ।
मध्यस्थषड्जावधि चावरुह्य तानान् विचित्रान् कतिचित् प्रगाय ॥ ९८० ॥
न्यस्येत् पुनर्मध्यगषड्ज एव तस्या विदारीं तदनु ब्रवीमि ।

---

— ॥ विदारी ॥ —

आरभ्य तारस्थितषड्जमादावामध्यगांधारमतोऽवरुह्य ॥ ९८१ ॥
आरुह्य तारस्थितमध्यमान्तं तानान् विचित्रान् कतिचित् प्रगाय ।
न्यस्येच्च तारस्थितषड्ज एव तद्रागवर्धन्यभिधीयतेऽन्या ॥ ९८२ ॥

---

— ॥ रागवर्धनी ॥ —

आरभ्य तारस्थितषड्जमादावारुह्य चातारनिषादमस्मात् ।
मध्यस्थषड्जादवरुह्य तानान् गीत्वा त्यजेन्मध्यगते तु षड्जे ॥ ९८३ ॥

---

— ॥ विदारी ॥ —

अस्या विदारीमधुना प्रवक्ष्ये प्रक्रम्य मध्यस्थनिषादमादौ ।
आमध्यगांधारमतोऽवरुह्यारुह्यापि तारस्थितमध्यमान्तम् ॥ ९८४ ॥
प्रागाय तानान् कतिचित् प्रगल्भं न्यस्येच्च तारस्थितषड्ज एव ।

---

— ॥ षड्जस्थायी ॥ —

तारस्थषड्जस्य निरूप्यतेऽथ स्थायी समारभ्य तु तारषड्जम् ॥ ९८५ ॥
एते स्वरास्तारनिषादकान्ता विनर्षभं पञ्चमतश्च हीनम् ।
आरोहणेनाप्यवरोहणेन प्रत्येकमेकैकतानरीत्या ॥ ९८६ ॥
स्वपूर्वपूर्वस्वरयोजनात् स्वोत्तरोत्तरस्यापि विवर्जनेन ।
प्रगाय तेषां दश तानभेदान् मुञ्चेच्च किंचिद्दशि तारषड्जे ॥ ९८७ ॥

---

— ॥ मध्यमस्थायी ॥ —

स्थाय्युच्यते मध्यगमध्यमस्य प्रक्रम्य मध्यस्थितमध्यमं प्राक् ।
आरुह्य तारस्थितमध्यमान्तं षण्णां स्वराणां च पुरोक्तमार्गात् ॥ ९८८ ॥
— च द्वादश तानभेदान् न्यस्येच्च मध्यस्थितमध्यमेऽस्मिन् ।

॥ रघुनाथभूपविरचिता ॥

# ॥ सङ्गीतसुधा ॥

---

## — ॥ षड्जस्थायी ॥ —

मध्यस्थषड्जस्य निरूप्यतेऽथ स्थायी समारभ्य तु मध्यषड्जम् ॥ ९८९ ॥
तारस्थषड्जावधिकस्वरा ये तेषां च षण्णां प्रथमोक्तरीत्या ।
प्रगाय तु द्वादश तानभेदान् न्यस्येच्च मध्यस्थितषड्ज एव ॥ ९९० ॥

---

## — ॥ वर्तनी ॥ —

तद्वर्तनीं कीर्तयितुं प्रवर्ते प्रक्रम्य मध्यस्थितषड्जमादौ ।
आरुह्य तारस्थनिषादकान्तमा मध्यषड्जादवरुह्य पश्चात् ॥ ९९१ ॥
गीत्वा च तानान् कियतः क्रमेण मुञ्चेच्च मध्यस्थितषड्ज एव ।

---

## — ॥ न्यासः ॥ —

न्यासस्तु रागस्य निरुक्तपूर्वविदारिकेवापुनरुक्ति गेयः ॥ ९९२ ॥
जयन्तसेना रघुनाथभूमिपुरन्दरेणैव समुद्धृता च ।
सदा प्रगेया शुभदायिका स्याद्भक्तिप्रदा चाखिलगायकानाम् ॥ ९९३ ॥

---

## — ॥ (३०) अथ भिन्नषड्जरागः ॥ —

वक्ष्यामहे संप्रति भिन्नषड्जं मेलो भवेदस्य च भैरवीवत् ।
वक्ष्यामहे संप्रति लक्षणं तु न्यासो ग्रहोंऽशोऽत्र तथर्षभः स्यात् ॥ ९९४ ॥
संपूर्णतायुक्च तथैष रागस्त्वाक्षिप्तिकामस्य निरूपयामः ।

---

— ॥ आक्षिप्तिका ॥ —

मध्यस्थितान्मध्यमतोऽधिरोहेदातारगांधारमथावरोहेत् ॥ ९९५ ॥
क्रमेण मध्यस्थितपञ्चमान्तं गीत्वा च तानान् कतिचिद्यथेच्छम् ।
मुञ्चेच्च किंचिद्दशि तारषड्जे तद्रागवर्धन्यभिधीयतेऽथ ॥ ९९६ ॥

---

— ॥ रागवर्धनी ॥ —

गांधारतस्तारजुषोऽधिरोहेत् क्रमेण तारस्थितपञ्चमान्तम् ।
आ मध्यषड्जादवरुह्य पश्चात् प्रगाय तानान् कतिचित् प्रगल्भम् ॥ ९९७ ॥
अधो विजह्यादपि मध्यषड्जे तस्या विदारीं तदनु ब्रवीमि ।

---

— ॥ विदारी ॥ —

प्रक्रम्य तारस्थितषड्जमादावा मध्यगान्मध्यमतोऽवरोहेत् ॥ ९९८ ॥
आतारगांधारमथाधिरोहेदुद्गाय तानानुचितं यथेच्छम् ।
न्यस्येच्च तारस्थितषड्ज एव तद्रागवर्धन्यभिधीयतेऽन्या ॥ ९९९ ॥

---

— ॥ रागवर्धनी ॥ —

तारस्थितात् पञ्चमतोऽधिरोहेत् क्रमेण चातारनिषादमस्मात् ।
मध्यस्थषड्जावधि चावरुह्य तानांश्च नाना तदनु प्रगाय ॥ १००० ॥
षड्जे विमुञ्चेदथ मध्यभाजि विदारिकामस्य विवेचयामः ।

---

— ॥ विदारी ॥ —

आ मध्यगाद्धैवततोऽधिरोहेदातारगांधारमथावरुह्य ॥ १००१ ॥
क्रमेण मध्यस्थितमध्यमान्तं गीत्वा च तानान् कियतो विचित्रान् ।
जह्यात्तु तारस्थितषड्ज एव षड्जस्य च स्थायिनमीरयामः ॥ १००२ ॥

---

— ॥ षड्जस्थायी ॥ —

आरभ्य तारस्थितषड्जमत्र ये तु स्वरास्तारनिषादकान्ताः ।
आरोहणेनाप्यवरोहणेन प्रत्येकमेकैककतानरीत्या ॥ १००३ ॥

स्वपूर्वपूर्वस्वरयोजनात् स्वोत्तरोत्तरेषामपि वर्जनेन ।
प्रगाय तानांश्चतुरो दशापि मुञ्चेच्च तारस्थितषड्ज एव ॥ १००४ ॥

— ॥ पञ्चमस्थायी ॥ —

स्थाय्युच्यते संप्रति पञ्चमस्य प्रक्रम्य मध्यस्थितपञ्चमं प्राक् ।
येऽत्र स्वरास्तारगपञ्चमान्तास्तेषां स्वराणां दश षट् च गीत्वा ॥ १००५ ॥
तानान् यथापूर्वमिह क्रमेण मध्यस्थिते पञ्चम एव मुञ्चेत् ।

— ॥ ऋषभस्थायी ॥ —

अथर्षभस्थायिनमामनामो मध्यर्षभात्तारगतर्षभान्ताः ॥ १००६ ॥
येऽष्ट स्वराः पूर्ववदेव तेषां गीत्वा स्वराणां दश षट् च तानान् ।
मध्यर्षभेऽस्मिन् विजहातु मध्यषड्जस्य च स्थायिनमामनामः ॥ १००७ ॥

— ॥ षड्जस्थायी ॥ —

प्रक्रम्य मध्यस्थितषड्जमादौ येऽष्ट स्वरास्तारगषड्जकान्ताः ।
प्रगाय नाना दश षट् च तानान् प्राग्वत्त्यजेन्मध्यगषड्ज एव ॥ १००८ ॥

— ॥ वर्तनी ॥ —

अथोच्यते वर्तनिका तु मध्यषड्जं समारभ्य ततोऽधिरोहेत् ।
क्रमेण चातारनिषादमस्मादा मध्यड्जादवरुह्य पश्चात् ॥ १००९ ॥
गीत्वा च तानान् कतिचित् प्रगल्भं मुञ्चेच्च किंचेद्दशि मध्यषड्जे ।

— ॥ न्यासः ॥ —

न्यासस्तु रागस्य निरुक्तपूर्वविदारिकावत् पुनरुक्तरीत्या ॥ १०१० ॥
प्रगे प्रगेयत्वमुपैति सोऽयमितीरितः संप्रति भिन्नषड्जः ।

— ॥ (३१) अथ हिन्दोलवसन्तरागः ॥ —

रागं तु हिन्दोलवसन्तसंज्ञं निरूपयामो निपुणैर्वचोभिः ॥ १०११ ॥
स भैरवीमेलक एव मेलो न्यासो ग्रहोंऽशः पुनरस्य षड्जः ।

— ॥ आक्षिप्तिका ॥ —

आक्षिप्तिकां वच्म्यथ तारषड्जान्मध्यस्थषड्जावधि चावरुह्य ॥ १०१२ ॥
आतारमध्यं च ततोऽवरुह्य गायन् विचित्रानपि तानभेदान् ।
तारस्थिते षड्ज इह प्रजह्यात्तद्रागवर्धन्यभिधीयतेऽथ ॥ १०१३ ॥

---

— ॥ रागवर्धनी ॥ —

तारस्थितान्मध्यमतस्तु तारनिषादपर्यन्तमथाधिरुह्य ।
मध्यस्थषड्जान्तमथोऽवरुह्य प्रगाय तानानपि च प्रगल्भम् ॥ १०१४ ॥
मुञ्चेच्च मध्यस्थितषड्ज एव तद्रागवर्धन्यपि च द्वितीया ।

---

— ॥ विदारी ॥ —

समं विदार्या किल पूर्वरागविवर्धनीवत् कथिता प्रवीणैः ॥ १०१५ ॥

---

— ॥ षड्जस्थायी ॥ —

निरूप्यते संप्रति तारषड्जस्थायी समारभ्य तु तारषड्जम् ।
विनर्षभं तारनिषादकान्ता ये स्युः स्वराः षट् क्रमशस्तु तेषाम् ॥ १०१६ ॥
आरोहणेनाप्यवरोहणेन प्रत्येकमेकैकतानरीत्या ।
स्वपूर्वपूर्वस्वरयोजनात् स्वोत्तरोत्तरस्यापि विवर्जनेन ॥ १०१७ ॥
प्रगाय तु द्वादश तानभेदान् न्यस्येच्च तारस्थितषड्ज एव ।

---

— ॥ मध्यमस्थायी ॥ —

स्थाय्युच्यते मध्यगमध्यमस्य प्रारभ्य मध्यस्थितमध्यमाद्ये ॥ १०१८ ॥
सप्त स्वरास्तारगमध्यमान्ता विवर्जिता तारगतर्षभेण ।
चतुर्दशैषामधिगाय तानान् प्राग्वत्त्यजेन्मध्यगमध्यमेऽस्मिन् ॥ १०१९ ॥

---

— ॥ षड्जस्थायी ॥ —

संलक्ष्यते संप्रति मध्यषड्जस्थायी समारभ्य तु मध्यषड्जम् ।
तारस्थषड्जावधि ये स्वराः स्युरथर्षभात् सप्त पुरैव तेषाम् ॥ १०२० ॥
तानान् प्रगायंश्चतुरो दशापि मुञ्चेच्च मध्यस्थितषड्ज एव ।

---

— ॥ वर्तनी ॥ —

वदामि तद्वर्तनिकामिदानीमारभ्य मध्यस्थितमेव षड्जम् ॥ १०२१ ॥
उद्गाय तारस्थनिषादकान्तं तानांस्त्यजेन्मध्यगतेऽथ षड्जे ।

———

— ॥ न्यासः ॥ —

न्यासस्तु रागस्य निरुक्तपूर्वविदारिकेवापुनरुक्ति गेयः ॥ १०२२ ॥

———

— ॥ (३२) अथ हिन्दोलरागः ॥ —

हिन्दोलरागं प्रतिपादयामः स भैरवीमेलक एव मेलः ।
वक्ष्यामि लक्ष्यानुगुणं तु लक्ष्म न्यासो ग्रहोंऽशः पुनरस्य षड्जः ॥ १०२३ ॥
अतो विहायर्षभपञ्चमौ द्वौ स्वरौ भवेदौडुव इत्युदीतः ।

———

— ॥ आक्षिप्तिका ॥ —

आक्षिप्तिकां वच्म्यथ तारषड्जादा मध्यगांधारमिहावरुह्य ॥ १०२४ ॥
आरुह्य तारस्थितमध्यमान्तं तानान् प्रगायोज्झतु तारषड्जे ।

———

— ॥ रागवर्धनी ॥ —

अस्योच्यते संप्रति रागवर्धन्यारभ्य मध्यस्थनिषादमादौ ॥ १०२५ ॥
आरुह्य तारस्थनिषादकान्तमा मध्यषड्जादवरुह्य पश्चात् ।
गीत्वा च तानान् कतिचिद्यथेच्छं न्यस्येच्च मध्यस्थितषड्ज एव ॥ १०२६ ॥

———

— ॥ विदारी ॥ —

अस्या विदार्यामिह तारषड्जादा मध्यगांधारमथावरुह्य ।
आरुह्य तारस्थितमध्यमान्तं तानान् प्रगायोज्झतु तारषड्जे ॥ १०२७ ॥

———

— ॥ रागवर्धनी ॥ —

निरूप्यतेऽन्यापि च रागवर्धन्यारभ्य मध्यस्थितषड्जमादौ ।

आरुह्य चातारनिषादमस्मान्मध्यस्थषड्जावधि चावरोहेत् ॥ १०२८ ॥
प्रगाय तानान् कतिचित् प्रगल्भं मुञ्चेच्च किंचेदृशि मध्यषड्जे ।

— ॥ विदारी ॥ —

अस्या विदारीमथ लक्षयामः प्रक्रम्य तारर्षभमेव पूर्वम् ॥ १०२९ ॥
आमध्यगांधारमिहावरुह्यारोहेत्ततस्तारगमध्यमान्तम् ।
गीत्वा च तानान् कतिचिद्विचित्रान् मुञ्चेच्च तारस्थितषड्ज एव ॥ १०३० ॥

— ॥ षड्जस्थायी ॥ —

तारस्थषड्जस्य निरूप्यतेऽथ स्थायी समारभ्य तु तारषड्जम् ।
ये स्युः स्वरास्तारनिषादकान्ता विनर्षभेणापि च पञ्चमेन ॥ १०३१ ॥
आरोहणेनाप्यवरोहणेन प्रत्येकमेकैककतानरीत्या ।
तेषां प्रगायन् दश तानभेदान् मुञ्चेच्च तारस्थितषड्ज एव ॥ १०३२ ॥

— ॥ मध्यमस्थायी ॥ —

स्थाय्युच्यते मध्यगमध्यमस्य प्रक्रम्य मध्यस्थितमध्यमं प्राक् ।
आ तारगान्मध्यमतः स्वराणां प्रायो विनैवर्षभपञ्चमाभ्याम् ॥ १०३३ ॥
प्रगाय तु द्वादश तानभेदान् मुञ्चेच्च मध्यस्थितमध्यमेऽस्मिन् ।

— ॥ गांधारस्थायी ॥ —

गांधारकस्थाय्यथ तत्र मध्यगांधारमुख्यानपि षट् क्रमेण ॥ १०३४ ॥
आतारगांधारमपि स्वरांस्तु विवर्जितांश्चर्षभपञ्चमाभ्याम् ।
पुरेव चारोहणमेव रोहः प्रत्येकमेकैककतयैव तानान् ॥ १०३५ ॥
गीत्वा ततो द्वादश मध्यवर्तिगांधारनामस्वर एव जह्यात् ।

— ॥ षड्जस्थायी ॥ —

उदीर्यतेऽस्मिन्नथ मध्यषड्जस्थायी समारभ्य तु मध्यषड्जम् ॥ १०३६ ॥
तत्तारषड्जावधि पञ्चमेन विनर्षभेणापि भवन्ति ये षट् ।
स्वरास्तु तेषां प्रथमोक्तरीत्या रोहानुरोहद्वितयानुपूर्व्यात् ॥ १०३७ ॥

प्रत्येकमेकैकतयैव तानान् गीत्वा ततो द्वादश मध्यषड्जे ।

---

— ॥ वर्तनी ॥ —

जह्यात्ततो वर्तनिकोच्यतेऽत्र गांधारमारभ्य तु मध्यभाजम् ॥ १०३८ ॥
आरुह्य चा तारगतान्निषादादा मध्यषड्जादवरुह्य पश्चात् ।
तानान् प्रगायोज्झतु मध्यषड्जे रागस्य तु न्यास इहाभिधेयः ॥ १०३९ ॥

---

— ॥ न्यासः ॥ —

अयं च पूर्वोक्तविदारिकावद्धिनैव गेयः पुनरुक्तिदोषम् ।

---

— ॥ (३३) अथ भूपालरागः ॥ —

भूपालरागं प्रतिपादयामो मेलो भवेदस्य तु भैरवीवत् ॥ १०४० ॥
न्यासो ग्रहोंऽशः पुनरस्य षड्जः समध्यमेनापि निषादकेन ।
त्यक्तो भवेदौडुव एव रागस्त्वाक्षिप्तिकामस्य निरूपयामः ॥ १०४१ ॥

---

— ॥ आक्षिप्तिका ॥ —

गांधारतस्तारगतात् प्रभृत्यामध्यस्थगांधारमथोऽवरुह्य ।
आतारगांधारमथाधिरुह्य गीत्वा यथेच्छं कियतोऽपि तानान् ॥ १०४२ ॥
तारस्थषड्जे विसृजेच्च पश्चात्तद्रागवर्धन्यभिधीयतेऽस्याः ।

---

— ॥ रागवर्धनी ॥ —

गांधारतस्तारगतात् प्रभृत्यारोहन्नथो तारगधैवतान्तम् ॥ १०४३ ॥
आ मध्यषड्जादवरुह्य पश्चाद्गीत्वा च तानान् कियतो विचित्रान् ।
मध्यस्थषड्जेऽपि जहातु तस्या विदारिकामत्र वदामि यावत् ॥ १०४४ ॥

---

— ॥ विदारी ॥ —

तारस्थषड्जादवरुह्य मध्यगांधारपर्यन्तमथाधिरुह्य ।
आतारगांधारक एव कांश्चित्तानांश्च गीत्वोज्झति तारषड्जे ॥ १०४५ ॥

---

— ॥ रागवर्धनी ॥ —

अत्रोच्यतेऽन्यापि च रागवर्धन्यारभ्य तारस्थितधैवतं प्राक् ।
आ मध्यमाद्धैवततोऽधिरोहेदा चावरोहेदपि मध्यषड्जात् ॥ १०४६ ॥
कांश्चिच्च तानानभिगाय मध्यषड्जे विजह्यादथ तद्विदारीम् ।

---

— ॥ विदारी ॥ —

मध्यस्थितात् पञ्चमतोऽवरुह्य मध्यस्थगांधारमथाधिरुह्य ॥ १०४७ ॥
आतारगांधारमतोऽभिगाय तानान् विमुञ्चेदपि तारषड्जे ।

---

— ॥ षड्जस्थायी ॥ —

षड्जस्य तु स्थायिनमामनामस्तारस्थषड्जप्रमुखाः स्वरा ये ॥ १०४८ ॥
आ तारगाद्धैवततो निषादाद्विना च तेषामपि मध्यगानाम् ।
प्रत्येकमेकैकमिति क्रमेण तानान् दशारोहणतोऽवरोहेत् ॥ १०४९ ॥
गीत्वा ततो मुञ्चति तारषड्जेऽथ पञ्चमस्थायिनमामनामः ।

---

— ॥ पञ्चमस्थायी ॥ —

स्वरास्तु मध्यस्थितपञ्चमाद्या ये सन्ति तारस्थितपञ्चमान्ताः ॥ १०५० ॥
विना निषादेन च मध्यमेन षण्णाममीषां पुनरेक एषः ।
प्रत्येकमित्येवमनुक्रमेण गीत्वा ततो द्वादश तानभेदान् ॥ १०५१ ॥
मध्यस्थिते मुञ्चति पञ्चमे च स्थायी त्वयं मध्यगषड्जभागी ।

---

— ॥ षड्जस्थायी ॥ —

षड्जस्वरान्मध्यगतात् प्रभृत्या तारस्थषड्जादपि षट् स्वरा ये ॥ १०५२ ॥
विना निषादेन च मध्यमेन प्रत्येकमेषां पुनरेक एषः ।
इति क्रमाद्द्वादश तानभेदान् पुरेव गीत्वोज्झति मध्यषड्जे ॥ १०५३ ॥

---

— ॥ वर्तनी ॥ —

तद्वर्तनीं कीर्तयितुं प्रवर्ते मध्यस्थषड्जादधिरुह्य तानान् ।
आ धैवतादेवमथाधिरुह्य मध्यस्थषड्जावधि तानभेदान् ॥ १०५४ ॥
उद्गाय कानप्यथ मध्यषड्जे न्यस्येच्च रागस्य भवेदयं तु ।

---

— ॥ न्यासः ॥ —

न्यासः पुरा प्रोक्तविदारिकेव विनैव गेयः पुनरुक्तिवर्जम् ॥ १०५५ ॥
प्रातस्तरामेव तु गीयमानः श्रेयस्करः श्रोतृजनस्य रागः ।

---

(३४) — ॥ अथ शंकराभरणरागः ॥ —

संलक्ष्यते संप्रति शंकराभरणाख्यरागः क्रमतः समेलम् ॥ १०५६ ॥
पञ्चश्रुतिश्चर्षभधैवतौ गांधारोऽन्तरः काकलिको निषादः ।
षड्जः शुचिर्मध्यमपञ्चमाभ्यां स शंकराद्याभरणस्य मेलः ॥ १०५७ ॥
न्यासो ग्रहोंऽशः पुनरत्र षड्जः संपूर्णरागः कथितः प्रवीणैः ।

---

— ॥ आक्षिप्तिका ॥ —

आक्षिप्तिकामस्य निरूपयामः प्रारभ्य मध्यस्थितमध्यमं प्राक् ॥ १०५८ ॥
मध्यर्षभान्तं त्ववरुह्य तस्मादारुह्य तारस्थितमध्यमान्तम् ।
गीत्वा च तानान् कतिचिद्विचित्रान् न्यस्येच्च तारस्थितषड्ज एव ॥ १०५९ ॥

---

— ॥ रागवर्धनी ॥ —

तद्रागवर्धन्यभिधीयतेऽत्र तारर्षभं प्रक्रममाण आदौ ।
आरुह्य तारस्थितधैवतान्तं मध्यस्थषड्जान्तमथोऽवरुह्य ॥ १०६० ॥
गीत्वा च तानान् कतिचिद्विचित्रान् न्यस्येच्च तारस्थितषड्ज एव ।

---

— ॥ विदारी ॥ —

तस्या विदारीमथ वर्णयामो यथाक्रमं गायकबोधहेतोः ॥ १०६१ ॥
आरभ्य तारस्थनिषादमादौ मध्यर्षभान्तं त्ववरुह्य तस्मात् ।
आरुह्य मध्यस्थितमध्यमान्तं गीत्वा तु तानान् कतिचिद्विजह्यात् ॥ १०६२ ॥
तारस्थषड्जेऽथ निरूप्यतेऽन्या तद्रागवर्धन्यधुनानुपूर्व्या ।

---

— ॥ रागवर्धनी ॥ —

आरभ्य तारस्थितपञ्चमान्तमारुह्य तारस्थितधैवतान्तम् ॥ १०६३ ॥
आ मध्यषड्जादवरुह्य कांश्चित्तानांश्च गीत्वोज्झतु मध्यषड्जे ।

---

— ॥ विदारी ॥ —

अस्या विदार्यामथ तारषड्ज आरभ्य मध्यग्रभवर्षभान्तम् ॥ १०६४ ॥
इहावरुह्याप्यधिरुह्य तारभूमध्यमान्तं परिगाय तानान् ।
कांश्चित्त्यजेत्तारगषड्ज एव स्थाय्युच्यते तारगषड्जकस्य ॥ १०६५ ॥

---

— ॥ षड्जस्थायी ॥ —

आरभ्य तारस्थितषड्जमादौ येऽष्ट स्वरास्तारगधैवतान्ताः ।
प्रत्येकमेकैककतानरीत्या गीत्वा पुनर्द्वादश तत्र तानान् ॥ १०६६ ॥
न्यस्येच्च तारस्थितषड्ज एव तत्पञ्चमस्थायिनमामनामः ।

---

— ॥ पञ्चमस्थायी ॥ —

मध्यस्थितात् पञ्चमतो निषादहीनास्तु ये तारगपञ्चमान्ताः ॥ १०६७ ॥
तेषां स्वराणां हि पुरोक्तरीत्या प्रगाय तानांश्चतुरो दशापि ।
न्यस्येच्च मध्यस्थितपञ्चमेऽस्मिन् मध्यर्षभस्थाय्यथ वर्ण्यतेऽस्य ॥ १०६८ ॥

---

— ॥ रिषभस्थायी ॥ —

मध्यर्षभात्तारगतर्षभान्ता ये तु स्वरा मध्यनिषादहीनाः ।
चतुर्दशैषामभिगाय तानान् प्राग्वत्त्यजेन्मध्यगतर्षभेऽस्मिन् ॥ १०६९ ॥

---

— ॥ षड्जस्थायी ॥ —

मध्यस्थषड्जस्य निरूप्यतेऽथ स्थायी समारभ्य तु मध्यषड्जम् ।
तारस्थषड्जावधि ये निषादहीनाः स्वराः सप्त पुरेव तेषाम् ॥ १०७० ॥
तानान् प्रगायन् नव पञ्च किं च मुञ्चेच्च मध्यस्थितषड्ज एव ।

---

— ॥ वर्तनी ॥ —

अथोच्यते वर्तनिकास्य मध्यषड्जात् क्रमात्तारगधैवतान्तम् ॥ १०७१ ॥
आरुह्य पश्चादवरुह्य पश्चान्मध्यस्थषड्जावधि च क्रमेण ।
गीत्वा च तानान् कतिचिद्विचित्रान् न्यस्येच्च मध्यस्थितषड्ज एव ॥ १०७२ ॥

---

— ॥ न्यासः ॥ —

न्यासस्तु रागस्य निरुक्तपूर्वविदारिकैवापुनरुक्ति गेयः ।
दिनस्य यामे चरमे तु गाने श्रेयस्करः श्रोतृजनस्य सोऽयम् ॥ १०७३ ॥

— ॥ (३५) अथ आरभीरागः ॥ —

अथारभीरागमुदीरयामः स शंकराद्याभरणस्य मेलः ।
मेलो भवेदस्य च लक्षणं तु न्यासो ग्रहोंऽशायितषड्ज एषः ॥ १०७४ ॥
संपूर्णभावं भजते च सोऽयमाक्षिप्तिकामस्य ततो वदामः ।

— ॥ आक्षिप्तिका ॥ —

आरभ्य तारस्थितषड्जमेवा मध्यस्फुरन्मध्यमतोऽवरुह्य ॥ १०७५ ॥
आरुह्य तारस्थितमध्यमान्तं प्रगाय तानान् कतिचिद्यथेच्छम् ।
न्यस्येच्च तारस्थितषड्ज एव तद्रागवर्धन्यभिधीयतेऽथ ॥ १०७६ ॥

— ॥ रागवर्धनी ॥ —

तारस्थितान्मध्यमतोऽधिरुह्या तारस्फुरद्धैवततोऽवरोहेत् ।
मध्यस्थषड्जावधि तानभेदान् गीत्वा त्यजेन्मध्यगषड्ज एव ॥ १०७७ ॥

— ॥ विदारी ॥ —

विविच्यते लक्षणतो विदारी प्रक्रम्य मध्यस्थितमध्यमं प्राक् ।
मध्यर्षभान्तं त्ववरुह्य तस्मादारुह्य तारस्थितमध्यमान्तम् ॥ १०७८ ॥
गीत्वा च तानान् कतिचिद्विचित्रान् मुञ्चेच्च किंचेदृशि तारषड्जे ।

— ॥ रागवर्धनी ॥ —

तद्रागवर्धन्यभिधीयतेऽन्या तारर्षभात्तारगधैवतान्तम् ॥ १०७९ ॥
आरुह्य तस्मादवरुह्य मध्यषड्जान्तमुद्गाय च तानभेदान् ।
मध्यस्थषड्जे तदनु प्रजह्यादस्या विदारीमथ लक्षयामः ॥ १०८० ॥

— ॥ विदारी ॥ —

आरभ्य तारस्थितषड्जमा च मध्यस्फुरन्मध्यमतोऽवरुह्य ।
आरभ्य चातारगमध्यमस्मात्तानान् प्रगायोज्झतु तारषड्जे ॥ १०८१ ॥

— ॥ तारषड्जस्थायी ॥ —

निरूप्यते संप्रति तारषड्जस्थायी समारभ्य तु तारषड्जम् ।
तारस्फुरद्धैवतकान्तमत्र गांधारहीनाः क्रमशः स्वरा ये ॥ १०८२ ॥
आरोहणेनाप्यवरोहणेन प्रत्येकमेकैककतानरीत्या ।
स्वपूर्वपूर्वस्वरयोजनात् स्वोत्तरोत्तरस्यापि विवर्जनेन ॥ १०८३ ॥
तेषां पुनर्द्वादश तानभेदान् पूर्वोक्तरीत्या चतुरः प्रगाय ।
मुञ्चेच्च मध्यस्थितपञ्चमेऽस्मिन् स्थाय्युच्यते मध्यगषड्जकस्य ॥ १०८४ ॥

---

— ॥ मध्यषड्जस्थायी ॥ —

प्रक्रम्य मध्यस्थितषड्जमत्र तारस्थषड्जावधिकाः स्वरा ये ।
निषादगांधारविवर्जिताः स्युस्तेषां पुनर्द्वादश तानभेदान् ॥ १०८५ ॥
पूर्वोक्तरीत्या निपुणं प्रगाय मुञ्चेच्च किं चेद्दशि मध्यषड्जे ।

---

— ॥ वर्तनी ॥ —

अतः परं वर्तनिकां वदामः प्रारभ्य मध्यस्थितषड्जमादौ ॥ १०८६ ॥
आरुह्य तारस्थितधैवतान्तं मध्यस्थषड्जान्तमतोऽवरोहेन ।
गीत्वा च तानान् कतिचित् प्रगल्भं न्यस्येच्च मध्यस्थितषड्ज एव ॥ १०८७ ॥

---

— ॥ न्यासः ॥ —

न्यासस्तु रागस्य निरुक्तपूर्वविदारिकेवा पुनरुक्ति गेयः ।

---

— ॥ (३६) अथ पूर्वगौलरागः ॥ —

स पूर्वगौळः प्रतिपाद्यतेऽस्य स्याच्छंकराद्याभरणस्य मेलः ॥ १०८८ ॥
न्यासो ग्रहोंऽशश्च भवेन्निषादः संपूर्णभावं भजते च सोऽयम् ।

---

— ॥ आक्षिप्तिका ॥ —

आक्षिप्तिका संप्रति पूर्वगौलस्यालक्ष्यते मध्यनिषादतोऽथ ॥ १०८९ ॥
आमध्यगांधारमतोऽवरुह्यारोहेच्च तारस्थितमध्यगान्तम् ।
इच्छानुरोधादभिगाय तानान् मध्यस्थषड्जे विसृजेच्च पश्चात् ॥ १०९० ॥

---

— ॥ रागवर्धनी ॥ —

आलक्ष्यते चास्य हि रागवर्धन्यारुह्य चातारगपञ्चमान्तम् ।
आ तारगाच्चैव ततोऽधिरोहेदा मध्यषड्जादथ चावरोहेत् ॥ १०९१ ॥
गायेच्च तानान् कतिचिद्विचित्रान् मुञ्चेत्ततो मध्यगते तु षड्जे ।

— ॥ विदारी ॥ —

अस्या विदारी त्ववरुह्य षड्जादारभ्य मध्यस्थितमध्यमान्तम् ॥ १०९२ ॥
आ तारगान्मध्यमतोऽधिरोहेद्गीत्वा च तानान् कतिचिद्विचित्रान् ।
ततो विजह्यादपि तारषड्जे तस्या विदारी निपुणं निरुक्ता ॥ १०९३ ॥

— ॥ रागवर्धनी ॥ —

अथोच्यतेऽन्यापि च रागवर्धन्यारभ्य तारस्थितपञ्चमात्तु ।
आद्येव गेयापुनरुक्ति चास्या विदारिका चापि भवेत् पुरेव ॥ १०९४ ॥

— ॥ षड्जस्थायी ॥ —

स्थाय्येष षड्जस्य तु तारषड्जमारभ्य तारस्थितधैवतान्तम् ।
आरोहणेनाप्यवरोहणेन षण्णां स्वराणां पुनरेकमेकम् ॥ १०९५ ॥
प्रत्येकमेषां क्रमतोऽथ तानान् विचित्रितान् द्वादश तान् प्रगाय ।
ततस्त्यजेत्तारगते तु षड्जे स्थाय्युच्यते संप्रति पञ्चमस्य ॥ १०९६ ॥

— ॥ पञ्चमस्थायी ॥ —

प्रारभ्य मध्यस्थितपञ्चमं प्रागा तारगात् पञ्चमतः क्रमेण ।
निषादवर्जं निखिलस्वराणामारोहणेनाप्यवरोहणेन ॥ १०९७ ॥
प्रत्येकमेकैकतानगानात्तानान् प्रगायाथ चतुर्दशैव ।
मध्यस्थिते पञ्चम एव मुञ्चेत् स्थाय्युच्यते संप्रति मध्यषड्जा ॥ १०९८ ॥

— ॥ षड्जस्थायी ॥ —

आरभ्य तारस्थितषड्जमादावा तारषड्जाच्च निषादवर्जम् ।
तानान् पुनः सप्तसु च स्वरेषु प्रत्येकमेकैकमिति क्रमेण ॥ १०९९ ॥
गीत्वा पुनर्द्वादश तानभेदान् मुञ्चेच्च किंचेद्दशि मध्यषड्जे ।

— ॥ वर्तनिका ॥ —

प्रकीर्त्यते वर्तनिकास्य मध्यषड्जं समारभ्य ततो निषादात् ॥ ११०० ॥
आ तारगादप्यधिरुह्य पश्चान्मध्यस्थषड्जावधि चावरुह्य ।
तानान् विचित्रान् कतिचित् प्रगाय मध्यस्थषड्जे विसृजेच्च पश्चात् ॥ ११०१ ॥

— ॥ न्यासः ॥ —

न्यासस्तु रागस्य निरुक्तपूर्वविदारिकेवापुनरुक्ति गेयः ।
अयं च सायाह्नि गीयमानः श्रेयस्करः श्रोतृजनस्य नित्यम् ॥ ११०२ ॥

— ॥ (३७) अथ नारायणीरागः ॥ —

नारायणीरागमथाभिधास्ये स शंकराद्याभरणस्य मेलः ।
मेलो भवेदस्य च लक्षणं तु गांधारको न्यास इह ग्रहोंऽशः ॥ ११०३ ॥
संपूर्णभावं भजते च सोऽयमाक्षिप्तिकामस्य निरूपयामः ।

— ॥ आक्षिप्तिका ॥ —

तारस्थषड्जादवरुह्य मध्यगतर्षभान्तं च ततोऽधिरुह्य ॥ ११०४ ॥
आ तारगान्मध्यमतो विचित्रान् प्रगाय तानान् कतिचित् प्रगल्भम् ।
न्यस्येच्च तारस्थितषड्ज एव तद्रागवर्धन्यभिधीयतेऽस्या ॥ ११०५ ॥

— ॥ रागवर्धनी ॥ —

मध्यस्थिताद्धैवततोऽधिरुह्य क्रमेण चा तारगतान्निषादात् ।
आ मध्यषड्जादवरुह्य पश्चात्तानांश्च नाना तदनु प्रगाय ॥ ११०६ ॥
षड्जस्वरे मध्यगते विजह्यादस्या विदारीमधुनाभिधास्ये ।

— ॥ विदारी ॥ —

तारस्थषड्जादवरुह्य मध्यस्थितर्षभान्तं च ततोऽधिरुह्य ॥ ११०७ ॥
•आ तारगान्मध्यमतः प्रगाय मुञ्चेत्तथा तारगषड्ज एव ।

— ॥ रागवर्धनी ॥ —

अथ द्वितीयापि च रागवर्धन्यारभ्य तारस्थितमध्यमं प्राक् ॥ ११०८ ॥

आरुह्य चा तारगतान्निषादा दामध्यषड्जादवरुह्य पश्चात् ।
तानाननेकांस्तदनु प्रगाय षड्जस्वरे मध्यगते विमुञ्चेत् ॥ ११०९ ॥

---

— ॥ विदारी ॥ —

अस्या विदार्याद्यविदारिकावदनुक्रमेणापुनरुक्ति गेया ।

---

— ॥ षड्जस्थायी ॥ —

षड्जस्य तु स्थायिनमीरयामः प्रारभ्य तारस्थितषड्जमादौ ॥ १११० ॥
स्वरा यदा तारगतान्निषादाद्गान्धारतानं तु विहाय तेषाम् ।
षण्णां स्वराणामपि चैकमेकं प्रत्येकमुद्गाय तथैव तानम् ॥ ११११ ॥
स्वपूर्वपूर्वस्वरयोजनात् स्वोत्तरोत्तरस्यापि विवर्जनाच्च ।
आरोहणेनाप्यवरोहणेन गायन्निति द्वादश तानभेदान् ॥ १११२ ॥
तारस्थषड्जस्वर एव मुञ्चेत् स्थाय्युच्यते संप्रति पञ्चमस्य ।

---

— ॥ पञ्चमस्थायी ॥ —

मध्यस्थितात् पञ्चमतः प्रभृत्या तारस्थितात् पञ्चमतः स्वरा ये ॥ १११३ ॥
गांधारमेकं प्रविहाय सप्त तेषामिहारोहणतोऽवरोहात् ।
चतुर्दशोद्गाय तथैव तानान् मुञ्चेच्च मध्यस्थितपञ्चमे च ॥ १११४ ॥

---

— ॥ रिषभस्थायी ॥ —

मध्यर्षभस्थाय्यभिधीयतेऽथ प्रक्रम्य मध्यादृषभात् स्वरा ये ।
तारर्षभान्ताः पुनरन्तरेण गांधारमेषां पुनरुक्तरीत्या ॥ १११५ ॥
प्रत्येकमेकैक इति क्रमादारोहावरोहद्वितयस्य तानान् ।
चतुर्दशोद्गाय तथैव मध्यस्थिते विमुञ्चेदृषभे स्वरेऽस्मात् ॥ १११६ ॥

---

— ॥ षड्जस्थायी ॥ —

उद्गीयते संप्रति मध्यषड्जस्थायी समारभ्य तु मध्यषड्जम् ।
आ तारषड्जादपहाय चैकं गांधारकं सप्तसु च स्वरेषु ॥ १११७ ॥
पुरेव चारोहणतोऽवरोहाच्चतुर्दशोद्गाय तथैव तानान् ।

---

— ॥ वर्तनी ॥ —

मध्यस्थिते मुञ्चति षड्ज एवाथो वर्तनी मध्यगतात्तु षड्जात् ॥ १११८ ॥
आरुह्य चा तारगतान्निषादादा मध्यषड्जादवरुह्य पश्चात् ।
गीत्वा च तानान् कतिचिद्विचित्रान् मध्यस्थिते मुञ्चति षड्ज एव ॥ १११९ ॥

— ॥ न्यासः ॥ —

न्यासस्तु रागस्य निरुक्तपूर्वविदारिकेवापुनरुक्ति गेयः ।

— ॥ (३८) अथ नारायणदेशाक्षिरागः ॥ —

नारायणाद्यं प्रतिपादयामो देशाक्षिराग तममुष्य मेलः ॥ ११२० ॥
स शङ्कराद्याभरणस्य मेलो लक्ष्मास्य सम्यक् प्रतिपादयामः ।
गांधारको न्यास इह ग्रहोंऽशोऽसंपूर्णतां मुञ्चति किं च सोऽयम् ॥ ११२१ ॥

— ॥ आक्षिप्तिका ॥ —

आक्षिप्तिकैषास्य तु तारषड्जादारुह्य तारस्थितमध्यमान्तम् ।
आ मध्यमात् पञ्चमतोऽवरोहेद्गीत्वा च तानान् कियतो यथेच्छम् ॥ ११२२ ॥
त्यजेच्च तारस्थितषड्ज एव तद्रागवर्धन्यभिधीयतेऽथ ।

— ॥ रागवर्धनी ॥ —

तारस्थितान्मध्यमतोऽवरोहेदा मध्यमाद्धैवततोऽप्यमुष्मात् ॥ ११२३ ॥
आरुह्य चातारगधैवतान्तमुद्गाय तानानुचितं यथेच्छम् ।
न्यस्येच्च मध्यस्थितषड्ज एव तस्या विदारीं प्रतिपादयामः ॥ ११२४ ॥

— ॥ विदारी ॥ —

प्रक्रम्य मध्यस्थितपञ्चमं प्रागा तारषड्जादधिरुह्य पश्चात् ।
आतारगान्मध्यमतोऽवरुह्य गीत्वाथ नानाविधतानभेदान् ॥ ११२५ ॥
मुञ्चेच्च तारस्थितषड्ज एव तद्रागवर्धन्यपि तद्विदारी ।
गेये पुनः पूर्ववदेव तेऽद्य षड्जस्य च स्थायिनमामनामः ॥ ११२६ ॥

— ॥ षड्जस्थायी ॥ —

आरभ्य पश्चादपि तारषड्जं ये षट् स्वरास्तारनिषादकान्ताः ।
तेषामगांधारकतानकं स्वोत्तरोत्तरेषामपि वर्जनेन ॥ ११२७ ॥
स्वपूर्वपूर्वस्वरमेलनेन प्रत्येकमेकैककतानरीत्या ।
आरोहणेनाप्यवरोहणेन गीत्वा पुनर्द्वादश तानभेदान् ॥ ११२८ ॥
ततस्त्यजेत्तारगषड्ज एव तं पञ्चमस्थायिनमामनामः ।

— ॥ पञ्चमस्थायी ॥ —

प्रक्रम्य मध्यस्थितपञ्चमं प्रागा तारगात् पञ्चमतः स्वरा ये ॥ ११२९ ॥
प्राग्वत्तु तानांश्चतुरो दशैषां गीत्वा त्यजेन्मध्यगपञ्चमेऽस्मिन् ।

— ॥ मध्यमस्थायी ॥ —

अथोच्यते मध्यगमध्यमस्य स्थायी ततो मध्यगमध्यमात्तु ॥ ११३० ॥
यत्र स्वरास्तारगमध्यमान्तास्तेषां पुरेवात्र चतुर्दशापि ।
उद्गाय तानान् कतिचिद्विचित्रान् मुञ्चेच्च मध्यस्थितमध्यमेऽथ ॥ ११३१ ॥

— ॥ षड्जस्थायी ॥ —

स्थाय्युच्यते मध्यगषड्जकस्य प्रारभ्य मध्यस्थितषड्जमादौ ।
आ तारषड्जादिह ये स्वराः स्युस्तेषां पुरेवात्र चतुर्दशैव ॥ ११३२ ॥
प्रगाय तानान् कतिचित् प्रगल्भं मुञ्चेच्च किंचेद्दशि मध्यषड्जे ।

— ॥ वर्तनी ॥ —

अथोच्यते वर्तनिकास्य मध्यषड्जात् किलातारनिषादकान्तम् ॥ ११३३ ॥
आरुह्य तस्मादवरुह्य पश्चादा मध्यषड्जात् कतिचिच्च तानान् ।
प्रगाय मुञ्चेदथ मध्यषड्जे न्यासस्तु रागस्य विदारिकेव ॥ ११३४ ॥

— ॥ न्यासः ॥ —

पौनःपुनीवर्जितया प्रगे तु प्रगेयतां मुञ्चति किं च सोऽयम् ।

— (३९) ॥ अथ आहरीरागः ॥ —

अथाहरीरागमुदीरयामः षड्जस्तथा मध्यमपञ्चमौ च ॥ ११३५ ॥

स धैवतश्चेति भवन्ति शुद्धाः पञ्चश्रुतिः स्यादृषभो निषादः ।
काकल्यभिख्यः कथितोऽत्र साधारणश्च गांधार इह प्रतीतः ॥ ११३६ ॥
अथाहरीलक्षणमीरयामः षड्जो ग्रहो न्यास इहांशकश्च ।
स एव वादी स तु पञ्चमः संवादी विवादी तु निषादनामा ॥ ११३७ ॥
गांधारकेण त्वनुवादिनौ तु स्यातां तथैवर्षभधैवतौ द्वौ ।

---

— ॥ आक्षिप्तिका ॥ —

आक्षिप्तिकामप्यभिदध्महेऽस्याः प्रारभ्य मध्यस्थितपञ्चमं प्राक् ॥ ११३८ ॥
आमध्यगांधारमतोऽवरुह्यारोहेत् क्रमात्तारगमध्यमान्तम् ।
तानांश्च नाना तदनु प्रगाय न्यस्येच्च तारस्थितषड्ज एव ॥ ११३९ ॥

---

— ॥ रागवर्धनी ॥ —

सा रागवर्धन्यभिधीयतेऽस्य प्रारभ्य मध्यस्थितपञ्चमं च ।
आरुह्य चातारनिषादमादौ मध्यस्थषड्जावधि चावरुह्य ॥ ११४० ॥
गीत्वा च तानान् कतिचिद्विचित्रान् न्यस्येच्च मध्यस्थित षड्ज एव ।

---

— ॥ विदारी ॥ —

अस्या विदारीमथ वर्णयामः षड्जं समारभ्य तु मध्यभाजम् ॥ ११४१ ॥
आ तारमध्यात् कतिचिच्च तानान् गीत्वा विजह्यादथ तारषड्जे ।

---

— ॥ रागवर्धनी ॥ —

अथोच्यतेऽन्यापि च रागवर्धन्यारभ्य तारस्थितमध्यमं प्राक् ॥ ११४२ ॥
आरुह्य चातारनिषादमस्मादामध्यषड्जं त्ववरोहणं स्यात् ।
प्रगाय नाना कतिचिच्च तानान् न्यस्येच्च मध्यस्थितषड्ज एव ॥ ११४३ ॥
अस्या विदारी प्रथमेव तारषड्जस्वरस्थायिनमत्र वक्ष्ये ।

---

— ॥ षड्जस्थायी ॥ —

तारस्थषड्जात् प्रभृतीह सप्त स्वराः क्रमात्तारनिषादकान्ताः ॥ ११४४ ॥
प्रत्येकमेकैककतानमेषां स्वपूर्वपूर्वस्वरयोजनेन ।
तथोत्तरेषामपि वर्जनेन चारोहणेनाप्यवरोहणेन ॥ ११४५ ॥
गीत्वा च तानांश्च चतुर्दशापि न्यस्येच्च तारस्थितषड्ज एव ।

---

— ॥ पञ्चमस्थायी ॥ —

तं पञ्चमस्थायिनमामनामः प्रारभ्य मध्यस्थितपञ्चमं तु ॥ ११४६ ॥
अष्टौ स्वरास्तारगपञ्चमान्ताः प्रत्येकमेकैककतानमेषाम् ।
स्वपूर्वपूर्वस्वरयोजनेन तथोत्तरेषामपि वर्जनेन ॥ ११४७ ॥
आरोहणेनाप्यवरोहणेन त्वष्टौ च तानान् पुनरत्र गीत्वा ।
न्यस्येच्च मध्यस्थितमध्यमेऽस्मिन् स्थाय्येष मध्यस्थितपञ्चमस्य ॥ ११४८ ॥

---

— ॥ षड्जस्थायी ॥ —

निरूप्यते संप्रति मध्यषड्जस्थायी समारभ्य तु मध्यषड्जम् ।
तारस्थषड्जावधि ये स्वराः स्युः प्रत्येकमेकैककतानमेषाम् ॥ ११४९ ॥
स्वपूर्वपूर्वस्वरयोजनेन तथोत्तरेषामपि वर्जनेन ।
आरोहणेनाप्यवरोहणेन त्वष्टौ च तानान् क्रमशोऽथ गीत्वा ॥ ११५० ॥
न्यस्येच्च मध्यस्थितषड्ज एव वक्ष्यामहे वर्तनिकां क्रमेण ।

---

— ॥ वर्तनीका ॥ —

आरभ्य मध्यस्थितषड्जमादौ तानानिहातारनिषादमत्र ॥ ११५१ ॥
गीत्वा पुनस्तारगषड्ज एव न्यस्येच्च सैषा किल वर्तनी स्यात् ।

---

— ॥ न्यासः ॥ —

न्यासस्तु रागस्य पुरोक्तरागवर्धन्यपन्यासवदेव वेद्यः ॥ ११५२ ॥
उक्तोऽयमाहर्यभिधस्तु रागः साङ्गोऽञ्जनानन्दनतन्त्ररीत्या ।

---

— (४०) ॥ अथ आभेरीरागः ॥ —

आभेरिकाख्यामथ लक्षयामः स्यादाहरीमेलक एव मेलः ॥ ११५३ ॥
तल्लक्षणं च प्रतिपादयामो न्यासो ग्रहोंऽशोऽपि च षड्ज एव ।
संपूर्णरागत्वमपि प्रपन्नस्त्वाक्षिप्तिकासस्य निरूपयामः ॥ ११५४ ॥

---

— ॥ आक्षिप्तिका ॥ —

प्रक्रम्य तारस्थितषड्जमादावामध्यगांधारमतोऽवरुह्य ।
आतारगांधारमथाधिरुह्य प्रगाय तानान् कतिचित् प्रगल्भम् ॥ ११५५ ॥
न्यस्येच्च तारस्थितषड्ज एव तां रागवर्धन्यभिधां वदामः ।

---

— ॥ रागवर्धनी ॥ —

प्रारभ्य तारस्थितमध्यमं प्रागारुह्य तारस्थितपञ्चमान्तम् ॥ ११५६ ॥
मध्यस्थषड्जावधि चावरुह्य तानान् विचित्रान् कतिचित् प्रगाय ।
षड्जस्वरे मध्यगते विमुञ्चेदस्या विदारीमथ लक्षयामः ॥ ११५७ ॥

---

— ॥ विदारी ॥ —

प्रक्रम्य तारस्थितषड्जमादावामध्यगांधारमथावरुह्य ।
आतारगांधारमथाधिरोहेद्गीत्वा च तानान् कतिचित् प्रगल्भम् ॥ ११५८ ॥
मुञ्चेच्च तारस्थितषड्ज एव सा रागवर्धन्यभिधीयतेऽन्या ।

---

— ॥ रागवर्धनी ॥ —

आरभ्य तारस्थितपञ्चमं प्रागारुह्य चातारनिषादमस्मात् ॥ ११५९ ॥
मध्यस्थषड्जावधि चावरुह्य गीत्वा च तानान् कतिचिद्विचित्रान् ।
न्यस्येच्च मध्यस्थितषड्ज एव तस्या विदारीं समुदीरयामः ॥ ११६० ॥

---

— ॥ विदारी ॥ —

प्रक्रम्य तारस्थितषड्जमादावामध्यगांधारमथाधिरोहेत् ।
आतारगांधारमथाधिरोहेद्गीत्वा च तानान् कतिचिद्विचित्रान् ॥ ११६१ ॥
न्यस्येच्च तारस्थितषड्ज एव षड्जस्य च स्थायिनमामनामः ।

---

— ॥ षड्जस्थायी ॥ —

तारस्थषड्जात् प्रभृति क्रमेण निषादतारस्य विवर्जनेन ॥ ११६२ ॥
तारस्फुरद्धैवतकस्वरान्तं षड्जादिमाः सन्ति हि षट् स्वरा ये ।
प्रत्येकमेकैकतानरीत्या चारोहणेनाप्यवरोहणेन ॥ ११६३ ॥
स्वपूर्वपूर्वस्वरयोजनेनोत्तरोत्तरेषामपि वर्जनेन ।
उद्गाय तु द्वादश तानभेदान् मुञ्चेच्च मध्यस्थितषड्ज एव ॥ ११६४ ॥

---

— ॥ मध्यमस्थायी ॥ —

तन्मध्यमस्थायिनमामनामो यथाक्रमं गायकबोधहेतोः ।
प्रक्रम्य मध्यस्थितमध्यमं स्युः सप्त स्वरास्तारगमध्यमान्तम् ॥ ११६५ ॥

---

आरोहरीत्याप्यवरोहणेऽस्याः प्रगाय तानांश्चतुरो दशापि ।
मुञ्चेच्च मध्यस्थितमध्यमेऽथ स्थाय्युच्यते मध्यगषड्जकस्य ॥ ११६६ ॥

---

— ॥ षड्जस्थायी ॥ —

प्रक्रम्य मध्यस्थितषड्जमादौ ये तु स्वरास्तारगषड्जकान्ताः ।
आरोहणेनाप्यवरोहणेन तेषामुदीतान् किल तानभेदान् ॥ ११६७ ॥
प्रगाय तानांश्चतुरो दशापि न्यस्येच्च तारस्थितषड्ज एव ।

---

— ॥ वर्तनी ॥ —

अतः परं वर्तनिकां वदामः प्रारभ्य मध्यस्थितषड्जमादौ ॥ ११६८ ॥
आरुह्य चातारनिषादकान्तं मध्यस्थषड्जावधि चावरुह्य ।
गीत्वा च तानान् कतिचित् प्रगल्भं न्यस्येच्च मध्यस्थितषड्ज एव ॥ ११६९ ॥

---

— ॥ न्यासः ॥ —

रागस्य च न्यासमथाभिधास्ये प्रक्रम्य मध्यस्थितमध्यमं प्राक् ।
आ मध्यगान्मध्यमतोऽवरुह्यारोहेच्च तारस्थितमध्यमान्तम् ॥ ११७० ॥
प्रगाय तानान् कतिचित् प्रगल्भं जह्याच्च तारस्थितषड्ज एव ।

---

— (४१) ॥ अथ वसन्तभैरवीरागः ॥ —

वसन्तभैरव्यभिधां वदामो मेलं च तस्याः सह लक्षणेन ॥ ११७१ ॥
षड्जर्षभौ मध्यमपञ्चमौ च शुद्धौ स्वराः स्युः सह धैवतेन ।
गांधारकस्त्वन्तरनामधेयः स तत्र कैशक्यभिधो निषादः ॥ ११७२ ॥
एतैः स्वरैः सप्तभिरन्वितोऽसौ वसन्तभैरव्यभिधस्य मेळः ।
न्यासो ग्रहोंऽशः पुनरस्य षड्जः संपूर्णतायामपि पञ्चमोऽल्पः ॥ ११७३ ॥

---

— ॥ आक्षिप्तिका ॥ —

आक्षिप्तिकामस्य निरूपयामस्त्वारभ्य तारस्थितषड्जमादौ ।
आमध्यगांधारमथावरुह्य चारुह्य तारस्थितमध्यमान्तम् ॥ ११७४ ॥
गीत्वा च तानान् कतिचित् प्रगल्भं न्यस्येत् पुनस्तारगषड्ज एव ।

---

— ॥ रागवर्धनी ॥ —

सा रागवर्धन्यभिधीयतेऽत्र प्रारभ्य तारस्थितमध्यमान्तम् ॥ ११
आरुह्य चातारनिषादमस्मादा मध्यषड्जादवरुह्य पश्चात् ।
गीत्वा च तानान् कतिचित् प्रगल्भं न्यस्येत् पुनर्मध्यगषड्ज एव

---

— ॥ विदारी ॥ —

अस्या विदारीमथ वर्णयामः प्रारभ्य तारस्थितषड्जमादौ ।
आमध्यगांधारमतोऽवरुह्य चारुह्य चातारनिषादमस्मात् ॥ ११७५
तानान् विचित्रान् कतिचित् प्रगाय न्यस्येत् पुनस्तारगषड्ज एव

---

— ॥ रागवर्धनी ॥ —

सा रागवर्धन्यभिधीयतेऽन्या प्रारभ्य तारस्थितषड्जमादौ ॥ ११६
प्रागुक्तरीत्यापुनरुक्ति गीत्वा न्यस्येत् पुनर्मध्यगषड्ज एव ।

---

— ॥ विदारी ॥ —

अस्या विदारीमथ वर्णयामः प्रारभ्य मध्यस्थितषड्जमादौ ॥ ११७
आमध्यगांधारमतोऽवरुह्य चारुह्य चातारनिषादमस्मात् ।
तानान् विचित्रान् कतिचित् प्रगाय न्यस्येत् पुनस्तारगषड्ज एव ।
आ तारगान्मध्यमतोऽवरुह्य तानान् विचित्रान् कतिचित् प्रगाय ।
न्यस्येत् पुनर्मध्यगषड्ज एव स्थाय्युच्यते तारगषड्जकस्य ॥ ११८

---

— ॥ षड्जस्थायी ॥ —

आरभ्य तारस्थितषड्जमादावापञ्चमास्तारनिषादकान्ताः ।
प्रत्येकमेकैकतानमेषां स्वपूर्वपूर्वस्वरयोजनेन ॥ ११८२ ॥
तथोत्तरेषामपि वर्जनेन चारोहणेनाप्यवरोहणेन ।
तानान् पुनर्द्वादश साधु गीत्वा न्यस्येत् पुनस्तारगषड्ज एव ॥ ११८

---

— ॥ गांधारस्थायी ॥ —

मध्यस्थगांधारकतः क्रमेण स्थाय्युच्यते मध्यगतं तमेनम् ।
गांधारमारभ्य ततस्तु तारगांधारपर्यन्तमपञ्चमा ये ॥ ११८४ ॥

---

— ॥ रागवर्धनी ॥ —

तद्रागवर्धन्यभिधीयतेऽथो तारर्षभं प्रक्रममाण एव ।
मध्यस्थषड्जावधि चावरुह्यारोहेच्च तारस्थितपञ्चमान्तम् ॥ ११९५ ॥
प्रगाय तानान् विविधान् पुरेव मध्यस्थिते षड्ज इह प्रजह्यात् ।

---

— ॥ विदारी ॥ —

तस्या विदारी त्वथ तारषड्जान्मध्यर्षभान्तं त्ववरुह्य तस्मात् ॥ ११९६ ॥
आरुह्य तारस्थितमध्यमान्तं गीत्वा च तानान् कतिचिद्विचित्रान् ।
न्यस्येच्च तारस्थितषड्ज एव तद्रागवर्धन्यपि च द्वितीया ॥ ११९७ ॥
समं विदार्योदितपूर्वरागविवर्धनीवत् कथिता मुनीन्द्रैः ।

---

— ॥ षड्जस्थायी ॥ —

स्थाय्युच्यते तारगषड्जकस्य प्रक्रम्य तारस्थित एव षड्जे ॥ ११९८ ॥
ये तु स्वरास्तारनिषादशीर्षास्तेषां पुनर्धैवततानवर्जम् ।
प्रत्येकमेकैककतानरीत्या पुरेव तानांस्तु चतुर्दशैव ॥ ११९९ ॥
गीत्वा त्यजेत्तारगषड्ज एव गांधारकस्थाय्यधुनोच्यते सः ।

---

— ॥ गांधारस्थायी ॥ —

गांधारतो मध्यगतात्तु तारगांधारगापर्यन्तमिहोपगाय ॥ १२०० ॥
पुरेव तानांश्चतुरो दशापि तारस्थगांधारक एव मुञ्चेत् ।

---

— ॥ षड्जस्थायी ॥ —

षड्जस्य च स्थाय्यथ मध्यगस्य निरूप्यते मध्यगषड्जतः प्राक् ॥ १२०१ ।
तारस्थषड्जावधि पूर्ववत्तु गीत्वा ततः पञ्च नवापि तानान् ।
मध्यस्थषड्जे तदनु प्रजह्यादनन्तरं वर्तनिकां वदामः ॥ १२०२ ॥

---

— ॥ वर्तनी ॥ —

मध्यस्थषड्जात् प्रभृतीह तारनिषादपर्यन्तमनेकतानान् ।
गीत्वा त्यजेन्मध्यगषड्ज एव न्यासं तु रागस्य ततो वदामः ॥ १२०३ ॥

---

— ॥ न्यासः ॥ —

अपौनरुक्त्येन विदारिकावद्गीत्वा त्यजेत्तारगषड्ज एव ।

---

— (४३) ॥ अथ कन्नडगौलरागः ॥ —

वक्ष्यामहे कन्नडगौलरागं सामन्तमेलः खलु तस्य मेलः ॥ १२०४ ॥
अमुष्य रागस्य च लक्षणं तु न्यासो ग्रहोंऽशोऽत्र निषाद एव ।
पूर्णश्च सोऽयं कथितः कदाचिदारोहणे मध्यमवर्जितं स्यात् ॥ १२०५ ॥

---

— ॥ आक्षिप्तिका ॥ —

आक्षिप्तिकां वच्म्यथ तारषड्जान्मध्यस्थषड्जावधि चावरुह्य ।
आरुह्य तारस्थितमध्यमान्तं तानान् विचित्रानपि च प्रगाय ॥ १२०६ ॥
तारस्थषड्जे तदनु प्रजह्यात्तद्रागवर्धन्यभिधीयतेऽथ ।

---

— ॥ रागवर्धनी ॥ —

तारस्थितान्मध्यकमात्तु तारनिषादपर्यन्तमथाधिरुह्य ॥ १२०७ ॥
मध्यस्थषड्जावधि चावरुह्य गीत्वा त्यजेन्मध्यगषड्ज एव ।

---

— ॥ विदारी ॥ —

अस्या विदारी त्वथ तारषड्जान्मध्यस्थषड्जावधि चावरुह्य ॥ १२०८ ॥
आरुह्य तारस्थितमध्यमान्तं गीत्वा त्यजेत्तारगषड्ज एव ।

---

— ॥ रागवर्धनी ॥ —

भवेद् द्वितीयापि च रागवर्धन्यस्या विदारी च पुरोवदेव ॥ १२०९ ॥

---

— ॥ षड्जस्थायी ॥ —

स्थाय्युच्यते तारगषड्जकस्य प्रारभ्य तारस्थितषड्जमादौ ।
ये तु स्वरास्तारनिषादकान्तास्तेषां पुनर्धैवततानवर्जम् ॥ १२१० ॥

प्रत्येकमेकैकतानरीत्यारोहावरोहक्रमतः प्रगाय ।
तानानिह द्वादश तारषड्जे न्यस्येदथ स्थाय्यपि पञ्चमस्य ॥ १२११ ॥

---

॥ पञ्चमस्थायी ॥

निरूप्यते मध्यगपञ्चमाच्च येऽष्ट स्वरास्तारगपञ्चमान्ताः ।
तेषां पुनर्धैवततानवर्जमारोहरीत्याप्यवरोहरीत्या ॥ १२१२ ॥
प्रगाय तानांश्चतुरो दशापि न्यस्येच्च मध्यस्थितपञ्चमेऽस्मिन् ।

---

॥ गांधारस्थायी ॥

गांधारकस्थायिनमामनामो गांधारकान् मध्यगतात् पुनर्ये ॥ १२१३ ॥
आतारगांधारमिह स्वराः स्युः प्राग्वत् पुनर्धैवततानवर्जम् ।
चतुर्दशैषामभिगाय तानान् मध्यस्थगांधारक एव जह्यात् ॥ १२१४ ॥

---

॥ षड्जस्थायी ॥

षड्जस्य तु स्थाय्यथ मध्यगस्य निरूप्यते मध्यगषड्जतः प्राक् ।
आतारषड्जं चतुरो दशापि प्रगाय तानान् क्रमशः पुरेव ॥ १२१५ ॥
न्यस्येच्च मध्यस्थितषड्ज एव निरूप्यते वर्तनिका ततोऽस्य ।

---

॥ वर्तनी ॥

मध्यस्थषड्जात् प्रभृतीह तारनिषादपर्यन्तमनुक्रमेण ॥ १२१६ ॥
तानान् यथेच्छं कतिचित् प्रगाय मुञ्चेच्च मध्यस्थितषड्ज एव ।

---

— ॥ न्यासः ॥ —

न्यासस्तु रागस्य विदारिकावद्गेयो दिवा पश्चिमयाम एषः ॥ १२१७ ॥

---

— (४४) ॥ अथ काम्बोदिरागः ॥ —

काम्बोदिमेलः स तु यत्र षड्जः शुद्धस्तथा मध्यमपञ्चमौ च ।
प्रागुक्तरीत्या प्रवदन्ति पञ्चश्रुती तथैवर्षभधैवतौ द्वौ ॥ १२१८ ॥

तानान् विचित्रान् नव सप्त चापि षड्जस्वरे मध्यगते विमुञ्चेत् ।

---

— ॥ वर्तनी ॥ —

वर्तन्यमुष्यापि च मध्यषड्जादारुह्य चातारनिषादमादौ ॥ १२२८ ॥
आ मध्यषड्जादवरुह्य गीत्वा तानानथोऽञ्चेदपि मध्यषड्जे ।

---

— ॥ न्यासः ॥ —

न्यासोऽपि रागस्य विदारिकावत् सायाह्नि गानाच्छुभमेष दद्यात् ॥ १२२९ ॥

---

— ॥ (४५) अथ मुखारिरागः ॥ —

मुखारिरागस्य वदामि मेलं सप्त स्वरास्तत्र भवन्ति शुद्धाः ।
वक्ष्यामहे संप्रति लक्ष्म तस्य न्यासो ग्रहोंऽशः पुनरस्य षड्जः ॥ १२३० ॥
स एव वादी च स पञ्चमः संवादी तु गांधारनिषादकौ द्वौ ।
विवादिनौ तावनुवादिभावं यातस्तथैवर्षभधैवतौ च ॥ १२३१ ॥

---

— ॥ आक्षिप्तिका ॥ —

आक्षिप्तिकामस्य निरूपयामस्त्वारभ्य गांधारकमत्र तारम् ।
मध्यर्षभान्तं त्ववरुह्य किं चारोहेच्च तारस्थितमध्यमान्तम् ॥ १२३२ ॥
तानान् विचित्रान् कतिचिच्च गीत्वा न्यस्येच्च तारस्थितषड्ज एव ।

---

— ॥ रागवर्धनी ॥ —

सा रागवर्धन्यभिधीयतेऽस्यास्त्वारभ्य मध्यस्थितपञ्चमात् प्राक् ॥ १२३३ ॥
आरुह्य चा तारगपञ्चमात्तु मध्यस्थषड्जावधि चावरुह्य ।
तानान् विचित्रान् कतिचिच्च गीत्वा न्यस्येच्च मध्यस्थितषड्ज एव ॥ १२३४ ॥

---

— ॥ विदारी ॥ —

अस्या विदारीं प्रतिपादयामस्त्वारभ्य मध्यस्थनिषादमादौ ।
आरुह्य चातारनिषादमस्मादा मध्यषड्जादवरुह्य तानान् ॥ १२३५ ॥

गीत्वा विचित्रान् कतिचित् क्रमेण न्यस्येत्तु तारस्थितषड्ज एव ।
अस्या विदार्याद्यविदारिकावज्ज्ञेया विचित्रापुनरुक्ततानैः ॥ १२३६ ॥

---

— ॥ षड्जस्थायी ॥ —

षड्जस्य तु स्थायिनमामनामस्त्वारभ्य तारस्थितषड्जमादौ ।
सप्तापि ये तारनिषादकान्ताः प्रत्येकमेकैककतानमेषाम् ॥ १२३७ ॥
स्वपूर्वपूर्वस्वरयोजनेन तथोत्तरेषामपि वर्जनेन ।
आरोहणेनाप्यवरोहणेन गीत्वा च तानांश्च चतुर्दशैव ॥ १२३८ ॥
न्यासो भवेत्तारगषड्ज एव तं पञ्चमस्थायिनमामनामः ।

---

— ॥ पञ्चमस्थायी ॥ —

आरभ्य मध्यस्थितपञ्चमं तमष्ट स्वरास्तारगपञ्चमान्ताः ॥ १२३९ ॥
प्रत्येकमेकैककतानमेषां स्वपूर्वपूर्वस्वरयोजनेन ।
तथोत्तरेषामपि वर्जनेन त्वारोहणेनाप्यवरोहणेन ॥ १२४० ॥
द्व्यष्टौ च तानान् क्रमशोऽथ गीत्वा न्यस्येच्च मध्यस्थितपञ्चमेऽस्मिन् ।

---

— ॥ मध्यमस्थायी ॥ —

स्थाय्युच्यते मध्यगमध्यमस्य त्वारभ्य मध्यस्थितमध्यमं तम् ॥ १२४१ ॥
स्वरास्तु ये तारगमध्यमान्ताः प्रत्येकमेकैककतानमेषाम् ।
स्वपूर्वपूर्वस्वरयोजनेन तथोत्तरेषामपि वर्जनेन ॥ १२४२ ॥
आरोहणेनाप्यवरोहणेन द्व्यष्टौ च तानान् क्रमशस्तु गीत्वा ।
न्यासो भवेन्मध्यगपञ्चमेऽस्मिंस्तथोच्यते मध्यगतर्षभस्य ॥ १२४३ ॥

---

— ॥ रिषभस्थायी ॥ —

स्थायी पुरस्तादृषभं तु मध्यमारभ्य ये तारगतर्षभान्ताः ।
प्रत्येकमेकैककतानमेषां स्वपूर्वपूर्वस्वरयोजनेन ॥ १२४४ ॥
तथोत्तरेषामपि वर्जनेन चारोहणेनाप्यवरोहणेन ।
द्व्यष्टौ च तानान् क्रमशोऽथ गीत्वा न्यस्येच्च मध्यर्षभ एव तस्मिन् ॥ १२४५ ॥

---

— ॥ षड्जस्थायी ॥ —

निरूप्यते संप्रति मध्यषड्जस्थायी समारभ्य तु मध्यषड्जम् ।
तारस्थषड्जावधि येऽष्टधा स्युः प्रत्येकमेकैककतानमेषाम् ॥ १२४६ ॥
स्वपूर्वपूर्वस्वरयोजनेन तथोत्तरषामपि वर्जनेन ।
व्यष्टौ च तानान् क्रमशोऽथ गीत्वा न्यस्येच्च मध्यस्थितषड्ज एव ॥ १२४७ ॥

— ॥ वर्तनी ॥ —

तां वर्तनीं संप्रति वर्णयामस्त्वारभ्य मध्यस्थितषड्जमादौ ।
तानान् पुनस्तारनिषादकान्तं गीत्वा विचित्रान् पुनरुक्तिहीनान् ॥ १२४८ ॥
न्यस्येच्च मध्यस्थितषड्ज एव न्यासस्तु रागस्य निरूपणीयः ।

— ॥ न्यासः ॥ —

आरभ्य मध्यस्थनिषादमादौ मध्यर्षभान्तं च तथावरुह्य ॥ १२४९ ॥
आरुह्य चा तारगमध्यमात्तु तानान् विचित्रान् कतिचिच्च गीत्वा ।
न्यस्येच्च तारस्थितषड्ज एव निरुक्त एवं हि मुखारिरागः ॥ १२५० ॥

— ॥ (४६) अथ शुद्धरामक्रियारागः ॥ —

वक्ष्यामहे संप्रति शुद्धरामक्रियाख्यरागस्य तु मेलमादौ ।
षड्जर्षभौ पञ्चमधैवतौ च शुद्धाः स्वराः काकलिको निषादः ॥ १२५१ ॥
स्यान्मध्यमः षट्श्रुतिको निरुक्तो गांधारकश्चान्तरनामधेयः ।
एतैः स्वरैः सप्तभिरत्र शुद्धरामक्रियामेलमुदीरयन्ति ॥ १२५२ ॥
वक्ष्यामहे लक्षणमत्र सम्यङ् न्यासो ग्रहोंऽशः पुनरत्र षड्जः ।
वादी स एवात्र च पञ्चमः संवाद्यत्र गांधारनिषादकौ द्वौ ॥ १२५३ ॥
विवादिनौ तावनुवादितां तु स धैवतोऽञ्चत्यृषभेण युक्तः ।

— ॥ आक्षिप्तिका ॥ —

आक्षिप्तिकामस्य निरूपयामस्त्वारभ्य मध्यस्थितधैवतं तु ॥ १२५४ ॥
मध्यस्थषड्जावधि चावरुह्यारोहेत्ततस्तारगतर्षभान्तम् ।
तानान् विचित्रान् कतिचिच्च गीत्वा न्यस्येच्च तारस्थितषड्जकेऽस्मिन् ॥ १२५५ ॥

— ॥ रागवर्धनी ॥ —

सा रागवर्धन्यभिधीयतेऽस्यास्त्वारभ्य गांधारकमत्र तारम् ।
मध्यस्थषड्जावधि चावरुह्यारोहेत्तु मध्यस्थनिषादकान्तम् ॥ १२५६ ॥
गीत्वा तु तानान् कतिचिद्विचित्रान् न्यस्येत् पुनर्मध्यगषड्ज एव ।

---

— ॥ विदारी ॥ —

विदारिकां तां च निरूपयामस्त्वारभ्य मध्यस्थनिषादमादौ ॥ १२५७ ॥
मध्यर्षभान्तं त्ववरुह्य पश्चादारुह्य तत्तारगतर्षभान्तम् ।
गीत्वा तु तानान् कतिचिद्विचित्रान् न्यस्येच्च तारस्थितषड्ज एव ॥ १२५८ ॥

---

— ॥ रागवर्धनी ॥ —

सा रागवर्धन्यपि च द्वितीया चाद्यावदेवापुनरुक्ततानैः ।
ज्ञेया विदारीसहिता क्रमेण षड्जस्य च स्थायिनमत्र वक्ष्ये ॥ १२५९ ॥

---

— ॥ षड्जस्थायी ॥ —

आरभ्य तारस्थितषड्जमादौ स्वरा निषादावधि येऽत्र सप्त ।
प्रत्येकमेकैककतानमेषां स्वपूर्वपूर्वस्वरयोजनेन ॥ १२६० ॥
तथोत्तरेषामपि वर्जनेन चारोहणेनाप्यवरोहणेन ।
गीत्वा तु तानांश्च चतुर्दशापि न्यस्येच्च तारस्थितषड्ज एव ॥ १२६१ ॥

---

— ॥ पञ्चमस्थायी ॥ —

तं पञ्चमस्थायिनमत्र वक्ष्ये त्वारभ्य मध्यस्थितपञ्चमं तु ।
अष्ट स्वरास्तारगपञ्चमान्ताः प्रत्येकमेकैककतानमेषाम् ॥ १२६२ ॥
स्वपूर्वपूर्वस्वरयोजनेन तथोत्तरेषामपि वर्जनेन ।
आरोहणेनाप्यवरोहणेन व्यष्टौ च तानान् क्रमशोऽथ गीत्वा ॥ १२६३ ॥
न्यस्येच्च मध्यस्थितपञ्चमेऽस्मिन् स्थायी तथा पञ्चमकस्य चैषः ।

---

— ॥ षड्जस्थायी ॥ —

अथोच्यते मध्यमषड्जकस्य स्थायी समारभ्य च मध्यषड्जम् ॥ १२६४ ॥

आतारषड्जं पुनरत्र ये तु स्वरा भवन्त्यष्ट यथाक्रमेण ।
प्रत्येकमेकैककतानमेषां स्वपूर्वपूर्वस्वरयोजनेन ॥ १२६५ ॥
तथोत्तरेषामपि वर्जनेन चारोहणेनाप्यवरोहणेन ।
व्यष्टौ च तानान् पुनरत्र गीत्वा न्यस्येच्च मध्यस्थितषड्ज एव ॥ १२६६ ॥

---

— ॥ वर्तनी ॥ —

तां वर्तनीमस्य निरूपयामस्त्वारभ्य मध्यस्थितषड्जमादौ ।
आरुह्य चातारनिषादमन्यान् गीत्वा च तानान् कतिचिद्विचित्रान् १२६७
न्यस्येच्च मध्यस्थितषड्ज एव न्यासं च रागस्य निरूपयामः ।

---

— ॥ न्यासः ॥ —

आरभ्य मध्यस्थितषड्जमादावातारगांधारमतोऽधिरुह्य ॥ १२६८ ॥
तानांश्च गीत्वा कतिचिद्विचित्रान् न्यस्येच्च तारस्थितषड्ज एव ।
यामे तुरीये दिवसस्य गाने श्रेयो बहु स्यादथ रक्तिलाभः ॥ १२६९ ॥

---

— ॥ (४७) अथ केदारगौलरागः ॥ —

केदारगौलस्य वदामि मेलं षड्जस्तथा मध्यमपञ्चमौ च ।
शुद्धा भवन्ति त्रय एव पञ्चश्रुती तथैवर्षभधैवतौ द्वौ ॥ १२७० ॥
गांधारकश्चान्तरनामधेयः कैशिक्यभिख्यश्च भवेन्निषादः ।
एतैः स्वरैः सप्तभिरन्वितो यः केदारगौलस्य च मेलमाहुः ॥ १२७१ ॥
पूर्णो भवेदस्य च लक्षणं तु न्यासो ग्रहोंऽशोऽत्र निषाद एव ।

---

— ॥ आक्षिप्तिका ॥ —

आक्षिप्तिकामस्य वदामि तारनिषादकान्मध्यगतर्षभान्तम् ॥ १२७२ ॥
क्रमेण पूर्वं त्ववरुह्य तस्मादारुह्य तन्मध्यगमध्यमान्तम् ।
गीत्वा यथेच्छं कतिचिच्च तानान् न्यस्येच्च मध्यस्थितषड्ज एव ॥ १२७३

---

— ॥ रागवर्धनी ॥ —

तद्रागवर्धन्यभिधीयतेऽथ तारर्षभात्तारगमध्यमान्तम् ।
आरुह्य तस्मादवरुह्य मध्यषड्जान्तमुद्गाय च तानभेदान् ॥ १२७४ ॥

न्यस्येच्च तारस्थितषड्ज एव विदारिका स्यात् किल तारषड्जात् ।
मध्यर्षभान्तं त्ववरुह्य तस्मादारुह्य तारस्थितधैवतान्तम् ॥ १२७५ ॥
गीत्वा च तानान् कतिचिद्विचित्रान् न्यस्येच्च तारस्थितषड्ज एव ।

---

— ॥ षड्जस्थायी ॥ —

स्थाय्युच्यते तारगषड्जकस्य तारस्थषड्जात् प्रभृतीह ये तु ॥ १२७६ ॥
स्वराः स्युरातारनिषादमेषामारोहरीत्याप्यवरोहरीत्या ।
गांधारकं धैवतमन्तरेण प्रत्येकमेकैककतानरीत्या ॥ १२७७ ॥
प्रगाय तानान् दश तानभेदान् न्यस्येच्च तारस्थितषड्ज एव ।

---

— ॥ मध्यमस्थायी ॥ —

तन्मध्यमस्थायिनमामनामः प्रक्रम्य मध्यस्थितमध्यमं तम् ॥ १२७८ ॥
ये तु स्वरास्तारगमध्यमान्तास्तेषां पुनर्द्वादश तानभेदान् ।
गायन् यथापूर्वमनुक्रमेण मध्यस्थिते मध्यम एव मुञ्चेत् ॥ १२७९ ॥

---

— ॥ ऋषभस्थायी ॥ —

अथर्षभस्थायिनमामनामो मध्यर्षभात्तारगतर्षभान्ताः ।
ये स्युः स्वराः पूर्ववदेव तेषां प्रत्येकमेकैककतानरीत्या ॥ १२८० ॥
उद्गाय तु द्वादश तानभेदान् न्यस्येच्च मध्यर्षभ एव तस्मिन् ।

---

— ॥ वर्तनी ॥ —

तद्वर्तनीं कीर्तयितुं प्रवर्ते प्रक्रम्य तारस्थितषड्जमादौ ॥ १२८१ ॥
आरुह्य चातारनिषादमस्मान्मध्यस्थषड्जावधि चावरुह्य ।
गीत्वा च तानान् विविधान् यथेच्छं मुञ्चेच्च मध्यस्थितषड्ज एव ॥ १२८२ ॥

---

— ॥ न्यासः ॥ —

न्यासस्तु रागस्य विदारिकावद्द्वेयो दिवा चैष तुरीययामे ।

---

— ॥ (४८) अथ नारायणगौलरागः ॥ —

वक्ष्यामि नारायणगौलस्य केदारगौलस्य च मेल एकः ॥ १२८३ ॥
तल्लक्षणं तु प्रतिपादयामो न्यासो ग्रहोंऽशोऽस्य निषाद एव ।
संपूर्णभावं भजते च सोऽयमाक्षिप्तिकामस्य निरूपयामः ॥ १२८४ ॥

---

— ॥ आक्षिप्तिका ॥ —

मध्यर्षभात्तारगमध्यमान्तमारुह्य मध्यस्थितपञ्चमान्तम् ।
ततोऽवरोहेत् कतिचिच्च तानान् गीत्वा त्यजेत्तारगषड्ज एव ॥ १२८५ ॥

---

— ॥ रागवर्धनी ॥ —

तद्रागवर्धन्यभिधीयतेऽथ प्रक्रम्य तारस्थितमध्यमं तम् ।
आरुह्य चातारनिषादमस्मान्मध्यर्षभान्तं त्ववरुह्य तानान् ॥ १२८६ ॥

---

— ॥ विदारी ॥ —

गायंस्त्यजेन्मध्यगषड्ज एव तस्या विदार्यां किल तारषड्जात् ।
आ मध्यगात् पञ्चमतोऽवरुह्यारोहेत्ततस्तारगपञ्चमान्तम् ॥ १२८७ ॥
उद्गाय तानानुचितान् यथेच्छं मध्यस्थिते षड्ज इह प्रजह्यात् ।

---

— ॥ रागवर्धनी ॥ —

भवेद्द्वितीयापि च रागवर्धन्येवं विदार्या सहितेति वेद्यम् ॥ १२८८ ॥

---

— ॥ षड्जस्थायी ॥ —

तारस्थषड्जस्य निरूप्यतेऽथ स्थायी समारभ्य तु तारषड्जम् ।
ये षट् स्वरा धैवतवर्जनेन भवन्ति तारस्थनिषादकान्ताः ॥ १२८९ ॥
एकैकतानक्रमतः किलैषां प्रत्येकमारोहवरोहरीत्या ।
उद्गाय च द्वादश तानभेदान् न्यस्येच्च तारस्थितषड्ज एव ॥ १२९० ॥

---

— ॥ पञ्चमस्थायी ॥ —

स्थाय्युच्यते संप्रति पञ्चमस्य प्रारभ्य मध्यस्थितपञ्चमं तम ।

ये तु स्वरास्तारगपञ्चमान्तास्तेषां पुनर्धैवतवर्जनेन ॥ १२९१ ॥
पुरेव तानांश्चतुरो दशापि गीत्वा त्यजेन्मध्यगपञ्चमेऽस्मिन् ।

---

— ॥ ऋषभस्थायी ॥ —

अथर्षभस्थायिनमामनामो मध्यर्षभात्तारगतर्षभान्ताः ॥ १२९२ ॥
ये तु स्वरा धैवतवर्जिताः स्युस्तेषां पुरोक्तेन तु वर्त्मनैव ।
चतुर्दशोद्गाय च तानभेदान् मुञ्चेच्च मध्यर्षभ एव तस्मिन् ॥ १२९३ ॥

---

— ॥ षड्जस्थायी ॥ —

मध्यस्थषड्जस्य निरूप्यतेऽथ स्थायी समारभ्य तु मध्यषड्जम् ।
आ तारषड्जादपधैवता ये स्वराः स्युरेषां च पुरोदितेन ॥ १२९४ ॥
मार्गेण गीत्वा चतुरो दशापि तानांस्त्यजेन्मध्यगषड्ज एव ।

---

— ॥ वर्तनी ॥ —

अनन्तरं वर्तनिकां वदामः प्रारभ्य मध्यस्थितषड्जमादौ ॥ १२९५ ॥
आरुह्य चातारनिषादमस्मान्मध्यस्थषड्जावधि चावरुह्य ।
उद्गाय तानानुचितांश्च कांश्चिन्मुञ्चेच्च मध्यस्थितषड्ज एव ॥ १२९६ ॥

---

— ॥ न्यासः ॥ —

न्यासं तु रागस्य ततो वदामो मध्यस्थितात् पञ्चमतोऽवरुह्य ।
मध्यर्षभान्तं च ततोऽधिरोहेत् क्रमेण तारस्थितमध्यमान्तम् ॥ १२९७ ॥
गीत्वा च तानान् कतिचिद्विचित्रान् न्यस्येच्च तारस्थितषड्ज एव ।
सायं तु सोऽयं सरसैः प्रतीतः श्रेयस्करो रक्तिविशेषदश्च ॥ १२९८ ॥

---

— ॥ (४९) अथ हिञ्जुजिरागः ॥ —

हिञ्जुजिरागस्य वदामि मेलं गांधारकोऽत्रान्तरनामधेयः ।
शिष्टाः स्वरास्तत्र भवन्ति शुद्धा न्यासो ग्रहोंऽशः पुनरत्र षड्जः ॥ १२९९ ॥
युक्तः स चाप्यन्तरकाकलीभ्यां संपूर्णभावं भजते तथैव ।

---

ये तु स्वरास्तारगपञ्चमान्तास्तेषां पुनर्धैवतवर्जनेन ॥ १२९१ ॥
पुरेव तानांश्चतुरो दशापि गीत्वा त्यजेन्मध्यगपञ्चमेऽस्मिन् ।

— ॥ ऋषभस्थायी ॥ —

अथर्षभस्थायिनमामनामो मध्यर्षभात्तारगतर्षभान्ताः ॥ १२९२ ॥
ये तु स्वरा धैवतवर्जिताः स्युस्तेषां पुरोक्तेन तु वर्त्मनैव ।
चतुर्दशोद्गाय च तानभेदान् मुञ्चेच्च मध्यर्षभ एव तस्मिन् ॥ १२९३ ॥

— ॥ षड्जस्थायी ॥ —

मध्यस्थषड्जस्य निरूप्यतेऽथ स्थायी समारभ्य तु मध्यषड्जम् ।
आ तारषड्जादपधैवता ये स्वराः स्युरेषां च पुरोदितेन ॥ १२९४ ॥
मार्गेण गीत्वा चतुरो दशापि तानांस्त्यजेन्मध्यगषड्ज एव ।

— ॥ वर्तनी ॥ —

अनन्तरं वर्तनिकां वदामः प्रारभ्य मध्यस्थितषड्जमादौ ॥ १२९५ ॥
आरुह्य चातारनिषादमस्मान्मध्यस्थषड्जावधि चावरुह्य ।
उद्गाय तानानुचितांश्च कांश्चिन्मुञ्चेच्च मध्यस्थितषड्ज एव ॥ १२९६ ॥

— ॥ न्यासः ॥ —

न्यासं तु रागस्य ततो वदामो मध्यस्थितात् पञ्चमतोऽवरुह्य ।
मध्यर्षभान्तं च ततोऽधिरोहेत् क्रमेण तारस्थितमध्यमान्तम् ॥ १२९७ ॥
गीत्वा च तानान् कतिचिद्विचित्रान् न्यस्येच्च तारस्थितषड्ज एव ।
सायं तु सोऽयं सरसैः प्रतीतः श्रेयस्करो रक्तिविशेषदश्च ॥ १२९८ ॥

— ॥ (४९) अथ हिञ्जुज्जिरागः ॥ —

हिञ्जुज्जिरागस्य वदामि मेलं गांधारकोऽत्रान्तरनामधेयः ।
शिष्टाः स्वरास्तत्र भवन्ति शुद्धा न्यासो ग्रहोंऽशः पुनरत्र षड्जः ॥ १२९९ ॥
युक्तः स चाप्यन्तरकाकलीभ्यां संपूर्णभावं भजते तथैव ।

— ॥ आक्षिप्तिका ॥ —

आक्षिप्तिकामस्य निरूपयामः प्रक्रम्य तारस्थितषड्जमादौ ॥ १३०० ॥
आमध्यगांधारमिहावरुह्यातारस्थगांधारमितोऽधिरोहेत् ।
गीत्वा तु तानान् कतिचिद्विचित्रान् न्यस्येच्च तारस्थितषड्ज एव ॥ १३०१ ॥

---

— ॥ रागवर्धनी ॥ —

तद्रागवर्धन्यभिधीयतेऽथ तारर्षभात्तारनिषादकान्तम् ।
आरुह्य तस्मादवरुह्य पश्चान्मध्यस्थषड्जावधि तानभेदान् ॥ १३०२ ॥
गीत्वा त्यजेन्मध्यगषड्ज एव तस्या विदारीमथ वर्णयामः ।

---

— ॥ विदारी ॥ —

मध्यस्थितात् पञ्चमतोऽवरोहेदामध्यगांधारमथाधिरोहेत् ॥ १३०३ ॥
तारर्षभान्तं कतिचिच्च तानान् गायंस्त्यजेत्तारगते तु षड्जे ।

---

— ॥ रागवर्धनी ॥ —

तद्रागवर्धन्यभिधीयतेऽथ प्रक्रम्य तारस्थितषड्जमादौ ॥ १३०४ ॥
आरुह्य चातारनिषादमस्मान्मध्यस्थषड्जावधि चावरुह्य ।
गीत्वा च तानान् कतिचिद्विचित्रान् मुञ्चेच्च मध्यस्थितषड्ज एव ॥ १३०५ ॥

---

— ॥ वर्तनी ॥ —

अस्या विदार्यां किल तारषड्जादामध्यगांधारमिहावरुह्य ।
आतारगांधारमतोऽधिरुह्य तानान् प्रागायोज्झति तारषड्जे ॥ १३०६ ॥

---

— ॥ षड्जस्थायी ॥ —

तारस्थषड्जस्य निरूप्यतेऽथ स्थायी समारभ्य तु तारषड्जम् ।
ये ते स्वरास्तारनिषादकान्ताः प्रत्येकमेषां पुनरेकमेकम् ॥ १३०७ ॥
आरोहणेनाप्यवरोहणेन प्रगाय तानांश्चतुरो दशैवम् ।
मुञ्चेच्च तारस्थित एव षड्जे तत्पञ्चमस्थायिनमामनामः ॥ १३०८ ॥

---

— ॥ पञ्चमस्थायी ॥ —

आरुह्य मध्यस्थितपञ्चमं ये चाष्टौ स्वरास्तारगपञ्चमान्ताः ।
पुरेव तेषां दश षट् च तानान् गीत्वा त्यजेन्मध्यगपञ्चमेऽस्मिन् ॥ १३०९ ॥

— ॥ षड्जस्थायी न्यासश्च ॥ —

निरूप्यते संप्रति मध्यषड्जस्थायी समारभ्य तु मध्यषड्जम् ।
तारस्थषड्जावधि ये स्वराः स्युः प्राग्वत्तु तेषां दश षट् च तानान् ॥ १३१० ॥
गीत्वा त्यजेन्मध्यगषड्ज एव न्यासस्तु रागस्य विदारिकावत् ।
अनेहसः पश्चिमयामगाने श्रेयस्करः श्रोतृजनस्य सोऽयम् ॥ १३११ ॥

— ॥ (५०) अथ देशाक्षिरागः ॥ —

देशाक्षिकामेलमुदीरयामः षड्जस्तथा मध्यमपञ्चमौ च ।
शुद्धास्तु पञ्चश्रुतिधैवतश्च भवेत्तथा षट्श्रुतिकर्षभश्च ॥ १३१२ ॥
गांधारकश्चान्तरनामधेयः स काकलीनामयुतो निषादः ।
एतैः स्वरैः सप्तभिरन्वितं तद्देशाक्षिकामेलमुदाहरन्ति ॥ १३१३ ॥
निरूपयाम्यस्य च लक्ष्म सम्यग्गांधारको न्यास इह ग्रहोंऽशः ।
संपूर्णरागस्त्वयमस्य वक्ष्याम्याक्षिप्तिकां तारगषड्जमादौ ॥ १३१४ ॥

— ॥ आक्षिप्तिका ॥ —

आरभ्य मध्योपहितर्षभान्तं कृत्वावरोहं च ततोऽधिरुह्य ।
आ तारनिष्ठादृषभात् प्रगाय स्वैरं विचित्रान् कतिचिच्च तानान् ॥ १३१५ ॥
षड्जस्वरे तारगते विमुञ्चेत्तद्रागवर्धन्यभिधीयतेऽथ ।

— ॥ रागवर्धनी ॥ —

गांधारकान्मध्यगतात् प्रभृत्या तारस्थितात् पञ्चमतोऽधिरोहेत् ॥ १३१६ ॥
आ मध्यषड्जादृषभान्ततोऽवरुह्य क्रमादप्यभिगाय तानान् ।
मध्यस्थषड्जे विजहातु पश्चादस्या विदारीमथ वर्णयामः ॥ १३१७ ॥

— ॥ विदारी ॥ —

तारस्थषड्जादवरुह्य मध्यगतर्षभान्तं च ततोऽवरुह्य ।
आ तारगान्मध्यमतश्च कांश्चित्तानान् विचित्रानभिगाय पश्चात् ॥ १३१८ ॥

ततस्त्यजेत्तारगते तु षड्जे तद्रागवर्धन्यभिधीयतेऽन्या ।

---

— ॥ रागवर्धनी ॥ —

तारस्थितान्मध्यमतोऽधिरोहेद्वा तारगात् पञ्चमतस्तथैव ॥ १३१९ ॥
आ मध्यषड्जादवरुह्य तानान् गायेद्विजह्यादपि मध्यषड्जे ।

---

— ॥ विदारी ॥ —

अस्या विदारी त्वधिरुह्य मध्यगांधारकात्तारगपञ्चमान्तम् ॥ १३२० ॥
आ मध्यगात् पञ्चमतोऽवरुह्य गीत्वा च तानान् कतिचिद्विचित्रान् ।
मुञ्चेच्च किं चेद्दशि तारषड्जे षड्जस्य च स्थाय्यभिधीयतेऽथ ॥ १३२१ ॥

---

— ॥ षड्जस्थायी ॥ —

आरभ्य तारस्थितषड्जमादौ विहाय गांधारकधैवतौ द्वौ ।
पञ्च स्युरा तारनिषादतो ये तेषां स्वराणां पुनरेकमेकम् ॥ १३२२ ॥
प्रत्येकमित्येवमिहानुपूर्व्यादारोहणेनाप्यवरोहणेन ।
स्वपूर्वपूर्वस्वरयोजनात् स्वोत्तरोत्तरेषामपि वर्जनेन ॥ १३२३ ॥
दशैव तानानभिगाय पश्चात् षड्जस्वरे तारगते विमुञ्चेत् ।

---

— ॥ पञ्चमस्थायी ॥ —

प्रपञ्च्यते संप्रति पञ्चमस्य स्थायी स्वरान्मध्यगपञ्चमादीन् ॥ १३२४ ॥
तथैव तारस्थितपञ्चमान्तान् संत्यज्य गांधारकधैवतौ षट् ।
आरोहणेनाप्यवरोहणेन तानैः सह द्वादशभिः पुरेव ॥ १३२५ ॥
गीत्वा त्यजेन्मध्यगपञ्चमेऽस्मिंस्तथर्षभस्थायिनमामनामः ।

---

— ॥ ऋषभस्थायी ॥ —

मध्यर्षभादीनपि षट् च तारगतर्षभान्तानपहाय तु द्वौ ॥ १३२५ ॥
गांधारकं धैवतमानुपूर्व्यादारोहणेनाप्यवरोहणेन ।
तानैः समं द्वादशभिः प्रगाय मुञ्चेदथो मध्यगतर्षभे च ॥ १३२७ ॥

---

— ॥ वर्तनी ॥ —

वर्तन्यथारभ्य तु मध्यषड्जादारुह्य चा तारगतान्निषादात् ।
आ मध्यषड्जादवरुह्य पश्चात् प्रगाय तानान् कतिचित् क्रमेण ॥ १३२८ ॥
मुञ्चेच्च मध्यस्थितषड्ज एव न्यासं तु रागस्य ततोऽभिधास्ये ।

— ॥ न्यासः ॥ —

स पौनरुक्त्येन विनैव गेयो भवेत् पुरा प्रोक्तविदारिकावत् ।
प्रगे प्रगेयः पुनरेष रागः श्रेयस्करः श्रोतृजनस्य नित्यम् ॥ १३२९ ॥

॥ इति रघुनाथभूपरचितायां सङ्गीतसुधायां
द्वितीयो रागाध्यायः समाप्तः ॥

# सङ्गीतसुधायाम्

## तृतीयः प्रकीर्णकाध्यायः

पुरा सुरार्थं भगवान् मुकुन्दो मन्थानशैलेन महाम्बुराशिम् ।
विमथ्य संगृह्य सुधां व्यतारीत्तेभ्यः प्रमोदं चिरजीवितं च ॥ १ ॥

श्रीचेव्वभूपाच्युतभूवलारेस्तथा सुतः श्रीरघुनाथभूपः ।
संगीतशास्त्राब्धिभवां ददाति प्रकीर्णकाध्यायसुधां बुधेभ्यः ॥ २ ॥

अथ स्वराध्याय इह स्वराश्च ग्रामा निरुक्ताः सह मूर्छनाभिः ।
अशेषरागप्रकृतित्वमाप्ताः षाड्जीपुरोगा अपि जातयश्च ॥ ३ ॥

तज्जन्यरागाः सकला द्वितीयेऽध्याये निरुक्ताः सह लक्षणेन ।
रागस्वरूपे च निरूप्यमाणे निरूपितास्ते तिरुपादयश्च ॥ ४ ॥

अतश्च तेषां तिरुपादिमानां निरूपणीयं निपुणं स्वरूपम् ।
न केवलं लक्षणतोऽस्य बोधो वाग्गेयकारस्य तथा स्वरादेः ॥ ५ ॥

गांधर्वकस्यापि भवेत् प्रसिद्ध्या रागप्रपञ्चस्य विशिष्टबोधः ।
प्रकीर्णकेऽस्मिन् प्रतिपाद्यमर्थं संगृह्य वक्ष्यामि सुबोधहेतोः ॥ ६ ॥

---

— ॥ उद्देशः ॥ —

वाग्गेयकारोऽत्र निरूप्यते प्राग्गान्धर्वकोऽथो तदनु स्वरादिः ।
उक्तं ततो गायकलक्षणं च तद्गायनीनामथ लक्षणं च ॥ ७ ॥

गुणाश्च दोषाश्च ततस्तु तेषां चतुष्प्रकारा अपि शब्दभेदाः ।
पश्चान्निरूप्या गमकप्रभेदाः स्थायाः समस्ताः सह लक्षणेन ॥ ८ ॥

आलप्तिवृन्दादिकलक्षणं च देशीयमार्गानुगतक्रमेण ।

---

— ॥ वाग्गेयकारः ॥ —

संगीतशास्त्रे प्रथमाधिकारी वाग्गेयकारः प्रतिपाद्यते प्राक् ॥ ९ ॥

वाचं च गेयं च करोति यस्माद्वाग्गेयकारः कथितस्तथासौ ।
वाक्शब्दपर्यायतयैव मातुशब्दः प्रयुक्तः किल गीतिदक्षैः ॥ १० ॥

गेयस्य पर्यायतया तु धातुशब्दं तथा गीतिविदो वदन्ति ।
बन्धं पदानां प्रवदन्ति मातुं स्वरौघसंदर्भमुशन्ति धातुम् ॥ ११ ॥

मातूंश्च धातूनुभयान् करोति यस्तं विदुश्चोभयकारसंज्ञम् ।
तमेव लोका बयकारनाम्ना वदन्त्यपभ्रंशपदेन सर्वे ॥ १२ ॥

तदुत्तमत्वादिविवेकहेतोर्गुणांस्तदीयानिह वर्णयामः ।
मर्मज्ञता व्याकरणे निघण्टौ पाण्डित्यमाभ्यां सदसद्विवेकः ॥ १३ ॥

उक्तातिपूर्वाप्यपराथ मध्या ततः प्रतिष्ठापि च सुप्रतिष्ठा ।
गायत्र्यथोष्णिक् च भवेदनुष्टुब्बृहत्यथो पङ्क्तिरतः परं स्यात् ॥ १४ ॥

त्रिष्टुप् ततः स्याज्जगती परातिपूर्वाथ शक्वर्यतिपूर्विकान्या ।
अष्टिस्तथात्यष्टिरथो धृतिः स्यादन्याऽतिपूर्वा तु कृतिस्ततः स्यात् ॥ १५ ॥

ततः प्रकृत्याकृतिकाविकृत्यः स्यात् संकृतिश्चातिकृतिश्च पश्चात् ।
अथोत्कृतिश्चेति समीरितानि च्छन्दांसि षड्विंशतिरेव सद्भिः ॥ १६ ॥

प्रक्रम्य चैकाक्षरपादमादावेकैकवर्णाभ्यधिकैस्तु पादैः ।
छन्दांसि भिन्नानि भवन्ति तानि षड्विंशतिस्तत्र समुद्भवानि ॥ १७ ॥

समानि किं चार्धसमान्यमूनि वृत्तानि शास्त्रे विषमाणि चेति ।
प्रस्तारको नष्टमतः परं स्यादुद्दिष्टमेकादिलगक्रिया च ॥ १८ ॥

संख्यानमन्यच्च ततोऽध्वयोगः षट्प्रत्ययास्तैरपि लक्षणैश्च ।
स्फुटान्यथार्याप्रमुखानि मात्रावृत्तानि तेषामपि तत्त्वबोधः ॥ १९ ॥

अलंकृतौ वामनभामहादिविनिर्मितायामिह वैदुषी च ।
शृङ्गारवीरौ करुणाद्भुतौ च रौद्रस्तथा हास्यभयानकौ च ॥ २० ॥

बीभत्सशान्तौ च रसा नवैते रत्यादयः स्थाय्यभिधाश्च भावाः ।
प्रागल्भ्यमेतेषु परो गुणः स्यादशेषदेशस्थितिबोद्धृता च ॥ २१ ॥

गीर्वाणवाक्प्राकृतशौरसेनीभाण्डीरपैशाचकचूलिकाश्च ।
मागध्यपभ्रंश इति स्युरष्टौ भाषाः परिज्ञातृकलाप्यमूषाम् ॥ २२ ॥

कर्नाटकद्राविडकान्ध्रगौडलाटादिभाषाः परिशीलनेन ।
एलाप्रबन्धादिमपाटवं च तथा चतुःषष्टिकलाविवेकः ॥ २३ ॥

नृत्तादितौर्यत्रितयावबोधः शारीरसंपत्तिरपि प्रकृष्टा ।
द्रुते च मध्ये च विलम्बिते च लयत्रयेऽस्मिन्निपुणत्वशैली ॥ २४ ॥

चच्चत्पुटादावपि तालभेदे परिज्ञता किं च कलाप्रपञ्चे ।
देशीयकत्वादिविशेषवार्ता प्रतिक्षणं च प्रतिभान्वितत्वम् ॥ २५ ॥

श्रीरागमुख्येष्वपि देशिरागेष्वभिज्ञता किं च सभाजयश्च ।
रागादिदोषौघविवर्जनं च वाक्पादवैचित्र्यरसज्ञता च ॥ २६ ॥

परोक्तसंदर्भविवर्जनेन स्वतन्त्रसंदर्भविधौ पटुत्वम् ।
स्वतन्त्रमातुग्रथने पटुत्वं संवेदनं चापि पराशयस्य ॥ २७ ॥

एलाप्रबन्धादिनिबन्द्धृता च तल्लक्षणज्ञानमथाशुगीते ।
निर्माणशक्तिश्च पदान्तरोक्तिप्रगल्भतालप्तिषु चातुरी च ॥ २८ ॥

स्थानत्रयोद्यद्गमकप्रबोधः पूर्वापरोक्तार्थविनिश्चयश्च ।
गुणैरमीभिः सकलैरुपेतो वाग्गेयकारः पुनरुत्तमः स्यात् ॥ २९ ॥

धातौ परं पाटवमा स्वरौघसंदर्भपर्यायतया प्रतीते ।
वाग्गुम्भपर्यायतया प्रतीते मातौ च दक्षः किल मध्यमः स्यात् ॥ ३० ॥

यो वेत्ति धातुं च तथैव मातुं प्रबन्धनिर्माणविधौ च दक्षः ।
स्यान्मध्यमः सोऽप्यथ वा मनोज्ञगीतप्रबन्धाकलनेष्वदक्षः ॥ ३१ ॥

परोक्तगीतान्यवलोक्य वर्णनिवेशमात्रादपि मध्यमः स्यात् ।
निर्माति मातुं परमेकमेव धातुं न यो वेत्त्यधमः स एकः ॥ ३२ ॥

परोदितेष्वेव परं स्वराणां गुम्भेषु कुर्याद्यदि मातुमात्रम् ।
स्वरौघगुम्भं किल यो न वेत्ति स कुट्टिकारस्त्वधमाधमः स्यात् ॥ ३३ ॥

यो वेत्ति मार्गं च तथैव देशीं गांधर्वकोऽसौ प्रथितः पृथिव्याम् ।
देशीपरिज्ञानविवर्जनेन मार्गैकवेदी कथितः स्वरादिः ॥ ३४ ॥

एवं च सम्यक् प्रतिपादितेषु वाग्गेयकारादिगुणव्रजेषु ।
दोषांश्च तेषां प्रवदामि विद्यारण्याभिधश्रीचरणोपदिष्टान् ॥ ३५ ॥

ग्राम्योक्तिरेकाप्यपशब्द एकोऽप्यप्रस्तुतप्रस्तवनं तथा च ।
पदे च जाड्यं गमके तथैव प्रबन्धविज्ञानविहीनता च ॥ ३६ ॥

तत्तद्रसानामनुकूलरागविवेकहीनत्वमचातुरी च ।
गानक्रियानिर्वहणाद्यभावो न्यूनाधिकाज्ञत्वमपि क्रियादौ ॥ ३७ ॥

मन्द्रैकभावोऽपि तथा स्वरेषु गृहीतगीतस्य तथा विभङ्गः ।
संकेतितस्थायिपरिच्युतिश्च गानादिकालस्य विवर्जनं च ॥ ३८ ॥

दोषैरशेषैः कथितैः समेतो वाग्गेयकारः स तु गर्हणीयः ।
वाग्गेयकारस्य निरूप्य दोषाँल्लक्ष्मोच्यते केवलगायकस्य ॥ ३९ ॥

---

— ॥ गायकः ॥ —

मनोज्ञशारीरयुतोऽतिहृद्यशब्दश्च गीतग्रहमोक्षदक्षः ।
रागाङ्गभाषाङ्गघनक्रियाङ्गोपाङ्गादिरागेषु विचक्षणश्च ॥ ४० ॥

एलाप्रबन्धादिषु तानभेदे नानाविधालप्तिषु तत्त्ववेदी ।
मन्द्रादिमस्थानसमुद्भवेषु विना प्रयासं गमकेषु दक्षः ॥ ४१ ॥

स्वाधीनकण्ठोऽपि च सूडमुख्यतालप्रभेदाकलनप्रवीणः ।
स्वरश्रुतीनां परिमाणवेदी बहुप्रबन्धेषु जितश्रमश्च ॥ ४२ ॥

प्रबन्धभेदेषु पटुश्च शुद्धच्छायालगाख्येषु च काकुभेदे ।
स्थायेषु नानाविधतां गतेषु संचारदक्षः प्रथितश्च गीत्या ॥ ४३ ॥

क्रियापराख्यस्य विशेषणस्य निरूपितं श्रीचरणैः स्वरूपम् ।
शास्त्रानुसारेण च मार्गदेशीरागान् मुहुर्गायति युक्तियुक्तान् ॥ ४४ ॥

अशेषदोषौघविवर्जनेन क्रियापरोऽसौ कथितः किलेति ।
स्वायत्तभूतद्रुतमध्यमुख्यलयस्तथा धारणयान्वितश्च ॥ ४५ ॥

तथा दधानः सुघटत्वरूपविशेषणं गायकलालनीयम् ।
स्वरांश्च वर्णांश्च तथैव तालान् व्यक्तं लयं संघटयेत् पटुर्यः ॥ ४६ ॥

हृद्येन युक्तो ध्वनिना स विद्यारण्यार्यपादैः सुघटो निरुक्तः ।
तारश्रुतेरप्यनुतारभावाद्धीनेन किं चापसृतस्वरा या ॥ ४७ ॥

सुगानताया ध्वनिमभ्युपेता स्याद्धारणा श्रीचरणैर्निरुक्ता ।
परिस्फुरन्निर्जवनाद्युपेतः स्यादुत्तमो गायक इत्युपात्तः ॥ ४८ ॥

विशेषणं निर्जवनं यदेतद्विवेचितं श्रीचरणैर्विशिष्य ।
गानस्थितेश्वासमखण्डरूपं नाम्ना पुनर्निर्जवनं किलेति ॥ ४९ ॥

श्रोतुर्जनस्यापि च चित्तहारी गानेन वेगेन च किं च गाता ।
अयत्नरागातिशयप्रगीतिनाम्नि प्रवीणं भजनेऽतिमात्रम् ॥ ५० ॥

एवं विधानेकगुणप्रकर्षमुपेयिवानुत्तमगायकः स्यात् ।
विमुक्तदोषस्तु गुणैः कियद्भिः समन्वितो मध्यमगायकः स्यात् ॥ ५१ ॥

पूर्वोक्तदोषैः सहितोऽधमः स्यात्तदीयगानं शृणुयान्न जातु ।
आचक्ष्महे संप्रति गायकानां क्रमेण भेदान् सह लक्षणेन ॥ ५२ ॥

ते गायनाः पञ्चविधास्तु शिक्षाकारोऽनुकारो रसिकस्तृतीयः ।
उभावथो रञ्जकभावकौ चाप्यनूनशिक्षापटुरादिरेषाम ॥ ५३ ॥

परस्य यश्चानुकरोति गानरीतिं तमेतेष्वनुकारमाहुः ।
गाने रसाविष्टनिजान्तरङ्गं वदन्ति सन्तो रसिकं तमत्र ॥ ५४ ॥

स गायको रञ्जकनामधेयश्चित्तं जनानामनुरञ्जयेद्यः ।
गानेषु यश्चातिशयं करोति भणन्ति तं भावकनामधेयम् ॥ ५५ ॥

निरूपिता गायकपञ्चभेदा यथाक्रमं गायकबोधहेतोः ।
स्वरूपमेषामिह लक्षितानां संगीतसारे विशदीकृतं च ॥ ५६ ॥

द्रुतं च गीतं विषमं तथैव यः शिक्षते प्राञ्जलमानुगुण्यात् ।
शुद्धेऽथ वा सालगनाम्नि शिक्षाकारं तमेनं प्रवदन्ति सन्तः ॥ ५७ ॥

आरभ्य गीतं पुलकाङ्कितो यस्त्वानन्दबाष्पाञ्चितलोचनश्च ।
आचक्षते तं रसिकं च विद्यारण्याभिधश्रीचरणाग्रगण्याः ॥ ५८ ॥

व्यासक्तचित्तानपि देवदत्तान् गानेन सद्यो विमुखान् वितन्वन् ।
यो वादिसंवाद्यनुवादिभेदान् प्रकाश्य गायेत् स तु भावकः स्यात् ॥ ५९ ॥

गानं समाकर्णयतां जनानां चेतो विदित्वानुगुणं तु तस्य ।
रक्तिं परां यो रचयेच्च गानेष्विमं जना रञ्जकमीरयन्ति ॥ ६० ॥

निरूपिते गायकलक्षणेऽस्मिन् संख्याविशेषं कथयामि तेषाम् ।
एको भवेदेकलनामधेयो द्वितीययुक्तो यमलाभिधानः ॥ ६१ ॥

ततोऽधिकैः संमिलितो यदि स्याद् बृन्दाभिधानः स तु गायनोऽसौ ।
यदेतदाचक्ष्म च लक्ष्म हीदं माधुर्यधुर्यध्वनिमञ्जुलानाम् ॥ ६२ ॥

शोभाजुषां यौवनशालिनीनां तद्गायनीनां च समं समस्तम् ।

---

— ॥ गायकदोषाः ॥ —

निरूप्यते निन्दितगायनानां सर्वो विशेषः सह लक्षणेन ॥ ६३ ॥

संदश्य गाढं दशनान् प्रगायेन्निन्दन्ति संदष्टममुं महान्तः ।
नितान्तमुद्घुष्यति नीरसं यस्तमेतमुद्घुष्टमुदीरयन्ति ॥ ६४ ॥

सीत्कृत्य सीत्कृत्य च यस्तु गायेत् सीत्कारनामेति विनिन्द्यतेऽसौ ।
भयान्वितो गायति यः स भीतो यः सत्वरं गायति शङ्कितोऽसौ ॥ ६५ ॥

स्वरे च गात्रेऽपि च कम्पवान् यः स्वभावतो गायति कम्पितोऽसौ ।
उद्घाट्य यो गायति वक्त्रमुग्रं करालिनं तं कथयन्ति सन्तः ॥ ६६ ॥

न्यूनातिरिक्तश्रुतिभिः समेतं गायेत् स्वरं यः कपिलस्तु (विकलस्तु) सोऽयम् ।
क्रूरारवं काकवदेव गायेत् काकी भवेद्गायन एष नाम्ना ॥ ६७ ॥

उल्लङ्घ्य यो गायति तालरीतिं वितालनामानममुं वदन्ति ।
यश्छागरीत्या च हनुं करोति तमुद्भटं छागवदेव निन्द्यम् ॥ ६८ ॥

ग्रीवां निजां संततमुन्नमय्य गाता जनः स्यात् करभाभिधानः ।
यो दृश्यते यत्नवशेन गायन् गले च फाले च मुखे सिरालः ॥ ६९ ॥

समन्दहासं सकलैश्च लोकैर्विनिन्द्यतेऽसौ किल जोम्बकाख्यः ।
अलाबुसारूप्यसमेतफुल्लगल्लस्तु यो गायति तुम्बकी सः ॥ ७० ॥

वक्रीकृतग्रीवतया तु गायेद्वक्रीति संज्ञां लभते स निन्द्याम् ।
सलक्षणत्यागपुरःसरं यो गीतं च गात्रं च मुहुः प्रसार्य ॥ ७१ ॥

गायेत् प्रसारीति विगर्हणीयां लभेत संज्ञां स तु गायकश्च ।
निमील्य यो गायति नेत्रयुग्मं निमीलकः स्यात् स हि निन्दनीयः ॥ ७२ ॥

यदा भवेन्नीरसमेव गानं तदा तमाहुर्विरसाभिधानम् ।
वर्ज्यस्वरान् गायति यस्तु रागेष्वपस्वरं तं कथयन्ति निन्द्यम् ॥ ७३ ॥

अव्यक्तवर्णोऽपि सगद्गदो यो गायेत्तमव्यक्तमुदीरयन्ति ।
आरभ्य मन्द्रस्वरमेव गातुमातारमारोढुमशक्नुवन् यः ॥ ७४ ॥

विवक्षितस्थानविवर्जनेन स्थानान्तरं प्राप्य पुनश्च गायेत् ।
तमव्यवस्थं सकला वदन्ति विशिष्य लोकेषु विनिन्दनीयम् ॥ ७५ ॥

छायालगं शुद्धमथापि रागं यो मेलयन् गायति मिश्रकः स्यात् ।
आरभ्य रागेण हि रागमन्यं यो मिश्रयेत् सोऽपि च मिश्रकः स्यात् ॥ ७६ ॥

छायामुपक्रम्य परे तु रागे च्छायान्तरं गायति यस्तु गाता ।
स बुद्धिहीनोऽनवधाननामा विगर्हणीयः स तु गायनौघैः ॥ ७७ ॥

गेयं यदा नासिकया करोति तं सानुनासिक्ययुतं वदन्ति ।
इतीरिता गायकदोषभेदाः पञ्चोत्तरा विंशतिरत्र सम्यक् ॥ ७८ ॥

---

## — ॥ शब्दभेदाः ॥ —

यो हृद्यशब्दः स तु गायनः स्यादितीरितं लक्ष्म निरूपितं प्राक् ।
स्वशब्दरूपेऽवगते च पश्चात्तद्व्यक्तभेदाः सुगमा भवन्ति ॥ ७९ ॥

अतश्च शब्दानिह सौकुमार्यमाधुर्ययुक्तान् प्रतिपादयामः ।
मनोज्ञशब्दादिविशेषयुक्तः स्यादुत्तमो गायक इत्यवोचम् ॥ ८० ॥

तच्छब्दरूपं प्रथमं निरूप्य तस्यापि भेदः प्रतिपाद्यतेऽथ ।
अन्योन्यसंश्लेषवशेन तेषां त्रिंशत्प्रभेदान् प्रतिपादयामः ॥ ८१ ॥

शब्दो भवेदत्र तु सौकुमार्यमाधुर्ययुक्तो ध्वनिरेव नान्यः ।
चतुर्विधं तं समुदीरयन्ति स खावुलो नारठजोम्बकौ च ॥ ८२ ॥

उक्तत्रयाणां परिमिश्रणेन तुर्यो भवेन्मिश्रकनामधेयः ।

---

— ॥ खावुललक्षणम् ॥ —

तत्रोच्यते खावुललक्षणं प्राक् श्लेष्मोद्भवं संभृतसौकुमार्यम् ॥ ८३ ॥

माधुर्यशाली खलु खावुलाख्य इतीरितं गायकसंप्रदायात् ।
आढेल्लसंज्ञां लभते तु मन्द्रमध्योभयस्थानगतः स एव ॥ ८४ ॥

पित्तोद्भवो नारठसंज्ञ एष स्थानत्रयेऽप्यन्तरुपेतसारः ।
गाम्भीर्यवान् संततगानयुक्तो भवेद् द्वितीयोऽपि स एष शब्दः ॥ ८५ ॥

वातोद्भवो जोम्बकनामकोऽन्तर्निःसारकश्चित्रककाण्डवः स्यात् ।
घनत्वराहित्यवशेन सर्वैरापाततश्चाप्यवगम्यमानः ॥ ८६ ॥

स्निग्धत्वहीनोऽपि च रासभोष्ट्रनिनादवत् स्थूलतया प्रतीतिम् ।
उक्तत्रयाणामपि धर्मयोगे तं गायनं मिश्रमुदीरयन्ति ॥ ८७ ॥

रूक्षत्वयुक्तः खलु जोम्बकोऽत्र स्निग्धत्वशाली खलु खावुलश्च ।
कथं तयोर्मिश्रणरूपवार्त्ता ह्यश्वत्वगोत्वादिकवद्विरोधात् ॥ ८८ ॥

अत्रोच्यते मिश्रणमत्र सम्यग्विरुद्धधर्मादिविवर्जनेन ।
स्थौल्यादिमाधुर्यगुणादियोगाद्युक्तं भवेदित्युदितं प्रवीणैः ॥ ८९ ॥

एतेन नाराठकजोम्बयोश्च घनध्वनिः सारगुणत्वहान्या ।
गम्भीरिमोच्चैःस्वरतागुणाभ्यां युक्तं भवेन्मिश्रणमित्युपेयम् ॥ ९० ॥

विरोधशङ्कां विनिवार्य सम्यङ्निरूपयामस्त्वथ मिश्रभेदान् ।
नाराठकस्यापि च खावुलस्य योगाद्भवेन्मिश्रकभेद एकः ॥ ९१ ॥

तथैव नाराठकजोम्बयोश्च संबन्धतः स्यादपरस्तु भेदः ।
तथा भवेत् खावुलजोम्बयोश्च संमेलनाद्भेद इहापरोऽपि ॥ ९२ ॥

नाराठकस्यापि च खावुलस्य स्याज्जोम्बकस्यापि च मेलनेन ।
अन्योऽपि भेदः कथितस्तु तेषु निःसारतारूक्षतयोरभावात् ॥ ९३ ॥

नाराठकस्यापि च जोम्बकस्य स्यादुत्तमो मिश्रकभेद एव ।
योगे भवेत् खावुलजोम्बयोश्च निःसारतादोषसमन्वयेन ॥ ९४ ॥

स्यान्मध्यमो नारठजोम्बयोस्तु निःसारतारूक्षतयोः प्रवेशात् ।
योगप्रतीतस्त्वधमो निरुक्तो नानागुणामिश्रणमिश्रणाभ्याम् ॥ ९५ ॥

भवन्ति भेदा बहवः क्रमेण तेषां प्रसिद्धान् कथयामि भेदान् ।
मिश्रप्रभेदाः खलु खावुलादेर्निरूपिता गायकबोधहेतोः ॥ ९६ ॥

अतः परं तद्गुणयोगजन्यान् कांश्चित् प्रभेदानथ वर्णयामः ।
स्निग्धत्वमाधुर्यघनत्वयुक्तो भेदो भवेत् प्राथमिकस्तु तेषु ॥ ९७ ॥

स्निग्धत्वभाक्कोमलताघनत्वयुक्तो द्वितीयः कथितः प्रभेदः ।
त्रिस्थानकव्याप्तियुतो मृदुत्वमाधुर्यशाली कथितस्तृतीयः ॥ ९८ ॥

त्रिस्थानकव्यापनवान् मृदुत्वगाम्भीर्ययुक्तोऽभिहितस्तुरीयः ।
त्रिस्थानकव्याप्तियुतो घनत्वस्निग्धत्ववान् मार्दवभाक् परः स्यात् ॥ ९९ ॥

त्रिस्थानकव्याप्तियुतो घनत्वमाधुर्ययुक्तो मृदुलस्तु षष्ठः ।
स्निग्धत्वमाधुर्यमृदुत्वयुक्तत्रिस्थानकव्याप्तियुतोऽपरः स्यात् ॥ १०० ॥

स्निग्धो गभीरो मधुरो घनश्च त्रिस्थानकव्याप्तियुतोऽष्टमः स्यात् ।
स्निग्धो घनः कोमलको गभीरो लीनोऽखिलस्थानगतस्तथान्यः ॥ १०१ ॥

स्थानत्रयव्याप्तियुतो गभीरः स्निग्धत्वमाधुर्ययुतश्च सान्द्रः ।
लीनस्तथा कोमलतासमेतो मिश्रप्रभेदो दशमो निरुक्तः ॥ १०२ ॥

इति क्रमात् खावुलमिश्रशब्दनाराठभेदात् कथिता दशैते ।
वक्ष्यामहे खावुलमिश्रजोम्बभेदानिदानीं षडपि क्रमेण ॥ १०३ ॥

निःसारताकोमलतासमेतः स्निग्धत्ववान् प्राथमिकोऽत्र भेदः ।
माधुर्यरूक्षत्वमृदुत्वयुक्तो भेदो द्वितीयः कथितस्तदीयः ॥ १०४ ॥

निःसारताभाङ् मृदुतासमेतः स्निग्धत्ववानुच्चरतस्तृतीयः ।
निःसारताकोमलतासमेतः स्निग्धत्ववान् स्थौल्ययुतस्तुरीयः ॥ १०५ ॥

स्निग्धत्ववानुच्चरतोऽप्यसारः स्यात् कोमलस्थौल्ययुतोऽपरः स्यात् ।
रूक्षश्च लीनो मधुरोऽप्यसारः स्यात् कोमलः षष्ठ इह प्रभेदः ॥ १०६ ॥

इतीरिताः खावुलजोम्बमिश्रभेदाः षडेते पुनरानुपूर्व्यात् ।
वक्ष्यामि नाराठकमिश्रजोम्बभेदानिदानीं षडनुक्रमेण ॥ १०७ ॥

स्थानत्रयव्याप्तियुतो घनश्च रूक्षश्च तेषु प्रथमः प्रभेदः ।
घनत्वगाम्भीर्ययुतश्च रूक्षस्तेषु प्रभेदेषु भवेद्द्वितीयः ॥ १०८ ॥

स्थूलश्च लीनश्च तथैव रूक्षो निःसारतावान् कथितस्तृतीयः ।
स्थूलो घनश्चोच्चरतश्च लीनस्तेषु प्रभेदः कथितस्तुरीयः ॥ १०९ ॥

लीनो गभीरश्च घनश्च रूक्षः स्थानत्रयव्याप्तियुतोऽपरः स्यात् ।
लीनश्च रूक्षश्च भवेदसारस्त्रिस्थानगः स्थौल्ययुतश्च षष्ठः ॥ ११० ॥

क्रमेण नाराठकमिश्रजोम्बभेदाः षडेते कथिताः किलैवम् ।
द्वयोर्गुणानामिह मेलनेन द्वाविंशतिश्चाभिहिताः प्रभेदाः ॥ १११ ॥

अथ त्रयाणां गुणमिश्रणेन भेदानिदानीं कथयामि चाष्टौ ।
स्थानत्रयव्याप्तियुतस्तथैव स्निग्धोऽप्यसारः प्रथमः प्रभेदः ॥ ११२ ॥

घनो गभीरो मधुरश्च रूक्षो मृदुस्तथैवोच्चरतो द्वितीयः ।
लीनो घनश्चोच्चरतश्च पीनः स्निग्धस्तथा कोमलतायुतोऽन्यः ॥ ११३ ॥

स्थानत्रयव्याप्तियुतश्च लीनो निःसारताकोमलतासमेतः ।
स्निग्धत्ववानुच्चरतश्च पीनस्तेषु प्रभेदः कथितस्तुरीयः ॥ ११४ ॥

स्थानत्रयव्याप्तियुतस्तथैव लीनश्च पीनो मधुरश्च रूक्षः ।
निःसारभावोच्चरतत्वयुक्तो भेदो निरुक्तः किल पञ्चमो यः ॥ ११५ ॥

स्निग्धत्वमाधुर्ययुतो गभीरस्त्रिस्थानकव्याप्तियुतो घनश्च ।
लीनत्वभागुच्चरतस्तथैव स्यात् कोमलः षष्ठ इहोपदिष्टः ॥ ११६ ॥

माधुर्यगाम्भीर्ययुतो मृदुश्च स्थानत्रयव्याप्तियुतश्च लीनः ।
निःसारभावोच्चतरत्वयुक्तो रूक्षो निरुक्तः किल सप्तमोऽयम् ॥ ११७ ॥

लीनत्वमाधुर्यघनत्वयुक्तस्त्रिस्थानभागुच्चरतश्च रूक्षः ।
पीनत्वभाक्कोमलतासमेतः स्यादष्टमोऽयं कथितस्तु भेदः ॥ ११८ ॥

इत्थं त्रयाणां गुणमिश्रणेन निरूपितास्त्वष्टविधाः प्रभेदाः ।
मिश्रप्रभेदा गुणयोगजानां त्रिंशन्निरुक्ताः सकला मिलित्वा ॥ ११९ ॥

अन्येऽपि सूक्ष्माः किल संभवन्ति भेदा गुणानामिह मेलनेन ।
नानाविधास्ते किल विस्तरस्य प्रसङ्गभीत्या न मयोपदिष्टाः ॥ १२० ॥

## — ॥ शब्दगुणः ॥

नानाप्रभेदेन निरूपितस्य शब्दस्य वक्ष्यामि गुणान् क्रमेण ।
मृष्टो मतः श्रोतृसुखावहः स्यात् क्रमेण तेष्वादिमभेदमाहुः ॥ १२१ ॥

स्थानत्रये स्यादविकारभावो माधुर्ययुक्तं तदिदं द्वितीयम् ।
प्रौढस्तथा स्नेहयुतो न चातिस्थूलो घनो नातिकृशः ससारः ॥ १२२ ॥

चेहालनामा कथितस्तृतीयः स शक्यते संततमङ्गनाभिः ।
चेहालगानं तु भवेच्च पुंसां निरन्तरं यौवनसंश्रितानाम् ॥ १२३ ॥

अस्थानता केनचिदेव कण्ठे विकुण्ठिते तद्गुणरोधकेन ।
स्थानत्रयेऽपि च्छविरक्तिमुख्यैर्गुणैरुपेतः किल निर्विवादः ॥ १२४ ॥

त्रिस्थाननामानमुदीरयन्ति चतुर्थमेनं तु गणे प्रवीणाः ।
यश्चेह चेतःसुखदानदक्षः सुखावहो नाम स पञ्चमः स्यात् ॥ १२५ ॥

यः स्थौल्ययुक्तः प्रचुरः स मधुरो यः कोकिलालापसमानभावः ।
यः सौकुमार्यं लभते च सोऽयं स्यात् सप्तमः कोमलनामधेयः ॥ १२६ ॥

यः श्रूयते च प्रबलत्वयुक्तः स गाढनामा पुनरष्टमः स्यात् ।
दूरेऽपि यो रञ्जकतामुपेत्य निशम्यते श्रावकमेनमाहुः ॥ १२७ ॥

अहो कथं गायति सोऽयमित्थं कारुण्यकारी करुणो ध्वनिः स्यात् ।
आकर्ण्यते दूरगतोऽपि योऽन्तःसारस्तमेनं घनमामनन्ति ॥ १२८ ॥

स्निग्धो भवेद्रूक्षतया विहीनः श्लक्ष्णस्त्वविच्छिन्नतयानुवर्ती ।
यस्तैलधारेव स एव यस्तु संपादयेच्छ्रोतृजनस्य रागम् ॥ १२९ ॥

तं रक्तिमन्तं प्रवदन्ति सन्तश्चतुर्दशं गायकसंप्रदायात् ।
यत्रोज्ज्वलं तेन जनै रसज्ञैः प्रतीयते स च्छविमानिहोक्तः ॥ १३० ॥

एवं गुणाः पञ्चदशोपदिष्टा दोषानमीषां कथयामि चाष्टौ ।
स्निग्धत्वहीनः कथितश्च रूक्षो यो भग्नवत् स्यात् स्फुटितं तमाहुः ॥ १३१ ॥

असारकश्चित्रककाण्डवद्यो निःसारमेनं निपुणा भणन्ति ।
यः काककाकोलनिषादतुल्यस्तं काकिनं दोषमुदाहरन्ति ॥ १३२ ॥

स्थानत्रयव्याप्तियुतोऽपि यस्तु माधुर्यहीनः स तु कोणिनामा ।
अतिप्रयासेन च मन्द्रतारव्याप्तस्तु यः स्यात् स तु कोटिनामा ॥ १३३ ॥

सूक्ष्मः कृशः स्याद्रथ यः करोऽस्वरत्वानुकारी स तु भग्नसंज्ञः ।
इतीरिताः शब्दगताः किलाष्टौ दोषा मनीषानुगुणाः क्रमेण ॥ १३४ ॥

---

— ॥ शारीलक्षणम् ॥ —

शब्दस्वरूपं प्रतिपादितेऽथ शारीरलक्ष्म प्रतिपादयामः ।
अभ्यासमात्रेण न लभ्यमेतत् किंत्वीश्वरस्यैव भवेत् प्रसादात् ॥ १३५ ॥

विद्याप्रदानेन तपोविशेषैर्भक्त्याथवा शैलसुताप्रियस्य ।
प्रभूतभागस्य च वैभवेन मनोज्ञशारीरमवाप्यते तत् ॥ १३६ ॥

अभ्याससाध्या खलु सर्वविद्या शारीरमात्रे नियमश्च नायम् ।
दृष्टः क्वचिद्गायनगायिकादौ शारीरकेऽभ्यासत एव नाशः ॥ १३७ ॥

तस्माद्विनाभ्यासममुष्य रागप्रकाशने यः पटिमा ध्वनेः स्यात् ।
शारीरसंज्ञां लभते स एष समं शरीरेण समुद्भवेन ॥ १३८ ॥

वक्ष्यामि शारीरगुणान् क्रमेण व्याप्तिस्तु पर्यायतयास्ति तारः ।
अनुध्वनिः स्यादनुराग उक्तो माधुर्यरूपं रमणीयतैव ॥ १३९ ॥

रक्तिस्तथा रञ्जकतोपदिष्टा तथैव गाम्भीर्यमगाधता च ।
तत्सौकुमार्यं खलु मार्दवात् स्याद्घवेद्घनत्वं किल सारयोगः ॥ १४० ॥

कान्तिश्छविः स्यात् प्रथमोपदिष्टो गुणैः सुशारीरमुपेतमेतैः ।
निरूप्य शारीरगुणान् क्रमेण दोषानमुष्य प्रतिपादयामः ॥ १४१ ॥

आदावनुध्वानविहीनभावो रक्तेरभावः खलु रूक्षता च ।
निःसारता विस्वरता च काकिभावश्च मन्द्रादिपरिच्युतिश्च ॥ १४२ ॥

कार्श्यं तथा कर्कशतेति दोषैर्युक्तं कुशारीरमुदीरयन्ति ।
चतुर्विधं श्रीचरणैर्निरुक्तं शारीरमेतत् प्रविभज्य सम्यक् ॥ १४३ ॥

आद्यं कडालं मधुरं द्वितीयं हि यौचलं तत्र मतं तृतीयम् ।
भवेत्तुरीयं बहुलं च तेषां लक्ष्माणि वक्ष्ये तदनु क्रमेण ॥ १४४ ॥

स्थानत्रये स्यात् कठिनं कडालं मन्द्रे च मध्ये मधुरत्वयोगात् ।
शारीरमुक्तं मधुरं द्वितीयं तारे च रागस्य विवेचकं च ॥ १४५ ॥

स्याद्यौचलं तत्र मतं तृतीयं यत्रोक्तशारीरगुणा विमिश्राः ।
भवेत्तुरीयं बहुलं तथा हि भवेत् कडालं मधुरं किलाद्यम् ॥ १४६ ॥

सयौचलं स्यान्मधुरं द्वितीयं कडालयुग्यौचलमद्वयदत्र ।
योगे त्रयाणां च मतस्तुरीयस्त्वेवं च शारीरमिदं चतुर्थम् ॥ १४७ ॥

---

— ॥ गमकाः ॥ —

शारीरभेदं प्रथमं निरूप्य निरूपयामो गमकान् क्रमेण ।
यः श्रोतृचित्तस्य सुखं तनोति स्वरस्य कम्पो गमकः स एव ॥ १४८ ॥

व्युत्पत्तिरस्याभिहिता च पार्श्वदेवेन संगीतविशारदेन ।
स्वीयश्रुतिस्थानसमुद्भवां च च्छायां तथान्यश्रुतियोगभाजम् ॥ १४९ ॥

यत्तु स्वरूपं गमयेत् स एव निरूपितः स्याद्गमकाभिधानः ।
वक्ष्यामहेऽथो गमकस्य भेदानाद्यः प्रतीतस्तिरुपाभिधानः ॥ १५० ॥

ततो द्वितीयः स्फुरितस्तृतीयः स्यात् कम्पितो लीन इहापरः स्यात् ।
आन्दोलितोऽन्यश्च वलिस्तु षष्ठस्त्रिभिन्ननामापि च सप्तमः स्यात् ॥ १५१ ॥

ततः परं स्तः कुरलाहतौ द्वावुल्लासितः प्लावितहुम्भितौ च ।
स्यान्मुद्रको नामितमिश्रितौ चेत्येवं मताः पञ्चदशास्य भेदाः ॥ १५२ ॥

क्रमेण चैषामथ लक्षणानि वक्ष्यामहे गायकसंप्रदायात् ।
अत्यल्पतावड्डमरुप्रघोषकम्पानुकारात् कमनीयरूपः ॥ १५३ ॥

द्रुतस्य तुर्यांशजवेन युक्तः स्वरस्य कम्पस्तिरुपाभिधानः ।
अन्यो द्रुतस्यापि तृतीयभागवेगेन युक्तः स्फुरितो भवेत् सः ॥ १५४ ॥

द्रुतार्धमानेन जवेन युक्तः स्वरस्य कम्पः खलु कम्पिताख्यः ।
तथैव पूर्णद्रुतमानयुक्तं स्वरस्य कम्पं खलु लीनमाहुः ॥ १५५ ॥

द्रुतेन मध्येन विलम्बितेन विलीयते येन घनप्रमाणः ।
आन्दोलिताख्यः स्वरकम्पयुक्तो लघुप्रमाणस्वरकम्पनेन ॥ १५६ ॥

नानाविधो रागगतिप्रभिन्नवेगस्त्रिभिन्नो भवति स्वराणाम् ।
कम्पे वलिः स्यादथ मन्द्रमध्यतारेष्वविश्रान्तघनस्वरः स्यात् ॥ १५७ ॥

कण्ठोद्भवः कोमल एव तत्र वलिः किल स्यात् कुरलाभिधानः ।
अग्र्यं स्वरं प्राप्य सहाहतेन निवर्तनेनाहत इत्युपात्तः ॥ १५८ ॥

उल्लासिताख्यः स भवेत् क्रमेणोत्तरोत्तरान् गच्छति यत् स्वरौघान् ।
प्लुतस्य मानेन च कम्पनं तु स्यात् प्लावितो गायकसंप्रदायात् ॥ १५९ ॥

स हुम्फितः स्याद्गमको मनोज्ञहुङ्कारगर्भं स्वरकम्पनं स्यात् ।
दन्तच्छदद्वन्द्वविमुद्रणातः स्वरस्य कम्पः खलु मुद्रकाख्यः ॥ १६० ॥

मन्द्रे स्वराणामवरोहणेन स्वरस्य कम्पात् किल नामिताख्यः ।
एषां पुनर्लक्षणमिश्रणेन मिश्रो भवेन्नैकविधः प्रभेदः ॥ १६१ ॥

निरूपितानां गमकावलीनां वागेति संज्ञान्तरमामनन्ति ।
उक्तेषु तस्माद्गमकेषु तेषु वागस्वरूपं च निरूपितं स्यात् ॥ १६२ ॥

अथापि वागस्य पृथक्स्वरूपं स्थायप्रसङ्गे कियतः प्रवक्ष्ये ।

---

॥ स्थायाः ॥

निरूप्य तान् पञ्चदश प्रभेदान् शास्त्रानुसाराद्गमकान् क्रमेण ॥ १६३ ॥

षडुत्तरां तां नवतिं वदामः स्थायान् मतङ्गादिमतानुसारात् ।
स्थायस्तु रागावयवः प्रतीतः सामान्यतो लक्षणमेतदेषाम् ॥ १६४ ॥

विशेषतः स्थायनिरूपणं च तेषां विभागं च ततो विधास्ये ।
यस्मिन् स्वरे स्थायविशेषणः स्यात्तत्रैव भूयोग्रहणे च तस्य ॥ १६५ ॥

तदादिमस्थाय इति प्रसिद्धिस्तं शब्दसंबन्धिनमामनन्ति ।
करस्थमुक्ताफलवच्च ढालः शश्वत् स्वराणां चलनात्मको यः ॥ १६६ ॥

मुक्ताफलाभस्वरसंनिवेशे ढालश्च सर्वानुभवैकसिद्धः ।
एतेन ढालेन युतांस्तु ढालस्थायान् द्वितीयान् प्रविदुस्ततज्ज्ञाः ॥ १६७ ॥

यत्सौकुमार्येण युताः स्वराणां भवत्यनुच्चारणमेव शश्वत् ।
एषा निरुक्ता लवनी च वर्णे संचारिवर्णे स्थिरकम्पनं यत् ॥ १६८ ॥

निरूप्यते सा वहनी वहन्याः स्थायांश्चतुर्थान् प्रविदुः प्रवीणाः ।
विशेषणे सा वहनी द्वितीया चालप्रिगीतिप्रविभागभेदात् ॥ १६९ ॥

पुनश्च सैषा वहनी द्विधा स्यात् स्थिरा च वेगाढ्यतया प्रतीता ।
देहस्थिता सा वहनी त्रिधा स्याद्धृद्या च कण्ठ्या च तथा शिरस्या ॥ १७० ॥

हृद्याभिधाना वहनी द्विधा स्यात् फुल्ला द्वितीया प्रथमा तु खुत्ता ।
यत्र स्वराश्चान्तरिव प्रविष्टाः खुत्ताभिधां तां वहनीं वदन्ति ॥ १७१ ॥

यत्क्वाथितक्षीरमिवोपरि स्याद्विजृम्भमाणं स्वरजातमस्याः ।
उत्फुल्लकाख्यां वहनीमुशन्ति वलिश्च सा स्याद्वहनीवदेव ॥ १७२ ॥

एवंविधा सा वहनीति येषु स्थाया वहन्याः परिकीर्तितास्ते ।
अन्या वहन्यस्तु न लक्षिता या उच्चारणेन स्फुटतां प्रयान्ति ॥ १७३ ॥

वक्ष्यामहे संप्रति वाद्यशब्दस्थायस्वरूपं सह लक्षणेन ।
वाद्यस्य शब्दे तु निरूपिते तत्स्थायस्वरूपं तु निरूपणीयम् ॥ १७४ ॥

वाद्यस्य शब्देष्वपि वाद्यपाटाक्षराणि ते स्युः टगणादिरूपाः ।
ते रागसंश्लेषविशेषभाजः स्थाया मतास्त्रियुतवाद्यशब्दाः ॥ १७५ ॥

वीणादियन्त्रेषु विभान्ति यन्त्रस्थायास्तु षष्ठाः परिकीर्तितास्ते ।
स्थायान्निरूप्याथ षडुक्तभेदांश्छायादिमांस्तान् प्रतिपादयामः ॥ १७६ ॥

छायापदेनाभिहिताश्च चक्रास्ते षड्विधा गायकसंप्रदायात् ।
स्वरादिकाकुश्च भवेदिहाद्या ततो द्वितीया खलु रागकाकुः ॥ १७७ ॥

ततस्तृतीया कतिथान्यरागकाकुश्च तुर्या त्वथ देशकाकुः ।
क्षेत्रस्य काकुः खलु पञ्चमी स्यात् षष्ठी भवेदत्र च यन्त्रकाकुः ॥ १७८ ॥

स्वरस्य षड्जस्य चतुःश्रुतेर्यच्छ्रुतिं यदा स्वीकुरुते निषादः ।
छायां च षड्जस्य भजेत्तदानीमेवं निरुक्तः स्वरकाकुराद्यः ॥ १७९ ॥

छायात्र रागस्य निजं स्वरूपं सा रागकाकुः कथिता द्वितीया ।
रागान्तरस्यापि च यत् स्वरूपं रागान्तरे तत् प्रकटीभवेच्चेत् ॥ १८० ॥

यैवान्यरागस्य भवेच्च काकुः सैषा तृतीया खलु काकुरुक्ता ।
देशेषु देशेषु च गात्रभेदादेकस्य रागस्य भवेच्च भेदः ॥ १८१ ॥

सा देशकाकुः कथिता चतुर्थी देशप्रभेदादुपलभ्यते च ।
तते च वाद्ये सुषिरे च यन्त्रे छायात्र रागस्य तु दृश्यते या ॥ १८२ ॥

यत्र प्रभेदेऽपि समानरूपा सा यन्त्रकाकुः कथितात्र षष्ठी ।
छायास्वरूपे प्रतिपादिते तद्भेदाश्च सर्वेऽपि च तत्र चोक्ताः ॥ १८३ ॥

छायां परस्याप्यनुसृत्य ये तु स्थायाः प्रवृत्तास्तु तदादिमास्ते ।
वर्णत्रयेऽपि स्वरकम्पनाख्या निरूपिता या वहनी तु तस्याम् ॥ १८४ ॥

द्वित्रस्वरोल्लङ्घनतः प्रवृत्तः स्थायो भवेत् स्वस्वरलङ्घिताख्यः ।
स प्रेरितैरूर्ध्वमधश्च तिर्यक्स्वरैर्भवेत् प्रेरितनामकोऽसौ ॥ १८५ ॥

पूर्णश्रुतिर्यत्र विभाति तारस्थानेऽपि सूच्यग्रवदेव तीक्ष्णा ।
स्वरैर्युतं तन्निगदन्ति सूक्ष्मस्थायाभिधानं दशमं प्रवीणाः ॥ १८६ ॥

दशोत्थसंकीर्णतया प्रसिद्धाः स्थाया निरुक्ताः सह लक्षणेन ।
स्थायान् वदामो गुणभेदभिन्नान् संकीर्णरूपान् सह लक्षणेन ॥ १८७ ॥

प्रयत्नतो रञ्जनतो विशेषाधानं तु रागे भजनं गुणं स्यात् ।
तत्संयुता ये भजनादिमास्ते स्थाया मता गायकसंप्रदायात् ॥ १८८ ॥

ये स्थापयित्वा च पुनः पुनश्च स्वरानशेषानपि कल्पयन्ति ।
स्यात् स्थापना तन्मिलिता भवन्ति स्थायास्तदाद्याः कथिताः क्रमेण ॥ १८९ ॥

या मत्तदन्तावलवद्गभीरगतिप्रसिद्धा किल गीतिमार्गे ।
सैषा गतिस्तत्सहिता भवेयुः स्थाया गते रक्तिनिदानभूताः ॥ १९० ॥

स्निग्धो बहुर्यो मधुरस्तथैव स्थूलो ध्वनिः स्यात् कथितः सनादः ।
तत्संयुता येऽत्र भवन्ति नादस्थायाश्च ते गायकसंप्रदायात् ॥ १९१ ॥

येषु स्वनैर्दीर्घतराः प्रयोगाः स्थाया ध्वनेस्ते कथिताः क्रमेण ।
समन्विता ये सुकुमारकान्त्या स्थायाश्छवेस्ते पुनरानुपूर्व्यात् ॥ १९२ ॥

गाने तु यो रञ्जकताविशेषः श्रोतॄन् समस्तान् मुदितान् करोति ।
ते रक्तिसंबन्धतया प्रतीताः स्थाया निरुक्ताः खलु सप्तमाश्च ॥ १९३ ॥

उच्चारणं यत्र जवात् स्वराणां स्थायास्त एते द्रुतशब्दपूर्वाः ।
ध्वनेर्घनत्वेन च जायमानमुच्चारणं स्याद् भृतशब्दवाच्यम् ॥ १९४ ॥

अतो भवेयुर्भृतशब्दपूर्वाः स्थायाः समस्ता इति वेदितव्याः ।
अथांशसंबन्धितया प्रतीतान् स्थायान् वदामः सह लक्षणेन ॥ १९५ ॥

अंशस्वरूपेऽवगते च पश्चात् स्थायास्तदीया इति वेदितव्याः ।
अतोंऽशमादौ प्रतिपाद्य योंऽशो रागान्तरस्यावयवोऽन्यरागे ॥ १९६ ॥

अंशस्य को भेद इहान्यरागकाकोः सकाशादिति चेद्वदामः ।
अंशो भवेत् सप्तविधस्तु सोऽयमाद्यो भवेत्तत्र च कारणांशः ॥ १९७ ॥

भवेच्च कार्यांश इह द्वितीयस्ततः सजातीयपदादिमोंऽशः ।
भवेच्चतुर्थः सदृशांशनामा स्यात् पञ्चमश्चासदृशांश एव ॥ १९८ ॥

मध्यस्थपूर्वोऽपि भवेत्ततोंऽशस्त्वंशांशनामापि च सप्तमः स्यात् ।
रामक्रियायामपि कार्यरागे कोलाहलाख्यस्य च कारणस्य ॥ १९९ ॥

ततोंऽशभावो भवतीति चात्र स्यात् कार्यरागे किल कारणांशः ।
स्यात् कारणे भैरवनाम्नि रागे कार्यस्य भैरव्यभिधस्य योंऽशः ॥ २०० ॥

अतश्च कार्यांशमसुं वदन्ति ह्येवंविधेष्वेष्वपि चोहनीयः ।
वराटिकायुक्ततयाष्टभेदे गौलत्वयोगिन्यपि सप्तभेदे ॥ २०१ ॥

सामान्यजातेर्भवतीह योंऽशो भवेत् सजातीयपुरःसरोंऽशः ।
गाने कृते श्रोतृसुखैकरूप्यं नट्टावराट्योस्तु यथा विशेषात् ॥ २०२ ॥

प्रतीयतेऽसौ सदृशांशनामा ग्राह्यस्त्वयं श्रोतृजनावधानात् ।
वेलावलीगुर्जरिकाख्ययोश्च सादृश्यसंबन्धविवर्जनेन ॥ २०३ ॥

सादृश्यतद्भिन्नविवर्जनेन योंऽशः स मध्यस्थपदादिमः स्यात् ।
अंशेषु तेष्वेव हि लक्षितेषु त्वंशान्तरं चेत् प्रविशेत्तमेव ॥ २०४ ॥

अंशांशनामानमुदीरयन्ति त्वंशा इमे सप्तविधा निरुक्ताः ।
एतादृशांशाः खलु यत्र तेंऽशाः स्थाया निरुक्ताः सह लक्षणेन ॥ २०५ ॥

यदा तु गाता खलु सावधानोऽप्यासङ्गलेशेन विवर्जितोऽभूत् ।
यो गीयते स त्ववधानजः स्यात् स्थायस्तु सोऽयं नवमोऽवगम्यः ॥ २०६ ॥

आधानबाहुल्यवशेन गानं भवत्यपस्थानतया प्रतीतम् ।
स्थायास्त्वपस्थानभवास्त एते तथाह्यपस्थानसमन्विताश्च ॥ २०७ ॥

न्यूनाधिकत्वोभयवर्जनेन गानं तु यत्सा निकृतिर्निरुक्ता ।
स्थाया निकृत्या सहितास्तदाद्या भवन्ति तेषां धुरि वेदितव्यम् ॥ २०८ ॥

गानेन कुर्यात् करुणां नृणां ये स्थाया निरुक्ताः करुणादिमास्ते ।
नानाविधां रीतिमुपयिवांसः स्थायास्ततस्ते विविधत्वजन्याः ॥ २०९ ॥

स्थानेषु येषु प्रतिगात्रभिन्ना भिन्नास्तु रागाः प्रभवन्ति सम्यक् ।
गात्रस्य संबन्धितया प्रतीताः स्थायाः समस्ता इति वेदितव्यम् ॥ २१० ॥

स्थायस्य गात्रप्रभवस्य काकोः क्षेत्रो भवेद्वा ननु को विभेदः ।
अत्रोच्यते क्षेत्रसमुद्भवा तु च्छायैव काकुः प्रतिदेहमन्या ॥ २११ ॥

स्वरूपमेव प्रतिदेहमत्र स्थायेष्वहो गात्रभवेषु भिन्नम् ।
कृत्वा ध्वनिं तीव्रतरां पुरस्तान्मन्द्रेषु पश्चादपसर्पणं यत् ॥ २१२ ॥

स्यादेष एवोपशमस्तदीयच्छायाः पुनस्तेन युता भवेयुः ।
काण्डारणास्थायमथामनामः स्तम्भेषु या तक्षभिरब्जरूपः ॥ २१३ ॥

चित्राकृतिस्तु क्रियते हि सोऽयं काण्डारणास्तत्सदृशा विचित्राः ।
छायास्त एते स्फुटतां प्रयान्ति काण्डारणाया इति वेदितव्यम् ॥ २१४ ॥

स्थानत्रयव्यापिनमेव केचित् काण्डारणास्थानमुदीरयन्ति ।
एषु स्वरः स्यात् सरलस्तथैव स्याद्रक्तिशाली सुकुमाररूपः ॥ २१५ ॥

अत्यन्तसूक्ष्मत्वमितः क्रमेण स्थाया अमी निर्जवनान्विताश्च ।
निरस्तशैथिल्यगुणस्तु गाढस्थायो निरुक्तो भरताग्रगण्यैः ॥ २१६ ॥

स एव चेत्संभृतमार्दवः स्यात् स्थायो निरुक्तो ललितादिगाढः ।
चातुर्यपर्यायविलासशाली स्थायः प्रतीतो ललिताभिधानः ॥ २१७ ॥

डोलोदितो यो मृदुतानुरोधात् स्थायः स उक्तो लुलिताभिधानः ।
स्थायस्तु यो वेगविलम्बहीनः स्यान्मध्यमानश्च समाभिधानः ॥ २१८ ॥

स्यात् कोमलः संभृतसौकुमार्यो विस्तीर्णयुक्तः प्रसृताभिधानः ।
स्निग्धाह्वयो रूक्षतया विहीनो यो दीप्तिमांश्चोक्ष इति प्रतीतः ॥ २१९ ॥

औचित्यवान् स्यादुचिताभिधानः सुदेशिकाख्यो हृदयालुहृद्यः ।
पूर्वार्थमाकाङ्क्षति यस्तु पूर्वं स्थायं भवेत् सोऽयमपेक्षिताख्यः ॥ २२० ॥

वल्याह्वये यो गमके वहन्यामपि ध्वनिः स्यान्मधुरश्च मन्द्रः ।
तं घोषसंबन्धिनमामनन्ति मन्द्रैर्गभीरैर्ध्वनिभिर्मनोज्ञैः ॥ २२१ ॥

समन्विता ये त इमे स्वरस्य स्थाया निरुक्ता भरताग्रगण्यैः ।
स्थायास्त्रयस्त्रिंशदिति प्रतीतास्ते विप्रकीर्णाः सह लक्षणेन ॥ २२२ ॥

स्थायान् प्रवक्ष्याम्यथ विंशतिं तानसंकरान् गायकबोधहतोः ।
आक्रम्यमाणा इव भूमिभारैर्यथा वहन्तस्तु तथा सकम्पाः ॥ २२३ ॥

यत्र स्वरा जाग्रति ते वहस्य स्थाया निरुक्ताः प्रथमास्त्वमीषु ।
येष्वक्षराडम्बर एव मुख्यस्तेष्वक्षराडम्बरशब्दपूर्वाः ॥ २२४ ॥

ऊर्ध्वैरितैर्यो जवतासमेतः स्वरैः स उल्लासितया प्रतीतः ।
गङ्गातरङ्गा इव यत्र भान्ति स्वराः स एवात्र तरङ्गिताख्यः ॥ २२५ ॥

कुम्भेऽर्धपूर्णे सलिलं यथैव डोलायते मूर्धनि तद्वदेव ।
डोलायते (चेति) प्रलम्बिताख्यं स्थायं विदुर्गीतकलासु दक्षाः ॥ २२६ ॥

अवस्खलेद्यो जवतोऽवरोहे मन्द्राच्च सोऽवस्खलिताभिधानः ।
स्थित्वा स्वरे यः स्थिरमग्रिमञ्च स्पृष्ट्वा भवेत्तारमथो गतो यः ॥ २२७ ॥

प्रत्यागतः स्यादथ संप्रविष्टो यश्चावरोहे निबिडस्वरः स्यात् ।
आरोहरीतौ निबिडस्वरो यः स उत्प्रविष्टाह्वय इत्युपेयम् ॥ २२८ ॥

स्वरास्तु यत्रैव विनिःसरन्ति स्थायस्त्वसौ निःसरणाभिधानः ।
यत्र भ्रमन्तीव खलु स्वराः स स्थायो भवेद् भ्रामितनामधेयः ॥ २२९ ॥

यत्र स्वराणां खलु दीर्घकम्पः स्थायः स दीर्घादिमकम्पितः स्यात् ।
यत्र स्वरास्तन्तुवदेव केल्यामुत्क्षिप्य चोत्क्षिप्य च गृह्यमाणाः ॥ २३० ॥

स्थायं तमेनं परिगृह्य पूर्वमुल्लासितं संकथयन्ति सन्तः ।
द्रुतेन पूर्वं तु विलम्बितेन पश्चाच्च मानेन च गीयते यः ॥ २३१ ॥

स कथ्यते लम्बविलम्बिकाख्यः संगीतशास्त्रार्णवकर्णधारैः ।
निरूप्य यत्र स्वरयोस्तु तारमन्द्रस्थयोरेकमथापरः स्यात् ॥ २३२ ॥

परिग्रहः स्यात्तु स एव लोके स्थायो भवेत् त्रोटितकप्रविष्टः ।
यत्र ध्वनिस्तु प्रथमं प्रसार्य संक्षिप्यते गायकसंप्रदायात् ॥ २३३ ॥

स कुञ्चितः स्यात् प्रसृतादिमोऽथ स्थायः स्थिरः संप्रति कथ्यतेऽसौ ।
यः स्थायिवर्णे स्थितिमत् स्वराणां कम्पः स एव स्थिरनामधेयः ॥ २३४ ॥

द्वयोर्द्वयोर्वा खलु यस्त्रिषु त्रिष्वेकैकतो वा स्वरसं विलम्ब्यम् ।
विलम्ब्य यो नाम विरच्यते स स्थायो भवेत् स्थायुकनामधेयः ॥ २३५ ॥

प्रसारितो यः पुनरूर्ध्वमेव तारे त्विमं क्षिप्रमुदीरयन्ति ।
स्थूलः पुरस्ताच्चरमं तथाल्पः स्थायस्तु सूक्ष्मान्त इतीरयन्ति ॥ २३६ ॥

निरूपिता विंशतिभेदभिन्नाः स्थायास्त्वसंकीर्णतया प्रसिद्धाः ।
स्थायांस्त्रयस्त्रिंशतमत्र वक्ष्ये शेषानसंकीर्णतया प्रतीतान् ॥ २३७ ॥

विवर्जिताकुञ्चनपूरणाद्याः स्वाभाविका येषु भवन्ति शब्दाः ।
स्थायाः स्युरेते प्रकृतिस्थशब्दसंबन्धिनो गानविदां प्रसिद्धाः ॥ २३८ ॥

शब्दस्तु सूक्ष्मीक्रियतेऽथ येषु स्थायाः कलाशब्दपुरःसरास्ते ।
प्रतीगृहीतास्तु बलेन शक्याः स्थाया मता ह्याक्रमणादिकास्ते ॥ २३९ ॥

स्थायास्तु ये वर्धकिकल्प्यमानस्तम्भा इव स्युर्घटनादिमास्ते ।
स्थायास्तु ये श्रोत्रसुखप्रदाः स्युः सुखस्य संबन्धितयोदितास्ते ॥ २४० ॥

चाले स्वराणामिह रीतिभेदात् स चालिपूर्वा कथिता ऋजक्का ।
तदन्विता ये कथितास्तु चालिस्थाया मता गायकसंप्रदायात् ॥ २४१ ॥

अंशस्वरो यः कथितो हि सोऽयं जीवस्वरस्तं तु विधाय मुख्यम् ।
(स्थायाभिगीते) कथयन्ति तांस्तु जीवस्वरस्थायतया प्रवीणाः ॥ २४२ ॥

येष्वेव वेदध्वनिवद्ध्वनिस्तु विभाति वेदध्वनिपूर्वकास्ते ।
अन्तस्तु ये सारसमन्विताः स्युर्घनत्वसंबन्धितया मतास्ते ॥ २४३ ॥

स्थाया घनत्वप्रतिकूलधर्मा निरूपितास्ते शिथिलाभिधानाः ।
क्लेशेन कर्तुं खलु शक्यते यः स्थायो मतः सोऽवघटाभिधानः ॥ २४४ ॥

यो गीयतेऽत्यन्तविलम्बनेन प्लुताह्वयं स्थायममुं वदन्ति ।
आकाङ्क्ष्यते यः खलु पूरणाय रागेण रागेष्टममुं वदन्ति ॥ २४५ ॥

यः सुस्वरोऽपस्वरवद्विभाति सोऽपस्वराभास इति प्रदिष्टः ।
यः शृङ्खलाबद्ध इवावभाति स्थायं तु तं बद्धमुशन्ति सन्तः ॥ २४६ ॥

यत्र ह्यनल्पो मधुरध्वनिः स्यात् स्थायः कलस्यात्र रवस्य सोऽयम् ।
यः स्याच्च चातुर्यजनप्रियोऽसौ स्थायो मतश्छान्दसनामधेयः ॥ २४७ ॥

यो दुष्करः सन् सुखगेयवत् स्यादाभासनामा सुकरादिमोऽयम् ।
घण्टानिनादप्रतिमानुराणसमन्वितः स्थानत एव तारात् ॥ २४८ ॥

स्थानं तु मन्द्रं प्रति याति सोऽयं स्यात् संहितस्थाय इति प्रतीतः ।
स्थायो लघुर्गौरववर्ज्यगेयो यस्तु ध्रुवाभोगपदान्तराले ॥ २४९ ॥

प्रगीयते सोऽन्तर इत्युपात्तो वक्रो भवेदार्जवहीन एव ।
तारे तु यः पूर्णवदेव भाति दीप्तप्रसन्नं तमुदाहरन्ति ॥ २५० ॥

सुखेन गेयः सुकुमारनादः प्रसन्नमृद्वाह्वय एष उक्तः ।
गुरुर्मतो लाघववर्जनेन ह्रस्वो मतो यः खलु कम्पवत् स्यात् ॥ २५१ ॥

सान्द्रत्वहीनः सबलश्च यः स्यात् स्थायो मतोऽसौ शिथिलादिगाढः ।
दीर्घो मतो ह्रस्वविलक्षणः स्यात् स्थायो ह्यसाधारणनामकस्तु ॥ २५२ ॥

पुंसस्तु शारीरगुणेन लोके सुखेन यः कस्यचिदेव शक्यः ।
साधारणः सर्वसमो निरुक्तो यस्तु स्वनिर्वाहकृते न वाञ्छेत् ॥ २५३ ॥

अन्यद्वहन्यादिनिरूपितोऽयं स्थायो निराधारतया स एषः ।
शक्योऽपि यो दुष्करवद्विभाति तं दुष्कराभासमुदीरयन्ति ॥ २५४ ॥

एषां मनाग्लक्षणमिश्रणेन मिश्रं पुनः स्थायमुदाहरन्ति ।
इति त्रयस्त्रिंशदुदाहृतास्ते स्थाया मया गायकसंप्रदायात् ॥ २५५ ॥

षडुत्तरैषा नवतिर्मिलित्वा स्थायाः समस्ताः परिकीर्तितास्ते ।
नानाविधत्वेन न मिश्रभेदाः शक्यन्त एव प्रतिपादनाय ॥ २५६ ॥

अथापि केषांचन लक्षणं दिक्प्रदर्शनाय प्रतिपादयामः ।
एकस्य साम्यं गमकस्य चेत् स्यात् संकीर्णता स्थाययुगस्य सेयम् । २५७ ॥

साम्यं बहूनां गमकाभिधानां स्थायद्वये स्याद्यदि मिश्रता सा ।
स्थायोऽधिको यः खलु यत्र मिश्रस्थाये तदाख्यां लभते स एषः ॥ २५८ ॥

स्थायास्तु ये लक्षणसाम्यभाजस्ते मिश्रनामान इति प्रतीताः ।
तानेव पूर्वाभिहितांस्तु मिश्रस्थायान् वदामः कतिचित् क्रमेण ॥ २५९ ॥

स्थाये प्रयुक्तस्तिरुपस्तथैव चान्दोलितस्तद्द्वयमिश्रणेन ।
क्रमोदितोक्तद्वयनामधेयः स्थायो भवेदाद्य इहाविधेयः ॥ २६० ॥

लीनः पुरोक्तः खलु कम्पितश्च स्थायस्तु यस्तद्द्वयमिश्रणात् स्यात् ।
लीनादिमं कम्पितमीरयन्ति द्वितीयमेतं खलु मिश्रभेदम् ॥ २६१ ॥

यः कम्पितश्चापि तथाहतश्च स्थायोऽपि यस्तद्द्वयमेलनेन ।
तमाहतं कम्पितपूर्वमाहुः स्थायं तृतीयं खलु मिश्रभेदम् ॥ २६२ ॥

पुरोदितो यस्तिरुपस्तथैव यः प्राग्यपादि स्फुरितः पुरस्तात् ।
तन्नामधेयद्वयतो यथोक्तक्रमोदितं तुर्यमिमं वदन्ति ॥ २६३ ॥

यस्मिंस्तु लीनस्फुरितौ तथा यः स्थायं तु लीनस्फुरिताख्यमाहुः ।
यस्मिन् मिलेतां स्फुरिताहतौ द्वौ षष्ठं तमाहुः स्फुरिताहताख्यम् ॥ २६४ ॥

त्रियोगजातान् कलयेऽथ मिश्रान् स्थायान् पुनर्गायकबोधहेतोः ।
आद्यं तयोर्यत्र विभाति लीनो यन्मध्यमस्तिष्ठति कम्पितश्च ॥ २६५ ॥

सन्तः पुनः स्थायविदस्तमेतं लीनादिमं कम्पितलीनमाहुः ।
यत्र त्रिभिन्नः कुरलः पुरोक्तः स्यादाहतश्चात्र विमिश्रमेतत् ॥ २६६ ॥

त्रिभिन्नपूर्व-कुरलाहतं तु प्रचक्षते स्थायरहस्यविज्ञाः ।
तौ प्लावितोल्लासितकौ वलिश्चेत्येतत्त्रयं यत्र भवेद्विमिश्रम् ॥ २६७ ॥

तं प्लावितोल्लासितपूर्वमाहुर्वलिं तु संगीतकलाप्रवीणाः ।
वलिस्तथा हुम्फितमुद्रितौ चेत्येभिस्त्रिभिर्यस्तु भवेत्तदेतत् ॥ २६८ ॥

वल्यादिमं हुम्फितमुद्रितं तं प्रचक्षते गीतकलाप्रवीणाः ।
वलिस्तथान्दोलितनामितौ च यस्मिन्निमे तु त्रितये मिलन्ति ॥ २६९ ॥

तं नामितान्दोलितपूर्वमाहुर्वलिं तु संगीतकलाधुरीणाः ।
वलिस्तथा नामितकम्पितौ चेत्येतत्त्रयं यत्र मिलेत्तमेतम् ॥ २७० ॥

आहुर्बलिं नामितकम्पितान्तसार्यास्तथा दत्तिलकोहलाद्याः ।
स्थायांश्चतुर्योगभवांस्तु वक्ष्याम्यान्दोलितप्लावितनामिताश्च ॥ २७१ ॥

तथा समुल्लासित इत्यमीभिश्चतुर्भिरेकः खलु मिश्रभेदः ।
आन्दोलितप्लावितपूर्वमाहुस्तथा समुल्लासितनामितं तम् ॥ २७२ ॥

स्थायौ प्रवक्ष्याम्यथ पञ्चयोगजातावुभौ पूर्वमतानुसारात् ।
यत्रादिमः स्यात्तिरुपस्तथास्यादान्दोलितोऽथो च बलित्रिभिन्नौ ॥ २७३ ॥

अन्ते ततः स्यात् कुरलश्च शब्दैरेभिः क्रमोक्तैरभिधीयतेऽन्यः ।
यत्र त्रिभिन्नः प्रथमोऽथ लीनो भवेद्द्वितीयः स्फुरितस्तृतीयः ॥ २७४ ॥

संप्लावितान्दोलितकौ च शब्दैरेभिः क्रमोक्तैरभिधीयतेऽन्यः ।
स्थायः प्रदिष्टः कथयामि भागैरुत्पादितान् संप्रति मिश्रभेदान् ॥ २७५ ॥

द्वियोगजातान् कलये वहन्या ढालोऽनुगानं च भवेत् क्रमेण ।
एकः प्रभेदो ह्युदितस्तु तस्य ढालाद्वहन्याश्च तथा द्वितीयः ॥ २७६ ॥

शब्दाच्च ढालादपरो वहन्या यन्त्रात् परश्चापि भवेद्विमिश्रः ।
स्याच्छायया यन्त्रयुजापि कश्चिच्छब्दाच्च यन्त्रादपरोऽपि भेदः ॥ २७७ ॥

कश्चित् प्रभेदोऽत्र भवेद्वहन्या सच्छायया कश्चन यन्त्रतश्च ।
स्याद्वाद्यशब्दादपरस्तु तीक्ष्णात् स्यात् प्रेरिताच्चेति मतो द्वियोगः ॥ २७८ ॥

त्रियोगजातान् कथयेऽथ तीक्ष्णान्यत् प्रेरिताच्च स्वरलम्बताच्च ।
एकोऽपरः कश्चन ढालशब्दात् स्याद्यन्त्रशब्दादपि वाद्यशब्दात् ॥ २७९ ॥

ततश्चतुर्योगभवाच्च ढालात् सच्छायकात् कश्चन यन्त्रशब्दात् ।
स्यादाद्यशब्दादपि को विभेदस्त्वलम्बितावस्खलिताह्वयाच्च ॥ २८० ॥

स्यात्ताडितोल्लासितयुग्मतोऽन्यः स्यात् संप्रविष्टादथ चोत्प्रविष्टात् ।
स संप्रविष्टेन तरङ्गितेन ततः प्रवक्ष्ये द्वययोगजन्यान् ॥ २८१ ॥

उल्लासिताच्च प्रतिगृह्य पूर्वं भवेत्तथा लम्बविलम्बिताच्च ।
ततश्चतुर्योगभवस्तु कश्चित् स्यात्ताडिताच्चैव तथा प्रविष्टात् ॥ २८२ ॥

अथोत्प्रविष्टादपि वान्यसंज्ञात्ततः पुनर्निःसरणात्तथैव ।
अन्यस्तु दीर्घादिमकम्पिताच्च सूक्ष्मान्तकभ्रामितकात्तथैव ॥ २८३ ॥

सस्थायुको भेद उदीरितोऽन्यस्त्वेवं चतुर्योगभवा निरुक्ताः ।
प्रपञ्चये कंचन पञ्चयोगाज्जातं प्रभेदं किल सानुमोदम् ॥ २८४ ॥

वहाक्षराडम्बरयुग्मजातस्त्वाकुञ्चितश्च प्रस्नुतः स्थिरश्च ।
स्याद् भ्रासितक्षिप्रपदाभिधेयः सूक्ष्मान्तसंज्ञश्च तरङ्गितश्च ॥ २८५ ॥

विलम्बितश्चेति च भेद एको भेदाश्च षट्त्रिंशदितीरितास्ते ।
दिशानयान्येऽपि किलोहनीयाः स्थायाः किल न्यायविचारदक्षैः ॥ २८६ ॥

---

— ॥ आलप्तिः ॥ —

स्थायांश्च वागांश्च निरूप्य सम्यगालप्तिकां संप्रति लक्षयामः ।
रागस्य तस्यालपनं किलाहुरालप्तिकां गीतकलाप्रवीणाः ॥ २८७ ॥

आलप्तिरेषा द्विविधा च रागपूर्वा च सा रूपकपूर्विका च ।
आद्यान् प्रबन्धाननपेक्ष्य रागालप्तिर्भवेत् स्थानचतुष्टयोत्थाः ॥ २८८ ॥

यत्र स्वरे रागनिवेशनं स्यात् स्थायस्वरं तं निगदन्ति सन्तः ।
स्थायस्वराद्यस्तु भवेत्तुरीयो व्यर्धं तमारोहणतो भणन्ति ॥ २८९ ॥

व्यर्धस्य यः स्यादवरोहणेन स्थायिस्वराच्चापि भवेत्तृतीयः ।
उच्चारणं तस्य पुनः पुनर्यं तं वंशिकायां मुखचालमाहुः ॥ २९० ॥

आरभ्य तु स्थायिनमा तृतीयादधः स्वराणामपि योजनेन ।
यद्गानमिन्धे तदुदाहरन्ति स्वस्थानमाद्यं सुधियः परं ते ॥ २९१ ॥

व्यर्धस्वरे पूर्ववदेव यत् स्यात् स्वस्थानमेतद्धि भवेद्द्वितीयम् ।
स्थायिस्वरादष्टमतामुपेतः स्वरस्तु योऽसौ द्विगुणाभिधानः ॥ २९२ ॥

व्यर्धस्वरस्य द्विगुणस्वरस्याप्यर्धस्थिताख्याः खलु मध्यभाजः ।
अर्धस्वरेषु प्रविधाय तत्तद्रागानुकूलैर्गमकैश्च गीतिम् ॥ २९३ ॥

यः स्थायिनि स्यान्न्यसनं पुरेव स्वस्थानमेतद्धि भवेत्तृतीयम् ।
पूर्वोक्तवत्त्वष्टममाकलय्य गीतं ततः स्थायिनि किं च मुञ्चेत् ॥ २९४ ॥

स्वस्थानमेतत् कथितं परं स्वस्थानैश्चतुर्भिस्तु समन्विता या ।
रागस्य साल्प्तिरथ त्वमुष्यास्तं स्थापनाभेदमिहामनामः ॥ २९५ ॥

जीवस्वरव्याप्तियुतैस्तथाल्पाल्पकैः प्रसन्नैर्बहुचातुरीकैः ।
स्थायैरमीभिः करणैस्तु रागाभिव्यञ्जनस्थापनिकोपदिष्टा ॥ २९६ ॥

---

— ॥ रूपकालप्तिः ॥ —

सा रूपकालप्तिरथ प्रबन्धरागेण तालेन समन्विता या ।
सा च द्विधोक्ता प्रथमा तु यत्र प्रतिग्रहण्याद्यभिधा तदीया ॥ २९७ ॥

सा भञ्जनी चात्र भवेद्द्वितीया तत्रादिमां सांप्रतमीरयामः ।
स्वस्थानमुद्राय पुरैव चालप्त्यङ्गं प्रबन्धावयवात्महेतुः ॥ २९८ ॥

प्रतिग्रहण्यत्र भवेद्द्वितीया या भञ्जनी सा द्विविधात्र वेद्या ।
स्थायादिमा भञ्जनिभेदपूर्णा भवेत् परा रूपकभञ्जनी च ॥ २९९ ॥

स्थायस्तु सा भञ्जनिकोच्यतेऽथ रागस्य यत्रावयवो विशेषात् ।
प्रबन्धसंबन्धिपदप्रमाणान्नानाविधो गीयत एव सम्यक् ॥ ३०० ॥

तेनैव मानेन तदा पदैश्चान्यथान्यथा रूपकमत्र सर्वम् ।
संगीयते यत्र निरूपिता सालप्तिक्रमाद्रूपकभञ्जनीति ॥ ३०१ ॥

आलप्तिकाख्येति हि सा तु वर्णालंकाररम्या गमकैर्विलासैः ।
प्रकाशयन्ती निजरागभेदप्रयोजनेऽत्रैव परं प्रशस्ता ॥ ३०२ ॥

आलप्तिकायास्त्वपरान् विशेषानाचष्ट यश्चाह स पार्श्वदेवः ।
समा हि चाद्या विषमा द्वितीया स्यात् प्राञ्जलीकेति पुनर्द्विधा स्यात् ॥ ३०३ ॥

स्यात् साक्षरा सेयमनक्षरा च पूर्वं द्विधोक्तापि चतुर्विधैवम् ।
पुनर्द्विधा सा कथिता सतालातालेति सा चाष्टविधोपदिष्टा ॥ ३०४ ॥

शुद्धस्य योगादपि सालगस्य षड्डुत्तरास्ताः कथिता दशैवम् ।

---

— ॥ बृन्दलक्षणम् ॥ —

आलप्तिलक्ष्म प्रतिपाद्य वक्ष्ये बृन्दं जनानन्दनमूलकन्दम् ॥ ३०५ ॥

कदम्बकं वादकगायकानां विदन्ति बृन्दं गणनाविशेषात् ।
त्रैधं तदेतत् पुनरुत्तमं च स्यान्मध्यमं चैव ततः कनिष्ठम् ॥ ३०६ ॥

यस्मिन् भवेद्गातृचतुष्टयी च मुख्यास्तथाष्टौ समगायनाश्च ।
स्याद्गायनीद्वादशकं चतुष्कं तद्वांशिकानां च पुनश्चतुष्कम् ॥ ३०७ ॥

मार्दङ्गिकानां च भवेत्तदेतदुदीरयन्त्युत्तममेव बृन्दम् ।
तदर्धमानादिह मध्यमं स्याद्बृन्दं कनिष्ठस्य च लक्ष्म वक्ष्ये ॥ ३०८ ॥

प्रपञ्चयन् पञ्च परिग्रहांश्च तद्भाविका वादकवांशिकाश्च ।
तत्काहलाशंखकवादकश्च तन्मौहरीश्रृङ्गकवादकश्च ॥ ३२३ ॥

तथोत्तमास्तालधराश्च ये तत्परिग्रहः स्यात् कुतपस्ततस्य ।
आनद्धपूर्वं कुतपं प्रवक्ष्ये यत्रैकको मार्दलिकश्च मुख्यः ॥ ३२४ ॥

आद्यं तु वाद्यं पणवस्ततो दर्दुरस्तु तस्मात् परमेव ढक्का ।
मण्डी च ढक्कापि च ढक्कुली च ततः परं स्यात् पटहस्तथैव ॥ ३२५ ॥

तथैव चान्या करटा हुडुक्का ढक्का ततः स्याद्धवसं तथान्या ।
डमरवेभिख्यो घढसश्च रुञ्जा तथा कुडुक्का कुडुवाभिधान्या ॥ ३२६ ॥

निःस्वानभेर्यौ त्रिवली तथैव स्यात्तम्बकी स्यादथ बाम्बडी च ।
पटश्च कम्राजवसेल्लुकाश्च कांस्यादितालः किरिकिट्टिकं च ॥ ३२७ ॥

यदेवमाद्यं पुनरस्ति वाद्यं तद्वादकानां च पृथक्कदम्बम् ।
आनद्धपूर्वं कुतपं वदन्ति नाट्यस्य वक्ष्ये कुतपं क्रमेण ॥ ३२८ ॥

वराटकर्णाटकलाटगौडबङ्गालकाश्मीरकलिङ्गचोलाः ।
समालवागुर्जरिकोङ्कणाश्च देशाश्च सौराष्ट्रमुखास्तथा ये ॥ ३२९ ॥

एतेषु जातैरभिनीतिदक्षैर्नानाङ्गहारेषु विचक्षणैश्च ।
सुशिक्षितैस्ताण्डवलास्ययोश्च स्थाने विचित्रे विषमे च विज्ञैः ॥ ३३० ॥

तथोत्तमैर्मध्यमकाधमैश्च नाट्यस्य वेद्यः कुतपोऽत्र पात्रैः ।
एतस्य योगं कुतपत्रयस्य बृन्दं त्वभाणीद्भरतो मुनीन्द्रः ।

ततादिकस्योत्तमतादिभेदात् स्यादुत्तमादिः कुतपस्त्रिधायम् ॥ ३३१ ॥

**॥ इति रघुनाथभूपरचितायां संगीतसुधायां**

**तृतीयः प्रकीर्णकाध्यायः समाप्तः ॥**

---

# सङ्गीतसुधायाम्

## चतुर्थोऽध्यायः



संगीतशास्त्रप्रचयप्रभेदे श्रुत्यादिजन्यं स्वररूपमुक्तम् ।
अथोदितास्तत्प्रभवाश्च रागा जात्यादिगान्धर्वयुताः समग्रम् ॥ १ ॥

जातिः कपालानि च कम्बलं च ते ग्रामरागाश्च तथोपरागाः ।
शुद्धाश्च रागाः सकला निरुक्ता भाषाविभाषान्तरभाषिकाद्याः ॥ २ ॥

गान्धर्वमेतत् सकलं निरुक्तं प्रयोक्तृवर्गोऽस्य तु नन्दिमुख्याः ।
रागाङ्गभाषाङ्गयुतं क्रियाङ्गमुपाङ्गमेतत् खलु देशिरागः ॥ ३ ॥

चतुर्विधे तत्र तु देशिरागे गीतप्रबन्धे च सलक्षणेऽस्मिन् ।
वाग्गेयकारप्रमुखैः समग्रप्रयोक्तृवर्गः प्रतिपादितः प्राक् ॥ ४ ॥

प्रबन्धनिर्माणविशेषदक्षो वाग्गेयकारस्त्विति वर्णितं प्राक् ।
प्रबन्धरूपेऽवगते च पश्चाद्वाग्गेयकारस्त्विह वर्णनीयः ॥ ५ ॥

अतः प्रबन्धप्रतिपादनार्थं तुरीयमध्यायमुदीरयामः ।
यतः प्रबन्धोऽत्र च गीतरूपस्ततश्च गीतं प्रथमं निरूप्यम् ॥ ६ ॥

अत्र स्वराणामनुरञ्जको यो गुम्भस्तमेतं प्रवदन्ति गीतम् ।
ननूदितं प्राक् स्वरलक्ष्ममध्ये स्वरस्वरूपे किल रञ्जकत्वम् ॥ ७ ॥

अतः स्वराणामनुरञ्जकत्वं विशेषणं यन्न सहामहे तत् ।
अत्रोच्यते तस्य विशेषणस्य व्यावर्तमेतद्विशदं यथा स्यात् ॥ ८ ॥

संदर्भमात्रे न हि रञ्जकत्वं भवेत् स्वराणामिति वेदितव्यम् ।
विवादिभूतस्वरमर्दनेन विना स्वरूपेण तु तत्प्रयोगे ॥ ९ ॥

संदर्भभावे सति च स्वराणां तद्रञ्जकं स्यादपि वेदितव्यम् ।
तस्मिन्नतिव्याप्तिनिवारणार्थं विशेषणं रञ्जनरूपमुक्तम् ॥ १० ॥

उक्तं च गीतं द्विविधं वदन्ति गान्धर्वमाद्यं किल गानमन्यत् ।
गान्धर्वमुख्यैः किल गीयमानं श्रेयःप्रदं लक्षणमत्र वेद्यम् ॥ ११ ॥

सिद्धं तथानादिपरंपराभिरशक्यमप्याधुनिकैरशेषैः ।
गान्धर्वमेतत् कथितं पुरस्ताद्गानं त्विदानीं प्रतिपादयामः ॥ १२ ॥

देशीयरागादि च लक्ष्मयुक्तं वाग्गेयकारप्रमुखेरितं च ।
तद्गानसामान्यमितीरयन्ति श्रेयस्करं मोदकरं जनानाम् ॥ १३ ॥

---

## — ॥ गानभेदाः ॥ —

यद्यप्यथो गानमशेषजन्तुहर्षप्रहर्षादिमहेतुभूतम् ।
तथापि केषांचन किंचिदेव गानं प्रियं भिन्नरुचिर्हि लोकः ॥ १४ ॥

प्रकारभेदं जनरञ्जनानां स्पष्टं समाचष्ट स पार्श्वदेवः ।
यदुच्चनीचस्वरसंयुतः स्याद्यन्न द्रुतं नैव विलम्बितं च ॥ १५ ॥

तालानुरूपं समनामगानमाचार्यवर्यप्रियमामनन्ति ।
गानं क्रियाकारकशब्दयुक्तं यत्संधिदोषेण विवर्जितं च ॥ १६ ॥

व्यक्तस्वरं व्यक्तपदं तदेतद्व्यक्ताभिधं पण्डितरञ्जकं तत् ।
यदक्षरैः स्याल्ललितैरुपेतं शृङ्गारनाम्ना सहितं रसेन ॥ १७ ॥

श्राव्येण नादेन युतं च गानं प्रियं च यूनां मधुराभिधानम् ।
गानस्वरैरुच्चतरैरुपेतं तथा प्रयोगे बहुलीकृतं च ॥ १८ ॥

विकृष्टसंज्ञं पुनरेतदेव प्रियं परेषां कथितं जनानाम् ।
वृत्त्यारभट्या सहितं यदेव प्रवीरसंग्रामकथोद्भटं च ॥ १९ ॥

स्यादुच्चनीचस्वरसंयुतं च सोत्साहगानं खलु शूरहृद्यम् ।
प्रमोदकं दीप्तपदैः समग्रं शृङ्गारसंज्ञेन रसेन युक्तम् ॥ २० ॥

कृपारसज्ञापककाकुयुक्तं विविक्तहृद्यं करुणाख्यगानम् ।
पदैः परीतं विपरीतरूपैः समन्वितं यत् स्वरभङ्गिभेदैः ॥ २१ ॥

युक्तं पुनर्हास्यरसेन गाढं विटप्रियं स्यात् परिहासगानम् ।
गूढाभिधेयैः प्रकटायमानसंसारसंभावितसौख्यमुख्यैः ॥ २२ ॥

पदैरुपेतं यदुदाहरेयुरध्यात्मगानं खलु योगिहृद्यम् ।
शुभैश्च वाक्यैर्बहुलैरुपेतं स्वरेण शुद्धेन च पञ्चमेन ॥ २३ ॥

गेयं विवाहादिमहोत्सवेषु वधूप्रियं मङ्गलगानमेतत् ।
यद्देवतायाः सहितं स्तवेन तस्याः प्रभावप्रतिबोधनं च ॥ २४ ॥

आस्तिक्यसंपादकमत्र रम्यं गानं विदुर्भक्तजनादिहृद्यम् ।
अभ्युन्नतस्थानसमन्वितं च यदालिकं स्यादपि तालपादैः ॥ २५ ॥

रूक्षं प्रयोगैर्बहुलैरुपेतं वादिप्रियं तद्विषमाख्यगानम् ।
इत्थं जनानामिह रञ्जनानि नानाविधान्याह स पार्श्वदेवः ॥ २६ ॥

गानं तदत्र द्विविधं निरुक्तं निबद्धमेकं त्वनिबद्धमन्यत् ।
षडङ्गधात्वादिविवर्जनेन चालप्तिरूपं त्वनिबद्धमाहुः ॥ २७ ॥

उद्ग्राहमुख्यैरपि धातुवर्गैरङ्गैः स्वराद्यैश्च युतं निबद्धम् ।
तत्रानिबद्धं कथितं पुरस्तान्निबद्धमत्रैव निरूपयामः ॥ २८ ॥

त्रेधा निबद्धस्य भवन्ति संज्ञा वस्तुप्रबन्धोऽपि च रूपकं च ।
एकस्य संज्ञा बहुधा प्रवृत्तिर्निमित्तभेदादिति पार्श्वदेवः ॥ २९ ॥

चत्वार उद्ग्राहमुखाः स्वरादीन्यङ्गानि षट् चापि वसन्ति यस्मिन् ।
तद्वस्तुसंज्ञं कथितं निबद्धं प्रवृत्त्यभिज्ञैर्भरताग्रगण्यैः ॥ ३० ॥

चतुर्भिरत्रापि च धातुभिश्च प्रबध्यतेऽङ्गैरपि षड्भिरेषः ।
एवं प्रबन्धार्थमुदीरयन्ति शार्दूलशैलादिमुखा मुनीन्द्राः ॥ ३१ ॥

नामादिमारोपणमेव यस्मिन्निरूप्यते रूपकमेतदाहुः ।
पूर्वं निरुक्तः किल धातुशब्दो गेयाभिधायीति विविच्य सम्यक् ॥ ३२ ॥

स एव चोक्तः किल धातुशब्दस्तुर्यप्रबन्धावयवाभिधायी ।
चतुर्विधो धातुरिह प्रबन्धे ह्युद्ग्राहमेलापकसंज्ञकौ द्वौ ॥ ३३ ॥

ध्रुवं तृतीयं समुदाहरन्ति त्वाभोगसंज्ञः कथितस्तुरीयः ।
आद्यः प्रबन्धावयवः किल स्यादुद्ग्राहनामा कथितो मुनीन्द्रैः ॥ ३४ ॥

भवेत् प्रबन्धावयवो द्वितीयो मेलापकः सर्वजनप्रसिद्धः ।
ध्रुवः प्रबन्धावयवस्तृतीयः सर्वप्रबन्धे नियतो यतोऽयम् ॥ ३५ ॥

प्रबन्धतुर्यांशमुदाहरन्ति त्वाभोगनामानममुं मुनीन्द्राः ।
धातुश्चतुर्धेति कथं नु संख्या ह्यस्त्यन्तराख्योऽपि च धातुरन्यः ॥ ३६ ॥

एवं च पञ्चेति निरूपणीये कथं चतुर्धेति विनिश्चयस्ते ।
सत्यं च धात्वन्तरवर्णनं ते सर्वानुयायी खलु नैष धातुः ॥ ३७ ॥

प्रवर्तते सालगसूडमात्रे त्वन्यत्र चत्वार इति प्रतीतम् ।
पित्तादिधातुत्रितयी यथा वा शरीरपोषादिविशेषहेतुः ॥ ३८ ॥

निर्वाहकत्वेन तथा प्रबन्धे ह्युद्ग्राहमुख्याः किल धातवस्ते ।
धातुस्वरूपं कथयामि सम्यग्धातुस्त्वतो धारणपोषणार्थात् ॥ ३९ ॥

औणादिके संप्रति कल्प्यमाने तुन्प्रत्यये धातुपदस्य सिद्धिः ।
उद्ग्राहमुख्यान् समुदाजहार व्युत्पत्तिपूर्वं किल पार्श्वदेवः ॥ ४० ॥

उद्गृह्यते येन च गीतमादावुद्ग्राहनामास्य ततः प्रतीतः ।
भवेद्ध्रुवोद्ग्राहकमेलनेन मेलापकाख्यां लभते द्वितीयः ॥ ४१ ॥

प्रबन्धमात्रे नियतो यतोऽभूद्ध्रुवाभिधानं लभते स धातुः ।
यतः प्रबन्धस्य समाप्तिरासीत् खण्डं तमाभोगमुदीरयन्ति ॥ ४२ ॥

ध्रुवस्य चाभोगविधानतो वा त्वाभोगनामानमुशन्ति सन्तः ।
उद्ग्राहमुख्यांश्चतुरः किलैवं व्युत्पादयामास स पार्श्वदेवः ॥ ४३ ॥

एलाप्रबन्धेऽपि च ढेङ्किकायामुद्ग्राहमुख्या नियताः प्रतीताः ।
नान्यप्रबन्धे नियतौ भवेतामाभोगमेलापकनामधेयौ ॥ ४४ ॥

पुनः प्रबन्धस्त्रिविधो द्विधातुराद्यस्त्रिधातुश्च भवेद्द्वितीयः ।
भवेच्चतुर्धातुरथो तृतीयस्त्रैविध्यमित्थं कथितं मुनीन्द्रैः ॥ ४५ ॥

प्रबन्धनाम्नः पुरुषस्य तस्य पश्चात् षडङ्गानि निरूपयामः ।
आद्यः स्वरः स्याद्बिरुदं द्वितीयं पदं तृतीयं किल तेन्नकश्च ॥ ४६ ॥

स्यात् पञ्चमः पाट इति प्रतीतस्तालाभिधानं निगदन्ति षष्ठम् ।
प्रबन्धनाम्नः पुरुषस्य तस्य षडङ्गविन्यासविधां वदामः ॥ ४७ ॥

पदस्य चार्थप्रतिबोधकत्वात्तेन्नस्य कल्याणविबोधकत्वात् ।
पदं च तेन्नं च विलोचने द्वे प्रबन्धसंज्ञस्य च पूरुषस्य ॥ ४८ ॥

मृदङ्गवीणामुरजादिजन्मा कराभिघातप्रभवस्तु पाटः ।
प्रत्यर्थिसेनाप्रविदारणादिर्युतस्तु हस्ताभिनयैकसाध्यः ॥ ४९ ॥

तत्तादृशोऽसौ बिरुदश्च तौ द्वौ प्रबन्धनाम्नः पुरुषस्य पाणी ।
तालस्वरौ यच्चरणैकहेतू प्रबन्धनाम्नः पुरुषस्य पादौ ॥ ५० ॥

तद्रूपकत्वेन निरूपितानां स्वरादिमानामिह लक्ष्म वक्ष्ये ।
[illegible] रूपं प्रथमे निरुक्तं तद्वाचका ये सरिगादिवर्णाः ॥ ५१ ॥

कन्दस्ततः स्यात्तुरगादिलीला गजादिलीला द्विपदी तथैव ।
स्याच्चक्रवालस्तदनु प्रतीतो भवत्ययं क्रौञ्चपदाभिधानः ॥ ७९ ॥

ततः स्वरार्थो ध्वनिकुट्टिनी तथार्या च गाथा द्विपथस्तथैव ।
अनन्तरं स्यात् कलहंससंज्ञः स्यात्तोटकश्चापि घटश्च वृत्तम् ॥ ८० ॥

स्यान्मातृका रागकदम्बकं च स्यात् पञ्चतालेश्वरनामधेयः ।
तालार्णवश्चेति यथाक्रमेण प्रोक्ताश्चतुर्विंशतिरत्र भेदाः ॥ ८१ ॥

एलादिमध्यस्थित एव यः स्यादेषोऽपि चालिक्रम एव वेद्यः ।
सूडस्थितास्त्वालिसमाश्रिताश्च द्वात्रिंशदेते मिलिताः समस्ताः ॥ ८२ ॥

वक्ष्यामहे संप्रति विप्रकीर्णाञ्श्रीरङ्गनामा प्रथमः स एषु ।
स्याच्छ्रीविलासस्तु भवेद्द्वितीयस्ततस्तृतीयः किल पञ्चभङ्गिः ॥ ८३ ॥

पञ्चाननोमातिलकौ भवेतां त्रिपद्यभिख्यापि चतुष्पदी च ।
स्यात् षट्पदी वस्तुसमाह्वयश्च ततः किल स्याद्विजयाभिधानः ॥ ८४ ॥

ततः प्रतीतस्त्रिपथाभिधेयश्चतुर्मुखः स्यादपि सिंहलीलः ।
स्याद्धंसलीलोऽपि च दण्डकश्च स्याज्झुम्बडं कन्दुकनामधेयः ॥ ४५ ॥

ततः परं स्यात् कथितस्त्रिभङ्गिर्हरादिमश्चापि विलासकश्च ।
सुदर्शनश्चापि भवेत् स्वराङ्कः श्रीवर्धनो हर्षविवर्धनश्च ॥ ८६ ॥

ततः परं स्याद्वदनं च चच्चर्याख्याथ चर्याप्यथ पद्धटी च ।
सा राहडी चापि ततश्च वीरश्रीमङ्गलाचार इति प्रतीतः ॥ ८७ ॥

ततः परं स्याद्धवलाभिधानः स्यान्मङ्गलश्चापि तथैव चोवी ।
लोली ततो डोल्लरिका च दन्ती षट्त्रिंशदेवं खलु विप्रकीर्णाः ॥ ८८ ॥

---

— ॥ एलालक्षणम् ॥ —

एलाप्रबन्धस्य निरूपयामः सामान्यतो लक्षणमत्र सम्यक् ।
एलेति नाम्ना प्रथिते प्रबन्धे चत्वार एव त्रय एव वांशाः ॥ ८९ ॥

तत्राद्यपादे विनिवेशनीये खण्डे ह्यनुप्राससमन्विते द्वे ।
गेये च मातुद्वितयेन युक्ते त्वेकेन युक्ते खलु धातुना च ॥ ९० ॥

खण्डद्वयं षट्सु दशस्वपि स्यात् क्रमाभिधानं पदमेषु पूर्वम् ।
कार्यः प्रयोगस्तदनन्तरं स्यात् पदं तु तं मन्मथवद्द्वितीयम् ॥ ९१ ॥

ज्ञेयः प्रयोगश्च वनाक्षरौघैरालप्तिरुक्ता गमकैश्च युक्ता ।
तस्य द्वितीयस्य पदस्य चान्ते शब्दश्च संबोधनयुक् प्रयोज्यः ॥ ९२ ॥

अनन्तरं पल्लवसंज्ञकः स्यात् पदत्रयं तत्र खलु द्वयोस्तु ।
स्यादाद्ययोस्तत्र विलम्बगानपदं तृतीयं द्रुतमानगेयम् ॥ ९३ ॥

पदत्रयं चोक्तमिदं क्रमेण कान्तं जितं मित्रमिति ब्रुवन्ति ।
उद्ग्राह एवं प्रथमे तु धातावाद्यो भवेत् पञ्चपदस्तु पादः ॥ ९४ ॥

एवं द्वितीयेऽपि भवन्ति पादे पदानि पञ्चैव यथाक्रमेण ।
विकारिसंज्ञं पदमाद्यमन्यन्मान्धातृसंज्ञं च ततस्तृतीयम् ॥ ९५ ॥

सुमत्यभिख्यं खलु शोभसंज्ञं तुर्यं सुशोभेत्यपि पञ्चमं च ।
पादस्तृतीयः प्रथमाङ्घ्रिवत् स्याज्ज्ञेयो भवेदत्र विशेष एषः ॥ ९६ ॥

खण्डद्वयं त्वाद्यपदं प्रगाय प्रयोगसंज्ञे तदनु द्वितीये ।
अन्ते च संबोधयुतं तु गेयं पदं विहायैव पदान्तराणि ॥ ९७ ॥

न पल्लवाख्यस्य पदत्रयस्य कार्यः प्रयोगः प्रथमाङ्घ्रिवत् स्यात् ।
कार्यः प्रयोगश्च पदे द्वितीये पूर्वप्रयोगस्वरगुम्भवर्जम् ॥ ९८ ॥

भवेत्तदन्यस्वरगुम्भयुक्तस्तस्मात्तृतीये चरणे पदे द्वे ।
ते गीतकोपादिचिताभिधानं क्रमाल्लभेतामिति वेदितव्यम् ॥ ९९ ॥

एलाप्रबन्धेऽप्युपगच्छतां हि त्रिधातुतां द्वादशकं पदानाम् ।
उद्ग्राहके धातुचतुष्टयादि सोमेश्वरादेस्तु मतेपदानि ॥ १०० ॥

उद्ग्राह एकादशकं पदानां मेलापके द्वादश चैकमेव ।
अनन्तरं तु ध्रुवखण्डमस्य पदत्रयं तत्र च कल्पयन्ति ॥ १०१ ॥

पदत्रयं तत्र तु मध्यनाम्ना मानेन गातव्यमथो तृतीयम् ।
मानेन गानं तु विलम्बितेन स्तुतस्य नामाङ्कनमत्र कार्यम् ॥ १०२ ॥

खण्डे ध्रुवे त्रीणि पदानि तत्र विचित्रमाद्यं कथयन्ति सन्तः ।
स्याद्वासवाख्यं तदनु द्वितीयं ततस्तृतीयं मृदुनामधेयम् ॥ १०३ ॥

पदेषु चाद्यं द्वयमेकधातुस्ततस्तृतीयं किल भिन्नधातुः ।
आभोगधातुस्तदनन्तरं स्याद्वाग्गेयकारः पुनरत्र खण्डे ॥ १०४ ॥

कुर्यात् स्वनाम्नश्च तथा प्रबन्धनाम्नश्च विन्यासमिह प्रबन्धे ।
आभोगखण्डे पुनरन्तिमं तु सुचित्रसंज्ञं सुधियो वदन्ति ॥ १०५ ॥

जिताभिधेऽस्मिन् सुमुखीपदस्य मित्राभिधानस्य शची निरुक्ता ।
विकारिसंज्ञस्य भवेद्वरेण्या मांधातृसंज्ञस्य तु वायुवेगा ॥ ११९ ॥

सुमत्यभिख्यस्य तु वेदिनी स्याच्छोभाभिधानस्य तु मेदिनी च ।
जया सुशोभाख्यपदस्य सा स्याद्गौरी भवेद्गीतकनामभाजः ॥ १२० ॥

ब्राह्मी तथैवोचितसंज्ञकस्य मातङ्गिका तत्र विचित्रनाम्नः ।
स्याच्चण्डिका वासवनामकस्य सा देवतास्मिन् विजया मृदोस्तु ॥ १२१ ॥

चामुण्डिकान्त्यस्य सुचित्रनाम्नः षडुत्तराणां क्रमतो दशानाम् ।
उक्ताः पदानामिति देवतास्ताः प्राणान् पदानां दश वर्णयामः ॥ १२२ ॥

आद्यः समानो मधुरो द्वितीयः सान्द्रस्तृतीयोऽप्यथ कान्तसंज्ञः ।
दीप्तस्ततश्चैव समाहितोऽन्योऽथोऽग्राम्य उक्तः सुकुमारकोऽथ ॥ १२३ ॥

प्रसन्नसंज्ञो नवमो निरुक्त ओजस्विसंज्ञो दशमो मतोऽत्र ।
प्राणा दशैते कथिता विविच्योद्ग्राहादिनिष्ठेषु पदेषु योज्याः ॥ १२४ ॥

प्राणा दशैते हि षडुत्तरेषु कथं दशस्वेषु पदेषु योज्याः ।
संख्याविरोधादिति चेद्वदामो विविच्य सम्यक् परिहाररीतिम् ॥ १२५ ॥

द्वयोस्त्रयाणामपि चैक एव प्राणस्ततः स्यान्न विरोधशङ्का ।
तथा हि मांधात्रभिधानभाजो द्वितीयपादं भजतः पदस्य ॥ १२६ ॥

पदे किलाद्ये प्रचुरप्रयोगभाजस्तथा मन्मथवत्पदस्य ।
भवेद्द्वितीयस्य च धातुसाम्यात् प्राणः समानाभिध एक एव ॥ १२७ ॥

द्वितीयपादस्थितपल्लवाख्यपदे किलाद्ये च सुमत्यभिख्ये ।
आद्याङ्घ्रिनिष्ठेषु च पल्लवेषु कान्ताभिधाने प्रथमे पदे च ॥ १२८ ॥

प्राणः स एको मधुराभिधानः प्रकीर्तितोऽयं स्वरगुम्भसाम्यात् ।
द्वितीयपादस्थितपल्लवाख्यपदे द्वितीये किल शोभिनाम्नि ॥ १२९ ॥

तथाद्यपादस्थितपल्लवस्य भवेद्द्वितीयस्य जिताभिधस्य ।
सान्द्राभिधानः पुनरेक एव प्राणः प्रतीतः स्वरगुम्भसाम्यात् ॥ १३० ॥

द्वितीयपादस्थितपल्लवेषु तथा तृतीयस्य सुशोभिनाम्नः ।
आद्याङ्घ्रिनिष्ठेषु च पल्लवेषु तथा तृतीयस्य हि मित्रनाम्नः ॥ १३१ ॥

कान्ताभिधानः पुनरेक एव प्राणस्तु बोध्यः स्वरगुम्भसाम्यात् ।
पादत्रयेष्वेषु तथैव खण्डद्वयात्मकेषु स्वरगुम्भसाम्यात् ॥ १३२ ॥

योगे गुरुर्विकल्पेन लघुर्मतोऽसौ ।
मिकारमेतांश्चतुरश्च वर्णान् ॥ १६० ॥

ासु भाषासु पञ्चस्वपि साहितीज्ञाः ।
पभ्रंशे स्युस्तु ऊ ओ च इमे च हुं च ॥ १६१ ॥

क्तः सोऽप्यष्टधा स्यान्मयराः सतौ च ।
णानि त्रिभिर्मतो मो गुरुभिः कवीनाम् ॥ १६२ ॥

यं चेच्छन्दोविदस्तं यगणं भणन्ति ।
ान्ति चाद्यन्तयोश्चेद्गुरुवर्णयोगः ॥ १६३ ॥

वदन्ति मध्ये तथादौ लघुवर्णयोगे ।
र्णयोगेऽप्यन्ते लघुश्चेत्तगणं तमाहुः ॥ १६४ ॥

वदन्ति चाद्यन्तयोश्चेल्लघुवर्णयोगे ।
तमाहुर्मध्ये तथान्ते च लघुद्वयं चेत् ॥ १६५ ॥

भणन्ति वक्ष्ये स्वरूपं यगणादिमानाम् ।
गादिमानां ब्रूमः फलं संप्रति देवतां च ॥ १६६ ॥

गस्य गीतश्लोकादिषु श्रीश्च फलं प्रयोगे ।
स्य तद्वद्बुद्धिः फलं चादितया प्रयोगे ॥ १६७ ॥

गस्य गीतश्लोकादिभाजः फलमन्यदेतत् ।
गणस्य वायुरादौ प्रयोगस्य विदेशयानम् ॥ १६८ ॥

गणस्य शून्यं फलं भवेत्तत्प्रथमप्रयोगे ।
गणे दिनेशः फलं रुजास्य प्रथमं प्रयोगे ॥ १६९ ॥

---

ो यथा—कामाक्षी । गीर्वाणी । इत्यादि ।

ो यथा—भवानी । मृडानी । इत्यादि ।

गो यथा—अम्बिका । इन्दिरा । इत्यादि ।

णो यथा—गिरिजा । कमला । इत्यादि ।

ाणो यथा—श्रीकण्ठ । गौरीश । इत्यादि ।

ाणो यथा—गिरीश । रमेश । इत्यादि ।

गणो यथा—श्रीधर । शंकर । इत्यादि ।

गणो यथा—गिरिश । अमर । इत्यादि ।

पादेषु च त्रिष्वपि दीप्तनामा प्राणो भवेदेक इति प्रतीतः ।
प्राणान् दशोक्तानिह लक्षयामः समानमुख्यान् विनियोगपूर्वम् ॥ १३३ ॥

यस्याक्षराणि ध्वनयस्तथाल्पाः प्राणं समानाह्वयमामनन्ति ।
आद्याङ्घ्रिके मन्मथवत्पदे च द्वितीयपादस्थितिभाजि तद्वत् ॥ १३४ ॥

मान्धातृसंज्ञे च पदे तथैव प्राणः समानो विनियोजनीयः ।
यः स्वल्पया मूर्छनया समेतः प्राणोऽल्पनादो मधुराख्य एषः ॥ १३५ ॥

स मूर्छनायाः पुनरल्पभावो घटेत तानीकरणेन सम्यक् ।
इदं तु तानीकरणं ह्यताने तानत्वसंपादनमामनन्ति ॥ १३६ ॥

तानत्वसंपादनमेतदाद्यं स्वरं तु तानस्य पुरः प्रगाय ।
आरोहणाद्वाप्यवरोहणाद्वा मध्यस्थितानां क्रमशः स्वराणाम् ॥ १३७ ॥

संस्पृष्टतः किंचिदिहान्तिमस्य स्वरस्य चोच्चारणमात्रतः स्यात् ।
आद्यद्वितीयाङ्घ्रिगयोर्विलम्बितमानयोः पल्लवकत्रयेऽपि ॥ १३८ ॥

आद्योस्तथा कान्तसुमत्यभिख्याभाजोः प्रयोज्यः पदयोरयं स्यात् ।
प्राणस्तृतीयः परिकीर्तितोऽयं सान्द्राभिधोऽसौ निबिडाक्षरः स्यात् ॥ १३९ ॥

तेनात्र संगीतविदो हि धातोरपेक्षयाधिक्यमुशन्ति मातोः ।
अल्पध्वनिस्तारगतिस्तथायमल्पध्वनित्वं समवेक्ष्य मातुम् ॥ १४० ॥

जायेत धातोः पुनरल्पभावादितीरितं गीतकलाप्रवीणैः ।
अस्मिन् पुनस्तारगतत्वरूपविशेषणस्य प्रतिपादनेन ॥ १४१ ॥

आद्यद्वितीयाङ्घ्रिगयोर्विलम्बितमानयोः पल्लवमध्यभाजोः ।
पूर्वात् पदात् सम्यगनल्पसान्द्रं प्राणाश्रयत्वं प्रतिपादितव्यम् ॥ १४२ ॥

स्यात् कान्तनादेन समाहितत्वात् प्राणस्तु कान्तः किल कीर्तितोऽयम् ।
कान्तत्वमेतस्य वदन्ति रक्तिविशेषयोगादिति गानदक्षाः ॥ १४३ ॥

पादद्वयस्था युगपल्लवान्त्यपादद्वितीया द्रुतमानयुक्ता ।
क्रमाच्च मत्ते च सुशोभिसंज्ञे प्राणः प्रयोज्यः पुनरत्र कान्तः ॥ १४४ ॥

स्याद्दीप्तनादः किल दीप्तसंज्ञः संपूर्णनादेन च दीप्ततास्य ।
पादत्रयाद्येषु पदेषु खण्डद्वयात्मकेषु त्रिषु चैषु दीप्तः ॥ १४५ ॥

यथाक्रमं कामविकारिगीतसंज्ञेषु विज्ञैर्विनियोजनीयाः ।
प्राणस्तु षष्ठोऽत्र समाहिताख्यो वर्णो भवेत् स्थायिनि विद्यमानः ॥ १४६ ॥

स द्वादशे तद्युचिर्ताभिधाने योग्यान् स्वरान् स्थायिन एव कृत्वा ।
आलप्तिकायां गमकादिमायां योग्यो भवेदक्षरवर्जितायाम् ॥ १४७ ॥

प्राणः किलाग्राम्यपदाभिधेयो नादाक्षरावृत्तिवशेन वेद्यः ।
योज्यस्त्वयं मध्यलयेन युक्ते पदे ध्रुवाद्ये तु विचित्रसंज्ञे ॥ १४८ ॥

प्राणोऽष्टमः स्यात् सुकुमारसंज्ञो वर्णावलेर्नादकदम्बकस्य ।
तन्मूर्छनानामपि सौकुमार्यरूपेण युक्तस्तु गुणेन सोऽयम् ॥ १४९ ॥

योज्यः पदे मध्यलयेन युक्ते ध्रुवाद्द्वितीये किल वासवाख्ये ।
प्राणः प्रसन्नो नवमः प्रतीतः पदावलेः शीघ्रमिहावबोधात् ॥ १५० ॥

स्थानत्रयस्यापि विविक्तभावात् प्रसन्नभावाच्च वदामि मानम् ।
अयं ध्रुवान्त्ये च विलम्बिताढ्ये पदे नियोज्या मृदुसंज्ञके स्यात् ॥ १५१ ॥

प्राणः किलौजस्विपदाभिधेयः समासभूयस्त्वमिहौज उक्तम् ।
पदेषु तानेष्वपि तच्च बोध्यमितीरितं लक्षणमस्य विज्ञैः ॥ १५२ ॥

आभोगरूपे च सुचित्रसंज्ञे योज्यः प्रबन्धाद्यपदे स एषः ।
एलाप्रबन्धस्तु निरुक्तलक्ष्मा श्रोतुश्च गातुश्च सुखप्रदः स्यात् ॥ १५३ ॥

एलाप्रबन्धस्य निरूप्य सम्यक् साधारणं लक्षणमेवमादौ ।
एलाप्रबन्धस्य ततो विशेषान्निरूपयामो निपुणं क्रमेण ॥ १५४ ॥

सैषा चतुर्धा च नियुक्तलक्ष्मा पूर्वा गणैला तदनु द्वितीया ।
मात्रादिरेला च ततस्तृतीया वर्णैलका देशपदादिरेला ॥ १५५ ॥

---

## — ॥ गणैलालक्षणम् ॥ —

तावद्गणैलां विनिरूपयामो गणः समूहः कथितो द्विधा यः ।
तत्रादिमो वर्णगणप्रतीतो मात्रागणस्तत्र भवेद्द्वितीयः ॥ १५६ ॥

वर्णो द्विधा तत्र गुरुर्लघुश्च गुरुं पुनस्तत्र निरूपयामः ।
वर्णस्त्वनुस्वारसमन्वितो यो विसर्गयुग्व्यञ्जनशेखरो वा ॥ १५७ ॥

दीर्घस्तथा युक्तपरोऽथ वा यः सर्वे किलैते गुरुसंज्ञयोक्ताः ।
पादान्तवर्ती लघुरेव वर्णो भवेद्विकल्पेन गुरुर्मतोऽसौ ॥ १५८ ॥

स्यादेकमात्रो लघुरित्युपात्तो मात्राद्वयेनाथ युतो गुरुः स्यात् ।
गुरुर्लिपौ वक्रतया विलेख्यो लघुस्तु वर्णः सरलो विलेख्यः ॥ १५९ ॥

षडुत्तराणीति दश द्विवारं गीत्वा ध्रुवे न्यास इहोपदिष्टः ।
त्रयोदशस्यैव पदस्य चाद्ये खण्डे ग्रहं तु प्रतिपादयामः ॥ १०६ ॥

ग्रहस्त्वमुष्मिन् विदितः प्रबन्धे भवेदतीतोऽयमनागतश्च ।
विनैव तालं परिगृह्य गीतं सकृच्च गीत्वा पुनरत्र तालम् ॥ १०७ ॥

गृह्णाति चेत् सोऽयमतीतनामा ग्रहस्ततोऽनागतमामनामः ।
विनैव गीतं परिगृह्य तालं सकृच्च गीत्वा पुनरत्र तालम् ॥ १०८ ॥

प्रगृह्य चेद्गायति स ग्रहोऽसावनागताख्यः कथितो मुनीन्द्रैः ।
तालान् प्रबन्धे प्रतिपादयामो मण्ठो द्वितीयः प्रतितालकश्च ॥ १०९ ॥

कङ्कालसंज्ञश्च भवन्ति तालाश्चत्वार एतांश्च निरूपयामः ।
मण्ठाख्यताले सगणात् परं तु चतुर्लघु स्यादपि शब्दहीनम् ॥ ११० ॥

भूतद्वयं चैव लघुद्वयं च द्वितीयताले मुनिभिर्निरुक्तम् ।
कङ्कालतालस्तु चतुर्विधः स्यात् पूर्णश्च खण्डो विषमः समश्च ॥ १११ ॥

चतुर्द्रुती पूर्वगलौ तु पूर्णकङ्कालताले कथितस्त्विहाद्यः ।
द्रुतद्वयं चैव गुरुद्वयं चेत् स खण्डकङ्काल इहोपदिष्टः ॥ ११२ ॥

गुरुद्वयं चेत्तु लघुद्वयान्ते समादिकङ्कालममुं वदन्ति ।
लघोः परं यत्र गुरुद्वयं स्यात् कङ्कालमेनं विषमादिमाहुः ॥ ११३ ॥

लघू द्रुतौ च प्रतितालकेऽस्मिन् प्लुतो विरामश्च गणश्च न स्युः ।
गाम्भीर्यविश्राणनशौर्यधैर्यसौन्दर्यमुख्याश्च गुणाः प्रबन्धे ॥ ११४ ॥

संवर्णनीयाः किल नेतुरेलासामान्यलक्ष्मेत्युदितं मुनीन्द्रैः ।

---

## — ॥ एलाभेदाः ॥ —

एलाप्रबन्धे बहवः प्रभेदाः सन्ति स्फुटं तेषु च कांश्चिदेव ॥ ११५ ॥

व्युत्पत्तिहेतोः प्रतिपादयामः सम्यङ्मतङ्गादिमतानुसारात् ।
एलेति शब्दस्य भवन्त्यकारेकारौ लकारोऽपि च वर्णभेदाः ॥ ११६ ॥

दैत्यारिदेवत्यमकारमाहुः प्रद्युम्नदेवत्यमिकारमेव ।
लक्ष्मीर्लकारस्य च देवता स्यादेलास्थवर्णत्रयदेवताः स्युः ॥ ११७ ॥

क्रमाभिधस्याद्यपदस्य तस्मिन् पद्मालया सा खलु देवता स्यात् ।
स्यात् पत्रिणी मन्मथवत्पदस्य कान्तस्य रञ्जन्यपि देवता स्यात् ॥ ११८ ॥

ते च स्वरव्यक्तियुताः प्रबन्धनिरूपणेऽत्र स्वरशब्दवाच्याः ।
औदार्यशौर्यादिगुणप्रशंसाशब्दं प्रभूणां बिरुदं वदन्ति ॥ ५२ ॥

आर्यप्रसिद्धेर्बिरुदाख्यशब्दो म्लेच्छप्रसिद्धेरथ वा निरुक्तः ।
एवं प्रसक्ते सति संशयेऽस्मिन् विनिश्चितं श्रीचरणैर्विविच्य ॥ ५३ ॥

विरुद्धवाची बिरुदाख्यशब्दो भवेन्महाराष्ट्रजनप्रसिद्धः ।
निर्जित्य शत्रून् बिरुदं दधानं राजानमासाद्य सपत्नभूपाः ॥ ५४ ॥

रामार्जुनादेरिव शौर्यरीती राधासुतादेरिव दातृतेति ।
एतत्प्रबन्धश्रवणे तदीयचिह्नावलोके खलु ते विशुद्धाः ॥ ५५ ॥

एतादृशं वीररसप्रधानं द्विषां तथोद्वेगकरं च यत् स्यात् ।
द्विषां विरुद्धप्रतिपादनस्य बोद्धव्यमेतद्बिरुदाभिधानम् ॥ ५६ ॥

अथ क्रमप्राप्तपदं वदामो निरुक्तपूर्वाद्बिरुदाच्च भिन्नः ।
रसान्तरेणापि समन्वितश्च यद्वाचकं तत्तु पदाभिधानम् ॥ ५७ ॥

तेनेति शब्दं किल तेन्नकः स्याच्छ्रेयःप्रदो मङ्गलवाचकश्च ।
कथं तु तेन्नस्त्विह मङ्गलार्थो विहाय चोङ्कारमथेति शब्दम् ॥ ५८ ॥

अत्रोच्यते तत्त्वमसीति वाक्ये सूत्रेषु वा सत्यवतीसुतस्य ।
तद्ब्रह्मवाक्येऽपि च तैत्तिरीये ब्रह्मैव लक्ष्यं किल तत्पदेन ॥ ५९ ॥

हरो हरिश्चापि विरिञ्चनश्च सुरास्त्रिकास्तत्पदकीर्तनेन ।
अतश्च गानेऽपि च तेन्नकारस्तालप्रयोगेऽपि च तत्तकारः ॥ ६० ॥

अतीव कल्याणविशेषवाची भवेदयं सर्वजनप्रसिद्धः ।
मृदङ्गवीणामुरजादिवाद्यसमुद्भवानां करघट्टनेन ॥ ६१ ॥

दिगिद्धिगीत्येवमुदीरितानां तथैव तेषां क्वणनादिमानाम् ।
शङ्खादिजानां किल तुत्थुगानां वाद्याक्षराणां निकरस्तु पाटः ॥ ६२ ॥

चच्चत्पुटादिस्त्विह तालसंज्ञा विविच्य चानन्तरमेव वक्ष्ये ।
अङ्गानि षट् तस्य निरूप्य पश्चाज्जातिप्रभेदानिह वर्णयामः ॥ ६३ ॥

षडङ्गयुक्ता खलु मेदिनी स्यादानन्दिनी पञ्चभिरन्विताङ्गैः ।
चतुर्भिरङ्गैः किल दीपनी स्यादङ्गत्रयेणैव तु पावनी च ॥ ६४ ॥

तारावली त्वङ्गयुगेन युक्ता संख्याविशेषात् किल नामभेदाः ।
मतान्तरेणापि च नाम वक्ष्ये सरूपकं सर्वजनप्रसिद्धम् ॥ ६५ ॥

स्याद्देवतास्मिन् भगणे सुधांशुः कीर्तिः फलं तत्प्रथमप्रयोगे ।
स्याद्देवतास्मिन्नगणे बिडौजा आदौ प्रयोगे फलमायुरस्य ॥ १७० ॥

स्वस्यापि वर्णस्य महीश्वरस्य श्रेयोऽधिकं वाञ्छति चेत् कवीन्द्रः ।
आदौ प्रयुञ्जीत मयौ भनौ च गणान् किलैतांश्चतुरो न चान्यान् ॥ १७१ ॥

छन्दोविचित्यामितरच्च षष्ठं विलोकनीयं विबुधाग्रगण्यैः ।
फलं गणानां प्रतिपाद्य सम्यगथाक्षराणां फलमामनामः ॥ १७२ ॥

षडुत्तराणां च भवेद्दशानां स्याद्देवतानाममृतांशुरेव ।
आयुष्यवृद्धिर्भवतीह तेषामादौ प्रबन्धस्य किल प्रयोगे ॥ १७३ ॥

स्यात् कादयः पञ्च परं कवर्गस्तद्देवता भूमिसुतः प्रतीतः ।
आदौ प्रबन्धस्य तु तत्प्रयोगे कवेश्च वर्णस्य यशः फलं स्यात् ॥ १७४ ॥

स्याच्चादयः पञ्च परं चवर्गास्तद्देवता सोमसुतः प्रतीतः ।
आदौ प्रबन्धस्य तु तत्प्रयोगे वर्णस्य वक्तुश्च फलं च कीर्तिः ॥ १७५ ॥

स्याट्टादयः पञ्च परं टवर्गो बृहस्पतिस्तस्य तु देवता स्यात् ।
आदौ प्रबन्धस्य तु तत्प्रयोगे संपत् फलं संकथितं मुनीन्द्रैः ॥ १७६ ॥

स्यात्तादयः पञ्च परं तवर्गस्तद्देवतां शुक्रमुदीरयन्ति ।
भवेत् प्रबन्धस्य मुखे प्रयोगे फलं तु सौभाग्यमुदीरयन्ति ॥ १७७ ॥

स्यात् पादयः पञ्च परं पवर्गस्तद्देवता चापि शनैश्चरः स्यात् ।
आदौ प्रबन्धस्य च तत्प्रयोगे स्यात् कीर्तिमाद्यं फलमित्युपेयम् ॥ १७८ ॥

यकारमुख्यांश्चतुरोऽपि तज्ज्ञा यवर्गमाहुः किल देवतार्कः ।
आदौ प्रबन्धस्य तु तत्प्रयोगे फलं किलान्यन्निगदन्ति सन्तः ॥ १७९ ॥

शकारपूर्वांश्चतुरोऽपि वर्णाञ्शकारवर्गं समुदीरयन्ति ।
स्याद्देवता तस्य स सैंहिकेयस्त्वन्यत् फलं तत्प्रथमप्रयोगे ॥ १८० ॥

इत्यष्टधा वर्णगणान्निरूप्य मात्रागणानत्र विवेचयामः ।

---

— ॥ मात्रागणाः ॥ —

मात्रा कला स्यादिह लो लघुः स्याद्गणाः प्रतीताः षपचास्तदौ च ॥ १८१ ॥

षाण्मात्रिको यः षगणः स वेद्यः स्यात् पञ्चमात्रः पगणः प्रतीतः ।
चतुष्कलः स्याच्चगणः प्रतीतो भवेत् त्रिमात्रस्तगणाभिधानः ॥ १८२ ॥

द्विमात्रिक: स्याद्गण: किलैवं मात्रागणानां प्रविभाग उक्त: ।
नामान्तराणि प्रतिपादयामो मात्रागणानामधुना तु केषाम् ॥ १८३ ॥

चत्वारि वृत्तानि भवन्ति यान्यत्युक्ताभिधे छन्दसि तेषु ये द्वे ।
द्वितीयतुर्ये लघुपूर्वके स्त: पूर्वं तयोरेव लघुर्विलेख्य: ॥ १८४ ॥

चत्वारि वृत्तानि वदन्ति तानि गणान् गणज्ञा रतिपूर्वकास्ते ।
वृत्तानि तत्र प्रभवन्ति चाष्टौ मध्याभिधे छन्दसि तेषु यानि ॥ १८५ ॥

द्वितीयतुर्ये च तथैव षष्ठाष्टमे च वृत्तानि लपूर्वकाणि ।
आदौ च तेषां लिखितो लघुश्चेदष्टापि तान् कामगणान् वदन्ति ॥ १८६ ॥

व्यष्टप्रतिष्ठागतवृत्तकानि भवन्त्यथैतेषु लपूर्वकाणाम् ।
आदौ लघुश्चेल्लिखितस्तदानीं व्यष्टापि ते बाणगणा भवन्ति ॥ १८७ ॥

इयन्ति वृत्तानि भवन्ति तत्तच्छन्दोविशेषेष्विति निर्णयाम: ।
प्रस्तारमात्रं प्रतिपादयामश्छन्दोविचित्यादिनिरुक्तरीत्या ॥ १८८ ॥

---

## — ॥ प्रस्तारविधि: ॥ —

पदे पुरा सर्वगुराविहाद्यगुरोरधस्तात्तु लघुं विलिख्यात् ।
यथोपरिष्टाच्च तथैव शेषमूने गुरूनेव लिखेत् समस्तान् ॥ १८९ ॥

एतद्विधानं पुनरेव कुर्याद्यावत्तु सर्वे लघवो भवन्ति ।
प्रस्तार एषोऽभिहित: समग्रमत्युक्तिका या तदुदाहराम: ॥ १९० ॥

आदौ किल द्वे गुरुणी विलिख्य लघुं लिखेदाद्यगुरोरधस्तात् ।
यथोपरीत्युक्तनयेन शेषे न्यस्येद्गुरू ह्येष लगात्मक: स्यात् ॥ १९१ ॥

द्वितीयपङ्क्त्यन्तगुरोरधस्तादाद्याद्गुरोरित्यधुनोक्तरीत्या ।
लघुं लिखेत् किं च गुरुं तथादावूने गुरुनित्यभिधानत: प्राक् ॥ १९२ ॥

अयं प्रभेदो गुरुलात्मक: स्यात्तुरीयभेदं प्रतिपादयाम: ।
तृतीयपङ्क्त्याद्यगुरोरधस्ताल्लघुं विलिख्याथ यथोपरीति ॥ १९३ ॥

न्यायाल्लिखेत्तत्र लघुं परं च लघुद्वयात्मा च तुरीयभेद: ।
मध्याभिधे छन्दसि च प्रवक्ष्ये प्रस्ताररीतिं सुखबोधहेतो: ॥ १९४ ॥

आदौ गुरूंस्त्रीन् विलिखेत् क्रमेण भेदं तमेनं मगणं भणन्ति ।
अथाद्यपङ्क्त्यादिगुरोरधस्तान्न्यस्येल्लघुं तत्र यथोपरीति ॥ १९५ ॥

द्विमात्रिकः स्याद्गणः किलैवं मात्रागणानां प्रविभाग उक्तः ।
नामान्तराणि प्रतिपादयामो मात्रागणानामधुना तु केषाम् ॥ १८३ ॥

चत्वारि वृत्तानि भवन्ति यान्यत्युक्ताभिधे छन्दसि तेषु ये द्वे ।
द्वितीयतुर्ये लघुपूर्वके स्तः पूर्वं तयोरेव लघुर्विलेख्यः ॥ १८४ ॥

चत्वारि वृत्तानि वदन्ति तानि गणान् गणज्ञा रतिपूर्वकांस्ते ।
वृत्तानि तत्र प्रभवन्ति चाष्टौ मध्याभिधे छन्दसि तेषु यानि ॥ १८५ ॥

द्वितीयतुर्ये च तथैव षष्ठाष्टमे च वृत्तानि लपूर्वकाणि ।
आदौ च तेषां लिखितो लघुश्चेदष्टापि तान् कामगणान् वदन्ति ॥ १८६ ॥

व्यष्टप्रतिष्ठागतवृत्तकानि भवन्त्यथैतेषु लपूर्वकाणाम् ।
आदौ लघुश्चेल्लिखितस्तदानीं व्यष्टापि ते बाणगणा भवन्ति ॥ १८७ ॥

इयन्ति वृत्तानि भवन्ति तत्तच्छन्दोविशेषेष्विति निर्णयामः ।
प्रस्तारमात्रं प्रतिपादयामश्छन्दोविचित्यादिनिरुक्तरीत्या ॥ १८८ ॥

---

## — ॥ प्रस्तारविधिः ॥ —

पदे पुरा सर्वगुराविहाद्यगुरोरधस्तात्तु लघुं विलिख्यात् ।
यथोपरिष्टाच्च तथैव शेषमूने गुरूनेव लिखेत् समस्तान् ॥ १८९ ॥

एतद्विधानं पुनरेव कुर्याद्यावत्तु सर्वे लघवो भवन्ति ।
प्रस्तार एषोऽभिहितः समग्रमत्युक्तिका या तदुदाहरामः ॥ १९० ॥

आदौ किल द्वे गुरुणी विलिख्य लघुं लिखेदाद्यगुरोरधस्तात् ।
यथोपरीत्युक्तनयेन शेषे न्यस्येद्गुरू ह्येष लगात्मकः स्यात् ॥ १९१ ॥

द्वितीयपङ्क्त्यन्तगुरोरधस्तादाद्याद्गुरोरित्यधुनोक्तरीत्या ।
लघुं लिखेत् किं च गुरुं तथादावूने गुरूनित्यभिधानतः प्राक् ॥ १९२ ॥

अयं प्रभेदो गुरुलात्मकः स्यात्तुरीयभेदं प्रतिपादयामः ।
तृतीयपङ्क्त्याद्यगुरोरधस्ताल्लघुं विलिख्याथ यथोपरीति ॥ १९३ ॥

न्यायाल्लिखेत्तत्र लघुं परं च लघुद्वयात्मा च तुरीयभेदः ।
मध्याभिधे छन्दसि च प्रवक्ष्ये प्रस्ताररीतिं सुखबोधहेतोः ॥ १९४ ॥

आदौ गुरूंस्त्रीन् विलिखेत् क्रमेण भेदं तमेनं मगणं भणन्ति ।
अथाद्यपङ्क्त्यादिगुरोरधस्तान्न्यस्येल्लघुं तत्र यथोपरीति ॥ १९५ ॥

न्यायेन शिष्टौ तु गुरू लिखेद्द्वौ भेदं तमाहुर्यगणं गणज्ञाः ।
द्वितीयपङ्क्तिस्थगुरोरथादिरधो लिखित्वा लघुमेव पूर्वम् ॥ १९६ ॥

यथोपरीतीरितरीतितो ह न्यस्येच्च शेषे तु लघुं गुरुं च ।
स एव भेदः सगणः प्रतीतो भेदं ततः पञ्चममामनामः ॥ १९७ ॥

चतुर्थपङ्क्त्यां तु गुरोरधस्ताल्लघुं लिखित्वा तदनु क्रमेण ।
ऊने गुरूनित्यभिधानतः प्राग्लिखेद्गुरू द्वौ पुनरूनभागे ॥ १९८ ॥

स एष भेदस्तगणो निरुक्तः षष्ठं तु भेदं तदनु ब्रवीमि ।
आदेर्गुरोः पञ्चमपङ्क्तिभाजो लिखेदधस्ताल्लघुमेव पूर्वम् ॥ १९९ ॥

यथोपरीत्युक्तिवशेन शिष्टौ गुरुं लघुं द्वौ विलिखेत् क्रमेण ।
भेदं तमाहुर्जगणं गणज्ञा भेदं ततः सप्तममीरयामः ॥ २०० ॥

गुरोर्द्वितीयस्य हि षष्ठपङ्क्तिस्थितस्य चाधो विलिखेल्लघुं प्राक् ।
शेषे लघु किं च यथोपरीति न्यायादधस्ताद्गुरुमूनभागे ॥ २०१ ॥

भेदं तमेनं भगणं भणन्ति ततोऽष्टमं भेदमुदीरयामः ।
आदेर्गुरोः सप्तमपङ्क्तिभाजस्त्वधो लिखित्वा लघुमेव पूर्वम् ॥ २०२ ॥

यथोपरि न्यायवशेन शिष्टौ स्यातां लघू द्वौ नगणोऽयमुक्तः ।
प्रस्तारमार्गोऽयमिति प्रदिष्टश्छन्दोमुखेष्वप्यखिलेषु योज्यः ॥ २०३ ॥

प्रस्तारमार्गं पुनरेवमुक्त्वा गणैर्विचित्रान् गणयेत् प्रबन्धान् ।

---

— ॥ गणैलाः ॥ —

गणैरमीभिर्ग्रथिता गणैलास्तिस्रो भिदास्ताश्च ततो वदामः ॥ २०४ ॥

आद्यात्र शुद्धा कथिता ततः संकीर्णा द्वितीया विकृता तृतीया ।
आद्यात्र शुद्धा तु भवेच्चतुर्धा नादावती प्राथमिकीह वेद्या ॥ २०५ ॥

हंसावती तत्र भवेद्द्वितीया नन्दावती नाम ततस्तृतीया ।
भद्रावती तासु भवेच्चतुर्थी साधारणं लक्ष्म वदामि तासाम् ॥ २०६ ॥

पादे च खण्डद्वय एव तासां भवेद्गणानां नियमः समस्तः ।
खण्डद्वयानन्तरमिच्छयैव कार्यः प्रयोगस्तु भवेत् पदानाम् ॥ २०७ ॥

साधारणं लक्षणमित्थमुक्त्वा नादावतीलक्ष्म विशिष्य वक्ष्ये ।

---

— ॥ नादावती ॥ —

सा पञ्चभिः स्याद्भगणैरुपेता नादावतीयं नगणेन चान्ते ॥ २०८ ॥

आद्यं तु खण्डद्वयमेव कार्यं गणैस्तु साधारणलक्ष्मरीत्या ।
स मण्ठतालेन च टक्करागे गेयस्तु नादावतिकाप्रबन्धः ॥ २०९ ॥

ऋग्वेदतः सा समभूच्च शुभ्रवर्णा तथा ब्राह्मणजातिरेषा ।
पाञ्चालिकां रीतिमुशन्ति तस्याः सा कैशिकी वृत्तिरिहोपदिष्टा ॥ २१० ॥

शृङ्गारनामा कथितो रसोऽस्याः सरस्वतीप्रीतिकरी च सेयम् ।

— ॥ हंसावती ॥ —

शंसामि हंसावतिकामिदानीं सा पञ्चभिः स्याद्रगणैरुपेता ॥ २११ ॥

समन्विता सा सगणेन चान्ते खण्डद्वयेऽयं नियमस्तु वेद्यः ।
अस्या द्वितीयाख्यमुशन्ति तालं रागं च हिन्दोलमुदीरयन्ति ॥ २१२ ॥

ज्ञेया यजुर्वेदभवा तु वर्णात् स्याल्लोहिता क्षत्रियजातिरेषा ।
वृत्तिस्तथैवारभटी च लाटी रीतिश्च रौद्रश्च रसोऽवसेयः ॥ २१३ ॥

प्रीत्यै नियोज्या खलु चण्डिकाया हंसावतीयं कथितानुपूर्व्यात् ।

— ॥ नन्दावती ॥ —

नन्दावतीलक्षणमीरयामः सा पञ्चभिः स्यात्तगणैरुपेता ॥ २१४ ॥

अन्ते समेता जगणेन खण्डद्वये तु सोऽयं नियमः पुरोक्तः ।
तालस्तु तस्याः प्रतितालनामा रागो भवेन्मालवकैशिकाख्यः ॥ २१५ ॥

सा सामवेदादुदपादि तस्याः पीतश्च वर्णः किल वैश्यजातिः ।
वीरो रसः सात्त्वतिका च वृत्तिर्गौडी च रीतिः प्रियकृच्च शच्याः ॥ २१६ ॥

— ॥ भद्रावती ॥ —

भद्रावतीलक्ष्म भणामि सम्यक् सा पञ्चभिः स्यान्मगणैः समेता ।
युक्ता तथान्ते यगणेन सेयं खण्डद्वयेऽसौ नियमस्तु वेद्यः ॥ २१७ ॥

कङ्कालताला ककुभाख्यरागा साथर्ववेदादुदपादि तस्याः ।
कृष्णश्च वर्णः खलु शूद्रजातिरस्यास्तु वृत्तिः किल भारती सा ॥ २१८ ॥

वैदर्भिका रीतिरिहोपदिष्टा बीभत्सनामा च रसोऽथ सिद्धः ।
सैषा तु वाराद्यनुमोदहेतुर्भद्रावती सेयमुदाहृतैवम् ॥ २१९ ॥

तद्वर्णजात्यादिनिरूपणं च तत्तत्फलस्यातिशयाय बोध्यम् ।
या वृत्तयो याः खलु रीतयश्च शुद्धासु नादावतिकादिमासु ॥ २२० ॥

समीरिताः संप्रति लक्ष्म तासां संक्षिप्य वक्ष्यामि यथाक्रमेण ।
या वाङ्मनःकायभवा हि चेष्टा पुमर्थसिद्ध्यौपयिका च सेयम् ॥ २२१ ॥

वृत्तिश्च सैषापि चतुर्विधा स्यादाद्या च तासामिह कैशिकीति ।
ततो भवेदारभटी द्वितीया सा सात्त्वती संविदिता तृतीया ॥ २२२ ॥

सा भारती स्यात् कथिता चतुर्थी क्रमेण चासामिह लक्ष्म वक्ष्ये ।
आद्या तु तासामतिकोमलार्थसंदर्भशालिन्यथ कैशिकी स्यात् ॥ २२३ ॥

अथ द्वितीया ह्यधिकोद्धतार्थसंदर्भवत्यारभटी तु वृत्तिः ।
सा सात्त्वती स्यात् खलु वृत्तिरीषत्प्रौढार्थसंदर्भयुता हि या स्यात् ॥ २२४ ॥

सा भारतीवृत्तिरिहेयमीषन्मृद्वर्थसंदर्भयुता हि या स्यात् ।
रीतिस्तु सा संघटनं पदानां भवेद्गुणालिङ्गितमेव या स्यात् ॥ २२५ ॥

सैषा चतुर्धा खलु रीतिरुक्ता पाञ्चालिकाद्या किल तासु वेद्या ।
वैदर्भिका रीतिरिति द्वितीया गौडी तृतीया गदिताथ लाटी ॥ २२६ ॥

भवेच्चतुर्थी पुनरीरितानां लक्ष्माणि वक्ष्ये ललितैर्वचोभिः ।

---

## — ॥ विकृतैलाः ॥ —

शुद्धाश्चतस्रः पुनरेवमेला निरूपितास्ता निपुणैर्वचोभिः ॥ २२७ ॥

ता एव वक्ष्ये तदनन्तरं संकीर्णाश्च तासां बहवो हि भेदाः ।
सन्ति स्फुटं लक्षणसंकरेण नैते प्रतीताः खलु लक्ष्यरीतौ ॥ २२८ ॥

अतः किलैतान् समुपेक्ष्य सर्वान् विमुच्य पश्चाद्विकृतान् वदामः ।
तिस्रस्तु शुद्धासु चतुर्विधासु भवन्ति नादावतिकादयो याः ॥ २२९ ॥

इमा विकारेण युता गणानां भवन्ति तिस्रो विकृताभिधानाः ।
गुणस्थितस्यैव गुरोर्लघोर्वा यो व्यत्ययः सोऽत्र भवेद्विकारः ॥ २३० ॥

प्रत्येकमेताः खलु पञ्चधा स्युर्नादावतीभागभगणस्य चेत् स्यात् ।
विकारिकासौ जगणोऽथ वा स्यात्तथैव सोऽयं सगणो भवेद्वा ॥ २३१ ॥

हंसावतीभागगणो विकारी भवेद्यदि स्यात्तगणोऽयमुक्तः ।
तथैव सोऽयं यगणोऽथ वा स्यादेवं च नादावतिकागणेषु ॥ २३२ ॥

पञ्चस्वपि स्याद्भगणो विकारी यद्येकक: सा खलु वासवी स्यात् ।
विकारिभावे भगणद्वयस्य भवेद्द्वितीया खलु संगताख्या ॥ २३३ ॥

गणत्रयस्यापि विकारिभावात् त्रेता तृतीया कथितात्र सम्यक् ।
चत्वार एते भगणास्तदीयविकारिणश्चेच्चतुरा तुरीया ॥ २३४ ॥

विकारिणश्चेद्भगणाश्च पञ्चबाणाभिधाना खलु पञ्चमीयम् ।
सा वासवी पञ्चविधा पुरोक्ता रामाभिधाना च मनोरमा च ॥ २३५ ॥

स्यादुन्नता शान्तिरिति प्रतीता स्यान्नागरी तत्र च पञ्चमी च ।
आद्यो गणश्चेद्विकृतस्तदानीं रामाभिधाना किल वासवी स्यात् ॥ २३६ ॥

गणो द्वितीयो विकृतो यदि स्यान्मनोरमाख्या कथिता द्वितीया ।
गणस्तृतीयो विकृतो यदि स्यात्तदोन्नता नाम भवेत्तृतीया ॥ २३७ ॥

गणस्तुरीयो विकृतो यदि स्यात्तामेव शान्ति समुदाहरन्ति ।
स पञ्चमो वैकृतभाग्गण: स्यात् सा नागरी पञ्चमिकोदितासौ ॥ २३८ ॥

गणद्वयीवैकृतभाजिनी या सा संगतायास्तु भिदा दशैता: ।
आद्या तु तासां रमणीयनामा भवेत्तथा वै विषमा द्वितीया ॥ २३९ ॥

समा तृतीया कथिता तुरीया श्री: पञ्चमी तत्र च कामुकी च ।
कामोत्सवा तत्र भवेच्च षष्ठी स्यान्नन्दिनी तासु च सप्तमी च ॥ २४० ॥

गौरी पुनस्त्वासु तथाष्टमी स्यात् सौम्या नवम्यत्र निरूपिता च ।
दशम्युपात्ता रतिपूर्वदेहा त्वासां पुनर्लक्षणमासनाम: ॥ २४१ ॥

आद्येऽपि तद्वद्भगणे द्वितीये विकारत: स्याद्रमणीयसंज्ञा ।
तथैव चाद्ये भगणे तृतीये विकारत: स्याद्विषमाभिधाना ॥ २४२ ॥

आद्येऽपि तद्वद्भगणे तुरीये विकारत: स्यात्तु समा निरुक्ता ।
आद्यस्य तद्वत् किल पञ्चमस्य लक्ष्मीर्निरुक्ता तु विकारभावात् ॥ २४३ ॥

सा नन्दिनी स्याद्भगणे द्वितीये विकारभावात् किल पञ्चमेऽपि ।
गौरी मता स्याद्भगणे तृतीये तुरीयकेऽप्यत्र विकारभावात् ॥ २४४ ॥

सौम्या निरुक्ता भगणे तृतीये विकारिभावात् किल पञ्चमेऽपि ।
विकारिभावाद्भगणे चतुर्थे स्यात् पञ्चमी सा रतिपूर्वदेहा ॥ २४५ ॥

गणत्रयस्यापि विकारिभावात् त्रेताभिधाना खलु पूर्वमुक्ता ।
तस्या: प्रभेदा दशधा भवेयुस्तेष्वादिमा मङ्गलनामधेया ॥ २४६ ॥

भवेद्द्वितीया रतिमङ्गलाख्या तथा तृतीया कलिकाभिधाना ।
भवेच्चतुर्थी तनुपूर्वमध्या वीरादिमा श्रीरपि पञ्चमी स्यात् ॥ २४७ ॥

षष्ठी प्रतीता जयमङ्गलाख्या सा सप्तमी स्याद्विजयाभिधाना ।
तेष्वष्टमी स्यात् किल रत्नमाला नवम्यथोक्ता गुरुपूर्वमध्या ॥ २४८ ॥

रतिप्रभा स्याद्दशमी निरुक्ता क्रमेण चासामथ लक्ष्म वक्ष्ये ।
सा मङ्गलाद्याभरणस्य चादेस्तथा द्वितीयस्य तृतीयकस्य ॥ २४९ ॥

विकारतः स्यादिह तद्विकारो लघुद्वयत्वेन गुरोः कृतः स्यात् ।
आद्ये द्वितीयस्य तुरीयकस्य भवेद्विकारे रतिमङ्गलाख्या ॥ २५० ॥

आदेस्तृतीयस्य च पञ्चमस्य भवेद्विकारे कलिकाभिधाना ।
तृतीयतुर्यान्वितपञ्चमस्य भवेद्विकारे तनुपूर्वमध्या ॥ २५१ ॥

आदेस्तुरीयस्य च पञ्चमस्य वीरादिमा श्रीश्च विकारतः स्यात् ।
आदेस्तृतीयस्य तुरीयकस्य विकारतः स्याज्जयमङ्गलाख्या ॥ २५२ ॥

आदेर्द्वितीयस्य चतुर्थकस्य विकारिभावाद्विजयाभिधेया ।
स्याद्रत्नमाला तु तृतीयतुर्यद्वितीयकानां च तथा विकारात् ॥ २५३ ॥

आदेर्द्वितीयस्य च पञ्चमस्य विकारिभावाद्गुरुपूर्वमध्या ।
रतिप्रभा सा विकृते द्वितीयातृतीययोः स्यादिह पञ्चमस्य ॥ २५४ ॥

त्रेताविभागात् दश सम्यगुक्ता गणत्रितय्या च विकारिभाजा ।
ततश्चतुर्णां विकृतेर्गणानां पञ्च प्रवक्ष्ये चतुरः प्रभेदान् ॥ २५५ ॥

आद्या भवेदुत्सवशब्दपूर्वा क्रिया महानन्दपदाभिधाना ।
ततस्तृतीया लहरीकृता या जया ततोऽन्या कुसुमावती स्यात् ॥ २५६ ॥

प्रियोत्सवाद्या कथिता द्वितीयादीनां चतुर्णां विकृतेर्गणानाम् ।
आदेस्तुरीयस्य च पञ्चमस्य तथा तृतीयस्य विकारिभावात् ॥ २५७ ॥

भवेद्द्वितीयश्च महत्पदाद्या नन्दाभिधानश्चतुराप्रभेदः ।
आदेर्द्वितीयस्य च पञ्चमस्य तुर्यस्य वेद्या लहरी विकारात् ॥ २५८ ॥

आदेर्द्वितीयस्य च पञ्चमस्य तथा तृतीयस्य जया विकारात् ।
विकारिभावात् प्रथमद्वितीयतृतीयतुर्ये कुसुमावती स्यात् ॥ २५९ ॥

एका भिदा पञ्चगणीविकारे भवेदितः प्राञ्च उदाहरन्ति ।
प्रत्येकमेताः कथितास्तु नादावल्यादिकस्त्रिंशदिहैकयुक्ता ॥ २६० ॥

एताः समस्ता मिलिता भवेयुस्त्रयेण युक्ता नवतिः पुरोक्ता ।
अन्येऽपि केचिद्विकृताः प्रभेदा भवन्ति ते पञ्चदशैव तेषु ॥ २६१ ॥

पञ्चैव नादावतिकाप्रभेदास्तथैव हंसावतिकाजुषोऽपि ।
पञ्चापि नन्दावतिकाप्रभेदा नादावलीयांस्तु निरूपयामः ॥ २६२ ॥

या पूर्वमुक्ता खलु संगताख्या सा तावदत्र त्रिविधावधेया ।
सावित्रिका पावनिका च वातसावित्रिका चेति यथाक्रमेण ॥ २६३ ॥

प्रक्षिप्य सौरे जगणे तु सौरे सावित्रिका तत्र भवेत् प्रभेदः ।
स्याद्वायुदेवे सगणे तु तत्र प्रक्षिप्यमाणे सति पावनी स्यात् ॥ २६४ ॥

प्रक्षिप्यमाणे जगणे तु वातसावित्रिका स्यात् सगणे च तस्याः ।
या वासवी त्वेकगणे विकारयुक्ता प्रयुक्ते जगणे तु तत्र ॥ २६५ ॥

सावित्रिका स्यात् सगणे प्रयुक्ते स्यात् पावनीत्येवमभूद्‌द्विधा सा ।
वक्ष्येऽथ हंसावतिकाभिदास्ताः सा व्योमजा स्यादपि वारुणी च ॥ २६६ ॥

सा व्योमवारुण्यपि च त्रिधैवं स्यात् संगतायां तगणे च भेदे ।
स्याद्व्योमजाथो यगणे तु वारिदेवे प्रयुक्ते सति वारुणी स्यात् ॥ २६७ ॥

तस्मिंस्तसंज्ञे यगणद्विकत्वे सा व्योमवारुण्यभिधावसेया ।
या वासवीत्येकगणे विकारात् सा व्योमजा वारुणिकेति भिन्ना ॥ २६८ ॥

सा व्योमजा स्यात्तगणे प्रयुक्ते सा वारुणी स्याद्यगणान्विता चेत् ।
नन्दावती पञ्चविधा हि तत्र स्यात् संगता तु त्रिविधा विधेया ॥ २६९ ॥

सा वह्निजा स्याद्रगणेऽग्निदेवे वारुण्यथ स्याद्यगणेऽम्बुदेवे ।
गणद्वयेऽस्मिन् युगपत् प्रयुक्ते स्याद्वह्निवारुण्यभिधा विधा सा ॥ २७० ॥

एवं निरुक्ताः खलु पञ्च भेदा भेदा युताः पञ्चदशोपदिष्टाः ।
पुरोदितास्ते नवतिस्त्रयोऽपि सर्वे मिलित्वाष्टयुतं शतं स्यात् ॥ २७१ ॥

श्रीपार्वतीदर्शनतो गणैला निरूपितास्ता निपुणैर्वचोभिः ।

---

## — ॥ नन्दीशमतम् ॥ —

नन्दीशराद्धान्तरहस्यरीत्या मात्रादिमैलां निपुणं भणामः ॥ २७२ ॥

मात्रागणैर्या मिलिता भवेयुर्मात्रादिमैला इति ताः प्रतीताः ।
चतुर्विधा सा रतिलेखिकाद्या स्यात् कामलेखापि च बाणलेखा ॥ २७३ ॥

सा चन्द्रलेखापि च तत्र वक्ष्याम्याद्यामिदानीं रतिलेखिकाख्याम् ।
मात्रैलिकोद्ग्राहगतस्य पादत्रयस्य चापि प्रथमे तु पादे ॥ २७४ ॥

एकादशोक्ता हि कला द्वितीये पादे तथैकादश तास्तृतीये ।
पादे भवेयुर्दश चैवमेतैर्मात्रायुतैरेव गणैः सुपूर्णाः ॥ २७५ ॥

तदा भवेत् सा रतिलेखिकाख्या तां कामलेखामथ लक्षयामः ।
यथोचितं कामगणैः पुरोक्तैः कृता भवेत् सा खलु कामलेखा ॥ २७६ ॥

प्रत्येकमस्याः प्रथमे द्वितीये द्वाविंशतिश्चैव कलाः किलाङ्घ्रौ ।
पदे तृतीये खलु विंशतिस्ताः कलाः क्रियन्ते यदि कामलेखा ॥ २७७ ॥

आचक्ष्महे तामथ बाणलेखामाद्ये तथाङ्घ्रावपि च द्वितीये ।
कलास्त्रयस्त्रिंशदिमा यदि स्युस्त्रिंशत् कलाश्चैव तृतीयपादे ॥ २७८ ॥

पूर्वोदितैर्बाणगणैः स पूर्णा संख्या यदि स्यादिह बाणलेखा ।
तथोच्यते संप्रति चन्द्रलेखा रतेर्गणैः कामगणैश्च मिश्रैः ॥ २७९ ॥

आपूर्यते बाणगणैश्च संख्या कला भवन्ति प्रथमे द्वितीये ।
पादे चतस्रश्च तथैव चत्वारिंशत्तृतीयेऽपि भवन्ति पादे ॥ २८० ॥

आपूर्यमाणा नियमेन चत्वारिंशत् कला सा खलु चन्द्रलेखा ।
मात्रादिमैलाः कथयामि चान्यास्तासां भवेदिन्दुमती पुरस्तात् ॥२८१ ॥

ज्योतिष्मती चैव नभस्वती च तथैव काचिद्वसुमत्यभिख्या ।
यस्यां हि षड्भिर्भगणैस्तथान्ते समे यवद्भिस्तगणैस्तथाङ्घ्रौ ॥ २८२ ॥

खण्डद्वयं तु क्रियते मुनीन्द्रैः सैषा भवेदिन्दुमती निरुक्ता ।
खण्डद्वयं चेत् पगणैश्च पञ्चमात्रागणैः स्याच्चगणेन चान्ते ॥ २८३ ॥

युक्तैस्तथाङ्घ्रौ क्रियते भवेत् सा ज्योतिष्मतीनामसमन्वितैला ।
यत्रादिमः स्याच्छगणस्तथैव ततः परं स्याच्चगणत्रयं च ॥ २८४ ॥

पश्चाद्यदि स्यात् पगणस्तथान्ते पुनश्च कश्चिच्छगणो यदि स्यात् ।
नभस्वतीं तां निगदन्ति सन्तस्तथाभिधास्ये वसुमत्यभिख्याम् ॥ २८५ ॥

अतो द्विमात्रो भगणस्ततश्च स्यात् पञ्चमात्रः पगणस्तथैव ।
ततश्चतुर्मात्र इति प्रतीतो निवेशनीयश्चगणस्तदन्ते ॥ २८६ ॥

निवेशनीयं पगणत्रयं च षाण्मात्रिकः स्याच्छगणश्च पश्चात् ।
ततस्त्रिमात्रस्तगणः प्रयुक्तस्त्वेतैर्गणैः खण्डयुगं यथाङ्घ्रौ ॥ २८७ ॥

क्रियेत सा स्याद्दसुमत्यभिख्येत्येता हि नन्दीशनिरूपितैलाः ।

---

— ॥ अर्जुनमतम् ॥ —

अथार्जुनस्यैव मतानुसारान्मात्रादिमैलाः कथयामि चान्याः ॥ २८८ ॥

चतुर्विधास्ताः कथयन्ति मात्रा नादावती नाम च तासु पूर्वा ।
तथा द्वितीया कथितात्र मात्रा हंसावती नाम ततः परं तु ॥ २८९ ॥

आहुस्तृतीयामथ तत्र मात्रां नन्दावती नाम ततश्चतुर्थीम् ।
ततः परस्तात् कथयन्ति मात्रां भद्रावतीमित्थमिमाश्चतस्रः ॥ २९० ॥

सामान्यलक्ष्म प्रतिपादयामो यथा निरुक्तं पुनरर्जुनेन ।
गणं स्वकीयं परिहृत्य तस्य स्थाने चतुर्मात्रगणैः प्रयुक्तैः ॥ २९१ ॥

एता भवन्त्यत्र यथा तु मात्रा नादावतीं तामथ वर्णयामः ।
यत्रादिमाः स्युश्च गणाश्च पञ्च तथैव चान्ते तगणस्त्रिमात्रः ॥ २९२ ॥

एतैस्तु खण्डद्वितये तु मात्रा नादावती सा खलु सद्भिरुक्ता ।
यदा भवेयुश्च गणाश्च सप्त तथैव चान्ते लघुरेक एव ॥ २९३ ॥

धनंजयस्तां निजगाद मात्रां हंसावतीं गातृकुलावतंसः ।
यदा भवेयुश्च गणाश्च सप्ताप्यन्ते गुरुः स्यात् पुनरेक एव ॥ २९४ ॥

एतामवोचत् किल तासु मात्रां नन्दावतीमिन्दुकुलावतंसः ।
अष्टौ यदि स्युश्च गणास्तदन्ते त्रिमात्र एकस्तगणः प्रयुक्तः ॥ २९५ ॥

तां सव्यसाची निजगाद मात्रां भद्रावतीं भारतसार्वभौमः ।
इत्यर्जुनस्यात्र मतानुसारान्मात्रादिमैलाः कथिताश्चतस्रः ॥ २९६ ॥

आसां विशेषेण तु केनचित् स्युरन्याश्च संज्ञाः प्रतिपादये ताः ।
आसां यदाङ्घ्रिष्वथ काश्च मात्रा एकाथ वा द्वे च तथैव तिस्रः ॥ २९७ ॥

मात्राश्चतस्रश्च तथैव पञ्च मात्राश्च पादाः क्रमशस्तदानीम् ।
विचित्रमात्रोपपदाः किलैलास्ततो भवन्तीति धनंजयोक्तम् ॥ २९८ ॥

अन्याश्चतस्रोऽपि भवन्ति तद्वदेलाश्च मात्रोपपदाः प्रतीताः ।
यदा गणानां नियमव्युदासाद्गणैः समेता नियमेन हीनैः ॥ २९९ ॥

पूर्वोदितास्ता रतिलेखिकाद्या नामान्तराणीति तदा लभन्ते ।
नन्दिन्यभिख्या रतिलेखिकाद्या चित्रिण्यभिख्या किल कामलेखा ॥ ३०० ॥

चित्राभिधाना खलु बाणलेखा त्वन्या विचित्रा खलु चन्द्रलेखा ।
अथैलयोरादिमयोरिहाङ्घ्री व्यत्यासतस्त्वाद्यतृतीयरूपौ ॥ ३०१ ॥

गेयौ तृतीयप्रथमौ तु गेयः स्थाने चतुर्थस्य तदादिमोऽङ्घ्रिः ।
इतीरिता विंशतिरत्र सम्यङ्मात्रादिमैला भरतोक्तरीत्या ॥ ३०२ ॥

---

— ॥ वर्णैलाः ॥ —

वर्णादिमैलाः कथये गणश्च मात्रेति च द्वौ त्रितयौ न यत्र ।
या वर्णसंख्यानियमैकबद्धा वर्णादिमैला इति ता वदन्ति ॥ ३० . ॥

एताश्चतुर्विंशतिभेदभिन्नास्तासां प्रकारं प्रतिपादयामः ।
षडक्षरं पूर्वमिहाङ्घ्रिखण्डमारभ्य चैकैकविवृद्धिरीत्या ॥ ३०४ ॥

खण्डस्त्विहैकाक्षरमात्रहीनत्रिंशत्कखण्डावधि चेत् क्रियेत ।
तदा चतुर्विंशतिभेदभिन्ना वर्णादिमैलाः कथिताः क्रमेण ॥ ३०५ ॥

तास्वेव सर्वासु षडक्षराङ्घ्रिखण्डौ भवेतां मधुकर्यसौ स्यात् ।
तथैव सप्ताक्षरकाङ्घ्रिखण्डा सा सुस्वरा नाम भवेद्द्वितीया ॥ ३०६ ॥

अन्या तथाष्टाक्षरकाङ्घ्रिखण्डा भवेत्तृतीया करिणीति नाम ।
भवेत्तुरीया तु नवाक्षराङ्घ्रिखण्डा यदि स्यात् सुरसा मता सा ॥ ३०७ ॥

अङ्घ्रेस्तु खण्डेन दशाक्षरेण प्रभञ्जनी नाम भवेत्तथान्या ।
तथैव चैकादश वर्णभाजि खण्डाञ्चिताङ्घ्रिर्मदनावतीयम् ॥ ३०८ ॥

अङ्घ्रौ तु या द्वादशवर्णयुक्तखण्डान्विता सा शशिनीति वेद्या ।
त्रयोदशाक्षर्युपपन्नखण्डा प्रभावतीति प्रथितेयमङ्घ्रौ ॥ ३०९ ॥

चतुर्दशाक्षर्युपपन्नखण्डा याङ्घ्रौ भवेत् सा खलु मालती स्यात् ।
अङ्घ्रौ तु या पञ्चदशाक्षरेण खण्डेन युक्ता ललिताभिधा सा ॥ ३१० ॥

अङ्घ्रौ तु या षोडशवर्णयुक्तखण्डान्विता भोगवती भवेत् सा ।
तथैव या सप्तदशाक्षराङ्घ्रिखण्डेन युक्ता कुसुमावती स्यात् ॥ ३११ ॥

अङ्घ्रौ तु याष्टादशवर्णयुक्तखण्डान्विता कान्तिमती च वेद्या ।
एकोनविंशत्युदिताक्षराङ्घ्रिखण्डान्विता स्यात् कुमुदिन्यभिख्या ॥ ३१२ ॥

या लाटभाषारचिता तु सेयं लाटादिमैला कथिता द्वितीया ।
या गौडभाषारचिता तु सेयं गौडादिमैला निपुणैर्निरुक्ता ॥ ३२६ ॥

स्यादान्ध्रभाषाग्रथिता तु सेयमान्ध्रादिमैला त्ववधारणीया ।
निबध्यते द्रामिडभाषया या तां द्रामिडैलां निगदन्ति सन्तः ॥ ३२७ ॥

देशादिमैलासु च तासु वेद्याः पूर्वोक्तमण्ठादय एव तालाः ।
कर्णाटपूर्वे तु भवेद्विशेषः प्रासस्तथाद्यन्तिमपूर्ववर्ती ॥ ३२८ ॥

कर्णाटकैलाः प्रवदन्ति नादावत्यादिका एव परे मुनीन्द्राः ।
तासां विदुः षड्विधतां क्रमेण विशेषणैस्तत्र च वक्ष्यमाणैः ॥ ३२९ ॥

स्वयंभुवः पूर्वमुखात्तु जन्म गणाधिपः शंभुरुभौ च देवौ ।
आद्यावनुप्रासयुतौ च पादावुभौ तयोः कामगणौ पुरोक्तौ ॥ ३३० ॥

अन्ते गणः स्याद्रतिसंज्ञकश्च पादे तृतीये च तथादिमध्यौ ।
प्रासान्वितौ कामगणैश्चतुर्भिरन्ते च रत्याख्यगणेन युक्ताः ॥ ३३१ ॥

नादान्विता तत्र मता सुरेखा कर्णाटकैलासु मतादिमैषा ।
धातुर्मुखाद्दक्षिणतो हि जन्म सावित्रिका विष्णुगणाधिपौ च ॥ ३३२ ॥

देवा मताः कामगणाः पुरोक्ताश्चत्वार एवादिमपादयोश्च ।
आदावनुप्रास इहैव मध्ये ततस्तृतीयश्चरणश्च यस्याः ॥ ३३३ ॥

स स्यादनुप्रासयुतस्तथादिमध्यावसानेषु मनोहरश्च ।
समन्वितः कामगणाष्टकेन हंसावती सा खलु कामलेखा ॥ ३३४ ॥

स्रष्टुर्मुखात् पश्चिमतोऽपि जन्म गायत्रिका ब्रह्मगणाधिपौ च ।
देवाश्च पादेष्वपि च त्रिषु स्यादादावनुप्रासयुतश्च मध्ये ॥ ३३५ ॥

पदे च पादे च चतुःप्रमाणा यस्या मताः कामगणाः पुरोक्ताः ।
नन्दावती सा खलु पूर्वमुक्ता निरूपितेयं स्मरलेखिकेति ॥ ३३६ ॥

उदङ्मुखात् पद्मभवस्य जन्म देवौ च गन्धर्वगणाधिपौ स्तः ।
स्युः पादयोः कामगणाः षडाद्योरन्ते तथा बाणगणो निरुक्तः ॥ ३३७ ॥

अङ्घ्र्योर्मताः कामगणास्तृतीयेष्वष्टावथो यच्चरणत्रयेऽपि ।
प्रासश्च मध्याद्यवसानभागे भद्रावती सा खलु भद्रलेखा ॥ ३३८ ॥

कर्णाटकैलाः सकला अपीमाश्छन्दस्वतीत्यत्र बुधैर्निरुक्ताः ।
आदौ यदा कामगणास्तु पञ्च पादत्रयेऽथो रतिसंज्ञकश्च ॥ ३३९ ॥

सर्वेषु चैतेष्वभिधास्यमाना: स्फुटं चतस्रो यतयो भवन्ति ।
वर्णादिमैलावदिहादिलक्ष्मीः सैषा निरुक्ता वसुसंज्ञकैवम् ॥ ३५४ ॥

अथोदितानां पुनरेवमासां संख्याविशेषः प्रतिपाद्यतेऽद्य ।
शुद्धा गणैलाः प्रथमाश्चतस्रो नवत्युपेता विकृतास्तु तिस्रः ॥ ३५५ ॥

अन्याः पुनः पञ्चदश प्रभेदा मतान्तरस्था विकृता भवन्ति ।
मात्रादिमा विंशतिरेव वर्णादिमाश्चतुर्विंशतिरेव चोक्ताः ॥ ३५६ ॥

देशादिमैलासु भवन्ति कर्णाट्येलाः पुरोदीरितपञ्चरीत्या ।
स्युर्विंशतिस्तावदिमास्तथैव च्छन्दस्वतीत्वेन च विंशतिः स्युः ॥ ३५७ ॥

एता मिलित्वा तु भवन्ति चत्वारिंशच्च कर्णाट्य इमा भवन्ति ।
लाट्योऽपि कर्णाट्य इवेह चत्वारिंशद्भवन्त्येव तथैव गौड्यः ॥ ३५८ ॥

आन्ध्र्यश्च तद्वद्द्रमिडादिमाश्च तद्वद्भवन्तीत्यवधारणीयम् ।
पञ्चाशदेला अथ षट् च वेद्याः शतत्रयं चेति भिदा वदन्ति ॥ ३५९ ॥

संकीर्णरूपा बहवः किलैला भवन्त्यथापीह न ता निरुक्ताः ।
आनन्त्यतश्चेति निरूपितोऽयमेलाप्रबन्धः खलु सप्रपञ्चः ॥ ३६० ॥

— ॥ करणप्रबन्धः ॥ —

एलाप्रबन्धं प्रतिपाद्य वक्ष्ये क्रमागतं तं करणप्रबन्धम् ।
सामान्यलक्ष्मास्य तु वर्णयामस्त्रिधातुबद्धस्य विवेचनार्थम् ॥ ३६१ ॥

स्वरेण चारम्भविधिस्तथांशे न्यासो द्रुताख्येन लयेन योगः ।
स्यादादितालो लघुनैककेन युक्तोऽत्र रासापरनामधेयः ॥ ३६२ ॥

एवंविधेनैव च लक्षणेन समन्वितः स्यात् करणप्रबन्धः ।
स चाष्टधायं परिकीर्तितः स्यात् स्वरादिमः पाटपदादिमश्च ॥ ३६३ ॥

बन्धादिमश्चैव पदादिमश्च तेन्नादिमः स्याद्बिरुदादिमश्च ।
चित्रादिमो मिश्रपदादिमश्च तत्र स्वराद्यं करणं वदामः ॥ ३६४ ॥

उद्ग्राहको यत्र तथा ध्रुवश्च स्वरैर्निबद्धो निबिडैः पदैश्च ।
आभोगसंज्ञः किल नायकस्य वाग्गेयकारस्य च नामयुक्तः ॥ ३६५ ॥

पूर्वोक्तसाधारणलक्ष्मयुक्तो भवेत् स्वराद्यः करणप्रबन्धः ।
अन्येऽपि तद्वत् करणप्रबन्धा विशेषमेषां कथयामि किंचित् ॥ ३६६ ॥

सहस्तपाटै रचितं स्वरैर्यत्तत् पाटपूर्वं करणं वदन्ति ।
तत्तद्विधा स्यात् करणं क्रमाच्च व्यत्यासतश्चेति विधाद्वयेन ॥ ३६७ ॥

स्वराः पुरा चेत्तत एव हस्तपाटास्तदेतत् क्रमपाटपूर्वम् ।
प्राग्घस्तपाटास्तदनु स्वराश्चेद्व्यस्त्या सपाटाद्यमिदं वदन्ति ॥ ३६८ ॥

बन्धादिमं तत्करणं भणामः स्वरैश्च यस्मिन् मुरजस्य पाटैः ।
यथाक्रमं द्वौ रचितौ तु यद्युद्ग्राहध्रुवौ बन्धपदादिमं तत् ॥ ३६९ ॥

स्वरैः पदैश्चैव कृता क्रमेणोद्ग्राहध्रुवौ चेत् पदपूर्वमेतत् ।
स्वरैश्च बन्धो बिरुदैः क्रमाच्चोद्ग्राहध्रुवौ चेद्बिरुदाद्यमेतत् ॥ ३७० ॥

उद्ग्राह एकस्वरतो ध्रुवश्च स्यात्तेन्नकश्चेदिह तैन्नकाद्यम् ।
उद्ग्राह एकस्वरहस्तपाटैर्ध्रुवः पदैर्मौरजपाटकैश्च ॥ ३७१ ॥

चित्रादिमं तत् करणं भणन्ति मिश्रादिमं संप्रति वर्णयामः ।
स्वरैः सपाटैः सह तेन्नकैरुद्ग्राहे ध्रुवे चापि च तैर्निबन्धे ॥ ३७२ ॥

चित्रस्य मिश्रस्य च कोऽत्र भेद इतीरिते तत्परिहार एषः ।
सांकर्यमाहुस्तिलतण्डुलादेरिवाथ बा मिश्रितमेतदेव ॥ ३७३ ॥

चित्रत्वमुक्तं खलु शास्त्रविद्भिर्मिश्रत्वमन्यत्तु निरूपयामः ।
सांकर्यमेबाबयवव्रजस्य यत्क्षीरनीरादिवदेतदेव ॥ ३७४ ॥

एवं नवोक्ताः करणप्रबन्धाः पाटादिमस्य द्विविधत्वयोगात् ।
एते नवापि त्रिविधाः प्रबन्धा गानप्रकारस्य भवन्ति भेदात् ॥ ३७५ ॥

स्यान्मङ्गलारम्भ इहादिमस्तु ह्यानन्दपूर्वं त्वथ वर्धनं स्यात् ।
अन्या मता कीर्तिलहर्यभिख्या तत्रादिमं तावदुदीरयामः ॥ ३७६ ॥

उद्ग्राहको यत्र तु गीयते द्विर्ध्रुवस्तथाभोग इमौ सकृच्च ।
पुनर्ध्रुवाभोगयुगं सकृत्तु तं मङ्गलारम्भमुदीरयन्ति ॥ ३७७ ॥

उद्ग्राह एव द्विरथ ध्रुवस्तु सकृत्ततोऽस्य स्वरपश्चिमार्धम् ।
ततस्तथाभोगध्रुवोद्ग्रहाश्च यदा हि गीताः सकृदेव चेत् स्युः ॥ ३७८ ॥

आनन्दपूर्वं खलु वर्धनं तमाहुस्तु संगीतकलाप्रवीणाः ।
स्थाने ध्रुवार्धस्य यदा मतः स्यादुद्ग्राहसंज्ञः परिगीयमानः ॥ ३७९ ॥

ततो द्वितीयार्धगतानि लक्ष्माण्यानन्दपूर्वस्य तु वर्धनस्य ।
एषा भवेत् कीर्तिलहर्यभिख्येत्येवं नवानां त्रिविधत्वयोगे ॥ ३८० ॥

सप्तोत्तरा विंशतिरीरिताः स्युः सर्वे मिलित्वा करणप्रबन्धाः ।
तालादिकानां नियमस्य सत्त्वान्नियुक्तनामा करणप्रबन्धः ॥ ३८१ ॥

खण्डस्य मेलापकनामकस्य चात्रापि राहित्यवशात् त्रिधातुः ।
पूर्वोक्तरीत्या तु षडङ्गयोगात् स्यान्मेदिनीजातिरसौ प्रबन्धः ॥ ३८२ ॥

---

## — ॥ ढेङ्किप्रबन्धः ॥ —

निरूप्य चैवं करणप्रबन्धं ढेङ्किप्रबन्धं प्रतिपादयामः ।
उद्ग्राहपूर्वार्धकमेव यत्र द्विर्गीयतेऽथो सकृदुत्तरार्धम् ॥ ३८३ ॥

मेलापकः स्याद्गमकैस्तथाढ्यो विकल्पतस्ताविह तालशून्यौ ।
यद्वा सतालाविह सोऽपि तालः कङ्कालनामा किल ढेङ्किका वा ॥ ३८४ ॥

युक्तौ च मानेन विलम्बितेन कार्यौ तु तावादिमखण्डकौ द्वौ ।
विलम्बितामन्यलयेन कार्यौ कङ्कालतालेन च संयुतौ द्वौ ॥ ३८५ ॥

अन्त्यौ ध्रुवाभोगकनामधेयौ ध्रुवोऽत्र खण्डध्रुवसंयुतः स्यात् ।
खण्डद्वयं तत्र समानधातुस्तृतीयखण्डः पुनरन्यधातुः ॥ ३८६ ॥

खण्डद्वयात्मानममुं ध्रुवं द्विर्गीत्वा किलाभोगमथो सकृच्च ।
पुनः प्रगाय ध्रुवखण्डमेनं न्यासः कृतश्चेदिह ढेङ्किका सा ॥ ३८७ ॥

ढेङ्क्याख्यतालो रगणात्मकोऽत्र कङ्कालतालस्तु पुरा निरुक्तः ।
चतुर्विधा सा खलु ढेङ्किका स्यान्मुक्तावली तत्र किलादिमोक्ता ॥ ३८८ ॥

स्याद्वृत्तबन्धिन्यपि युग्मिनी च सा वृत्तमाला तु मता चतुर्थी ।
छन्दोविहीना पुनरादिमा स्यात् सा वृत्तबन्धिन्यपि सैकवृत्ता ॥ ३८९ ॥

वृत्तद्वयाढ्या किल युग्मिनी स्यादनेकवृत्ता किल वृत्तमाला ।
प्रत्येकमेतासु च वृत्तबन्धिन्याद्याश्च तिस्रस्त्रिविधा भवन्ति ॥ ३९० ॥

स्याद्वर्णिकाद्या गणिका द्वितीया तथा तृतीयापि च मात्रिकाख्या ।
स्याद्वर्णिका वर्णभवैस्तु वृत्तैर्भवेत् परा वर्णगणोत्थवृत्तैः ॥ ३९१ ॥

मात्रागणोत्थैरपि मात्रिका स्यादेवं नवैतास्तु भवन्ति तिस्रः ।
मुक्तावलीसंमिलिता दशैता ढेङ्क्यः पुनस्तास्त्रिविधा भवन्ति ॥ ३९२ ॥

आद्या समालंकरणा द्वितीया समेतरालंकरणा निरुक्ता ।
चित्रादिमालंकरणा तृतीयालंकारशब्दो यमकादिवाची ॥ ३९३ ॥

तत्रादिमा स्याद् द्विचतुःषडादिसंख्यैरलंकारगणैः समेता ।
समेतरालंकरणा युता स्यादेकत्रिपञ्चादिमसंख्यकैस्तैः ॥ ३९४ ॥

चित्रादिमालङ्करणा तु तत्र समन्विता स्याद्विषमैः समैश्च ।
तालादिनैयत्यवशेन ढेङ्की सेयं तु निर्युक्तपदाभिधेया ॥ ३९५ ॥

मेलापकस्यापि विकल्पतस्त्रिधातुश्चतुर्धातुरिहाथ वा स्यात् ।
तारावलीज्ञातिरियं च तालपदाभिधाङ्गद्वितयीनिबन्धात् ॥ ३९६ ॥

---

— ॥ वर्तनी ॥ —

ढेङ्किप्रबन्धं चतुरं निरूप्य वर्तन्यभिख्यं कथये प्रबन्धम् ।
भवेत् स्वरादेः करणस्य लक्ष्म यदेतदेवास्य च लक्षणं स्यात् ॥ ३९७ ॥

भवेद्विशेषः परमेषु रासतालादिहान्यः कथितस्तु तालः ।
उद्ग्राहनामा प्रथमस्तु खण्डो द्विर्गीयतेऽन्यौ तु तृतीयतुर्यौ ॥ ३९८ ॥

सकृद्ध्रुवाभोगपदाभिधेयौ न्यासस्ततः स्याद्ध्रुवखण्ड एव ।
कङ्कालतालोऽत्र पुरा निरुक्तो लघुद्रुतौ च प्रतितालभाजौ ॥ ३९९ ॥

तालादिमानां नियमेन सोऽयं निर्युक्तसंज्ञः कथितः प्रबन्धः ।
मेलापकाभाववशात् त्रिधातुममुं प्रबन्धं कथयन्त्यभिज्ञाः ॥ ४०० ॥

पदस्य तालस्य तथा स्वरस्य स्यात् पावनी जातिरियं निबन्धात् ।
कङ्कालतालैः प्रतितालकैर्वा यद्वा कुडुक्के प्रतिमण्ठके वा ॥ ४०१ ॥

इत्थं निबद्धा यदि वर्तनी स्याद्विवर्तनी नामवती तदानीम् ।
कङ्कालतालस्तु पुरा निरुक्तो लघुद्रुतौ च प्रतितालभाजौ ॥ ४०२ ॥

गुरुद्वयं चापि लघुद्वयं च कुडुक्कताले क्रमशो भवेताम् ।
लघू गुरू च प्रतिमण्ठताले यद्वा गुरू चैव लघुद्वयं च ॥ ४०३ ॥

उक्त्वेत्यमुं वर्तनिकाप्रबन्धं ततः क्रमाज्झोम्बडमीरयामः ।

---

— ॥ झोम्बडः ॥ —

द्विर्गीयते यत्र तु पूर्वमर्धमुद्ग्राहकेऽतः सकृदुत्तरार्धम् ॥ ४०४ ॥

मेलापकः स्याद्बहुलप्रयोगे विकल्पतोऽथ ध्रुवनामखण्डम् ।
गीत्वा द्विराभोगमथो सकृच्च न्यासे ध्रुवे झोम्बड एष वेद्यः ॥ ४०५ ॥

निःसारुकश्चैव कुडुक्कतालो द्वितीयतालः प्रतिमण्ठतालः ।
स्याद्वारुगिश्च त्रिपुटं च रासोऽड्डुतालकोऽन्यो यतिलग्नतालः ॥ ४०६ ॥

...द्वेकतालीति दशैव तालाः केचित्तु मण्ठं च वदन्ति तालम् ।
...ध्ये च मण्ठो न च दृश्यतेऽथ निःसारुकादेरथ लक्ष्म वक्ष्ये ॥ ४०७ ॥

...मशीर्षे तु लघुद्वयं स्यात्ताले तु निःसारुकनामधेये ।
...डुक्कतालस्तु पुरा निरुक्तो द्वितीयमण्ठप्रतिमण्ठकाश्च ॥ ४०८ ॥

तुर्द्रुती तत्र विरामशीर्षौ ताले भवेद्वारुगिनामधेये ।
तत्रयं स्यात्तु विरामशीर्षं ताले निरुक्तं त्रिपुटाभिधाने ॥ ४०९ ॥

...सो निरुक्तो यतिलग्नताले द्रुतो लघुः स्यात्तदनन्तरं च ।
...थैकताल्यां द्रुत एक एवाड्डुतालिके लक्षणमूहनीयम् ॥ ४१० ॥

याञ्झोम्बडो यद्द्विविधो निरुक्तः स तारजातारजभेदभिन्नः ।
...त तारजो यः पुनरत्र तारस्थानोद्भवेन ध्वनिना समेतः ॥ ४११ ॥

...वतुर्विधस्तारज एक एष तूद्ग्राहकः सैव तु तारजत्वे ।
...मेलापकः सैव परस्तथात्वे परो ध्रुवः सैव तु तारजत्वे ॥ ४१२ ॥

आभोगसंज्ञस्य तु तारजत्वे भेदस्तुरीयः कथितो मुनीन्द्रैः ।
अतारजः स्यात् पुनरेक एव स्याञ्झोम्बडः पञ्चविधो मिलित्वा ॥ ४१३ ॥

स झोम्बडः पञ्चविधोऽपि च त्रिधातुश्चतुर्धातुरिति द्विधा स्यात् ।
तारैश्चतुर्धातुमते चतुर्धा मेलापकाभावमते त्रिधातौ ॥ ४१४ ॥

त्रिधैव भिन्नाः खलु तारजाः स्युरतारजापक्षयुगेऽपि च द्वौ ।
एवं मिलित्वा नवधावबद्धास्ते च द्विधा स्युर्गमकैः प्रभूतैः ॥ ४१५ ॥

यथैव वाल्पैर्गमकैर्मिलित्वा चाष्टादशैते किल झोम्बडाः स्युः ।
अष्टातशैते कथिताः प्रभेदाश्चतुर्गणैः पञ्चगणैश्च योगात् ॥ ४१६ ॥

षड्भिस्तथा सप्तभिरष्टभिस्ते ते पञ्चधा वर्णगणैर्निरुक्ताः ।
तेषां च नामानि पृथग्वदामः प्रायोगिकः प्राथमिकप्रभेदः ॥ ४१७ ॥

क्रमो द्वितीयः क्रमयुग्विलासो भवेत्तृतीयो ह्यपरस्तु चित्रः ।
विचित्रलीलः किल पञ्चमः स्यात् स्याञ्झोम्बडोऽस्मान्नवतिप्रभेदः ॥ ४१८ ॥

श्लेषोपमारूपकयोगजः स्याद् ब्रह्माभिधानः किल झोम्बडोऽयम् ।
विष्णवाह्वयो वीररसे तथैव स्त्रीणां विलासे च निबध्यते चेत् ॥ ४१९ ॥

चक्रेश्वरो वीररसैकयोगाद्बीभत्सयोगे तु च चण्डिकेशः ।
रसेऽद्भुते स्यान्नरसिंहसंज्ञो भयानके भैरवनामधेयः ॥ ४२० ॥

शृङ्गारहास्यद्वितयप्रधानः प्रबन्ध एषोऽपि च हंसनामा ।
सिंहो भवेद्वीरभयानकाभ्यां सारङ्गनामापि च विप्रलम्भे ॥ ४२१ ॥

शृङ्गारसंज्ञे करुणे रसे च स शेखराख्यो भवति प्रबन्धः ।
शृङ्गारमात्रे खलु पुष्पसारो रौद्रे प्रचण्डाह्वयबान् प्रबन्धः ॥ ४२२ ॥

नन्दीशसंज्ञः खलु वीरशान्त्योस्त्रयोदशैते कथिताः प्रभेदाः ।
पूर्वोदितायां नव तावमीभिः संवर्धितानां दशभिस्त्रिभिश्च ॥ ४२३ ॥

संख्यासहस्रं किल झोम्बडानां ज्ञायेत सप्तत्यधिकं शतं च ।
गद्योद्भवत्वेऽपि च पद्यजत्वे ते गद्यपद्योद्भवसंभवत्वे ॥ ४२४ ॥

एते पुरोक्तास्त्रिविधा भवन्ति भेदाः समस्ता अपि झोम्बडानाम् ।
इत्थं सहस्रत्रितयं च पञ्चशती दशैते किल झोम्बडाः स्युः ॥ ४२५ ॥

निर्युक्तसंज्ञो भवति त्रिधातुर्यद्वा चतुर्धातुरयं प्रबन्धः ।
तालेन बद्धश्च पदैस्तथासौ तारावलीजातिरिहाङ्गयुग्मात् ॥ ४२६ ॥

उक्तप्रकारेण हि झोम्बडानां निरूप्य सद्यः सकलाश्च संख्याः ।

---

— ॥ लम्भप्रबन्धः ॥ —

अथ क्रमप्राप्तमुदीरयामो लम्भप्रबन्धं सह लक्षणेन ॥ ४२७ ॥

उद्ग्राहखण्डो यदि गीयते द्विः सकृच्च वा सोऽपि किलैकबन्धः ।
द्विखण्डको वा क्रियते ध्रुवोऽपि द्विधा सकृद्वा यदि गीयते च ॥ ४२८ ॥

उद्ग्राहखण्डोदितमार्गतश्चेदाभोगखण्डोऽपि च तत्र गेयः ।
न्यासो ध्रुवे च क्रियते तदानीं लम्भप्रबन्धं तमुदीरयन्ति ॥ ४२९ ॥

मतान्तरोक्त्या किल लम्भनाम्नि तस्मिन् प्रबन्धेऽपि च झोम्बडाख्ये ।
भागो द्वितीयो ध्रुवनामकस्य कार्यः किलोद्ग्राहसमानधातुः ॥ ४३० ॥

ध्रुवं द्विवारं तदनु प्रगाय चाभोगखण्डं सकृदेव गीत्वा ।
गीत्वा ध्रुवं तं पुनरेकवारं न्यासो ध्रुवे स्यात् करणीय एव ॥ ४३१ ॥

लम्भप्रबन्धस्य च लक्ष्म भिन्नं मन्तव्यमेतत्तु मतान्तरेण ।
उक्तप्रकारेण च लक्षितोऽयं लम्भप्रबन्धः पुनरष्टधा स्यात् ॥ ४३२ ॥

उद्ग्राहखण्डस्तु विनैव तालं निबध्यते चेन्निपुणं स्वरौघैः ।
पूर्वोक्तलक्ष्मान्वितमेव तावदालापलम्भं तमुदाहरन्ति ॥ ४३३ ॥

स्थाने ध्रुवस्येतरधातुकश्चेदुद्ग्राहखण्डस्तु निबध्यते च ।
तदा प्रलम्भं तमुदीरयन्ति स भागलम्भः समुदीर्यतेऽथ ॥ ४३४ ॥

मतान्तरोक्तेः किल यत्र भागे सोऽयं निबन्धः स तु भागलम्भः ।
त्रिर्वा चतुर्वाप्युत पञ्चवारमुद्ग्राहकेणाथ विभेदभाजा ॥ ४३५ ॥

युक्तो ध्रुवो यत्र तु गीयते तत्पुराविदो लम्भपदं भणन्ति ।
उद्ग्राह एकः प्रतिवारमेव ध्रुवेण भिन्नेन स गीयते चेत् ॥ ४३६ ॥

अयं मतः स्यादनुलम्भनामा तत्रोपलम्भः प्रतिपाद्यतेऽथ ।
प्रकीर्यमाणौ प्रतिवारमत्रोद्ग्राहस्य वा भिन्नतयोपलम्भः ॥ ४३७ ॥

त्रयश्च ते लम्भपदानुलम्भो वाभोगहीना ह्यनुलम्भकश्च ।
आभोगयोगस्तु विधान्तरे स्यात् कर्तव्य एवेति विनिश्चितोऽर्थः ॥ ४३८ ॥

यत्र ध्रुवाभोगविवर्जिताः स्युरुद्ग्राहकास्ते बहवः स एव ।
विलम्भनामा कथितोऽत्र मातोर्भेदश्च धातोस्तु भवेदभेदः ॥ ४३९ ॥

मतान्तरोक्तेन सहैवमष्टौ भेदा निरुक्ताः किल लम्भकस्य ।
तालाद्यनैयत्यवशेन चायमुक्तो ह्यनिर्युक्त इति प्रबन्धः ॥ ४४० ॥

पदेन तालेन च बन्धभावात्तारावलीजातिरयं हि लम्भः ।

---

## — ॥ रासप्रबन्धः ॥ —

लम्भप्रबन्धं प्रतिपाद्य सम्यग्रासप्रबन्धं प्रतिपादयामः ॥ ४४१ ॥

यल्लक्षणं झोम्बडकप्रबन्धस्थानप्रभेदं गमकांश्च मुक्त्वा ।
तदेव लक्ष्मास्य वदन्ति सन्तो विशेष एतस्य तु रासतालः ॥ ४४२ ॥

वदन्ति केचिच्चतुरो हि भेदानेतस्य तांश्च प्रतिपादयामः ।
रासादिमः स्याद्वलयस्तु वर्णगणैर्निबद्धः कथितः किलाद्यः ॥ ४४३ ॥

हंसादिमः स्यात्तिलकस्तु मात्रागणैर्निबद्धो भवति द्वितीयः ।
मात्रानिबद्धो रतिरङ्गनामा भवेत्तृतीयो गदितः प्रबन्धः ॥ ४४४ ॥

बद्धस्ततः स्याच्छगणेन सम्यङ्मनीषिमान्यो मदनावतारः ।
चत्वार एते गणजास्तु भेदा मतान्तरे पञ्च च विंशतिश्च ॥ ४४५ ॥

अन्ये प्रभेदा इति केचिदाहुरेतांश्च भेदान् प्रतिपादयामः ।
खण्डं समारभ्य षडक्षराङ्क्रिमा त्रिंशदक्षरयुचितांश्च वर्णान् ॥ ४४६ ॥

एकैकमात्राक्षरवर्धनेन पञ्चाधिका विंशतिरत्र रासाः ।
इतीरिता वर्णजरासभेदा रासांस्तु मात्राप्रभवान् वदामः ॥ ४४७ ॥

आरभ्य पादं पुनरष्टमात्रमा षष्टिमात्राच्चरणान् प्रबध्य ।
एकैकमात्रां किल मात्रिकास्तद्भेदास्त्रिपञ्चाशदिति प्रतीताः ॥ ४४८ ॥

लक्ष्याप्रसिद्धेरिह रासभेदा विशिष्य नोक्ताः किल सर्व एव ।

---

— ॥ एकतालीप्रबन्धः ॥ —

रासप्रबन्धं निपुणं निरूप्य निरूपयामः पुनरेकतालीम् ॥ ४४९ ॥

यत्र द्विवारं परिगीयते तूद्ग्राहध्रुवाख्यायुतखण्डयुग्मम् ।
सकृत्तथाभोगमपि ध्रुवं च गीत्वा च ताभ्यां विसृजेद् ध्रुवेऽस्मिन् ॥ ४५० ॥

ध्रुवे किलान्यत्र तदेकतालीप्रबन्धमेनं प्रवदन्ति सन्तः ।
सा चैकतालेन समन्वितत्वात् स्यादेकतालीत्यवधारणीया ॥ ४५१ ॥

एकद्रुतात्मात्र किलैकताली भवेदिति ख्यातममुष्य लक्ष्म ।
आलापरूपं समुदीरयन्ति चोद्ग्राहखण्डं पुनरेकताल्याम् ॥ ४५२ ॥

मतान्तरे वाचकतां प्रपन्नैः पदैरिहोद्ग्राहविभागक्लृप्तिः ।
निर्युक्तसंज्ञो भवति प्रबन्धस्तालादिमानां नियमेन सोऽयम् ॥ ४५३ ॥

मेलापकाभाववशात् त्रिधातुः सोऽयं प्रबन्धः पदतालबन्धात् ।
अङ्गद्वयीयुक्ततयैव सोऽयं तारावलीजातिरमुष्य वेद्या ॥ ४५४ ॥

इत्युक्तरीत्या परमेकतालीप्रबन्ध एष प्रतिपादितोऽभूत् ।
अष्टौ मिलित्वा प्रतिपादितास्ते सूडप्रबन्धाः सुधियामभीष्टाः ॥ ४५५ ॥

---

— ॥ आलिक्रमप्रबन्धाः ॥ —

आलिक्रमाख्यांस्तदनु प्रबन्धान् पञ्चोत्तरं विंशतिमीरयामः ।

---

— ॥ वर्णप्रबन्धः ॥ —

उद्दिष्टमादौ किल वर्णसंज्ञं प्रबन्धमग्रे सह लक्षणेन ॥ ४५६ ॥

निबध्यमानो बिरुदैश्च पाटैर्वर्णाख्यतालेन समन्वितश्च ।
कर्णाटभाषाग्रथितश्च सोऽयं वर्णप्रबन्धः स तु वर्णनीयः ॥ ४५७ ॥

वर्णाख्यतालस्त्रिविधो निरुक्तस्त्र्यश्रश्च मिश्रश्चतुरश्रसंज्ञः ।
तल्लक्षणं तावदुदीरयामो लघुर्द्रुतद्वन्द्वमतो लघू च ॥ ४५८ ॥

स्यात् त्र्यश्रवर्णस्त्वथ मिश्रवर्णो भवेद्विरामावधिकं द्रुतानाम् ।
तेषां चतुष्कं त्रितयप्लुतश्च गुरुश्च पश्चाद्द्रुतयोर्द्वयं च ॥ ४५९ ॥

गुरुर्लघुश्चापि पुनर्गुरुश्च स्यान्मिश्रवर्णः कथितो मुनीन्द्रैः ।
अथामनामश्चतुरश्रवर्णतालस्य लक्ष्म क्रमसंप्रदिष्टम् ॥ ४६० ॥

गुरुर्लघुश्च द्रुतयोर्द्वयं च पुनर्गुरुः स्याच्चतुरश्रवर्णः ।
पूर्वोक्तरीत्योदितवर्णतालत्रैविध्यतोऽपि त्रिविधः प्रबन्धः ॥ ४६१ ॥

आभोगसंज्ञस्य भवेदनुक्तेराभोगकॢप्तिस्तु पदैर्विधेया ।
वर्णप्रबन्धस्तु भवेत् त्रिधातुस्तालादिनैयत्यवशेन सोऽयम् ॥ ४६२ ॥

निर्युक्तसंज्ञो भवति प्रबन्धस्तालैः पदैः स्याद्विरुदैर्निबद्धः ।
यतः स्तुतोऽसौ त्रिभिरन्वितः स्यादङ्गैस्तथा भावनिकाख्यजातिः ॥ ४६३ ॥

---

## — ॥ वर्णस्वरप्रबन्धः ॥ —

वर्णप्रबन्धं पुनरेवमुक्त्वा वर्णस्वरस्यापि च लक्ष्म वक्ष्ये ।
स्वरैश्च पाटैश्च पदैश्च तेन्नैर्निबन्धनं यस्य भवेद्यथेच्छम् ॥ ४६४ ॥

स्यात्तेन्नके च न्यसनं यदा स्यात्तमेव वर्णस्वरमामनन्ति ।
चतुर्विधः सोऽपि भवेत् स्वराणामादौ निवेशात् प्रथमस्तु भेदः ॥ ४६५ ॥

पाटादिमत्वेन भवेद् द्वितीयः पदादिमत्वेन भवेत्तृतीयः ।
तेन्नादिमत्वेन भवेत्तुरीयो वर्णस्वरः स्यात् कथितश्चतुर्थः ॥ ४६६ ॥

द्वाभ्यां किलोद्ग्राहविधानमेषु द्वाभ्यां ध्रुवश्चापि विधेय एव ।
आभोगकॢप्तिस्तु पदैर्विधेया सोऽयं त्रिधातुर्भवति प्रबन्धः ॥ ४६७ ॥

भवेदनिर्युक्ततया प्रतीतस्तालाद्यनैयत्यवशेन सोऽयम् ।
अङ्गैः पुनः पञ्चभिरन्वितः स्यादानन्दिनीजातितया प्रतीतः ॥ ४६८ ॥

इत्युक्तरीत्या कथितश्च वर्णस्वरप्रबन्धः सुमनोमनोज्ञः ।

---

## — ॥ गद्यप्रबन्धः ॥ —

गद्यप्रबन्धस्य निगद्यतेऽथ लक्ष्मादि हृद्यं निरवद्यमद्य ॥ ४६९ ॥

छन्दोविहीनं पदजालमेव गद्यप्रबन्धः स तु षड्विधः स्यात् ।
आद्यो भवेदुत्कलिकाभिधानः स्याच्चूर्णिकाख्यश्च ततो द्वितीयः ॥ ४७० ॥

अतस्तृतीयो ललिताभिधानः स्याद्वृत्तगन्ध्याह्वयवांस्तुरीयः ।
खण्डाभिधानः कथितोऽपरः स्याच्चित्राह्वयं षष्ठमुदाहरन्ति ॥ ४७१ ॥

षण्णाममीषां किल सामवेदादुत्पत्तिरेषामथ लक्ष्म वक्ष्ये ।
गेया भवेदुत्कलिका तु वीररसे च सा दीव्यति रक्तवाणी ॥ ४७२ ॥

स्याद्रुद्रदेवत्यतया मतास्यां गौडीयरीतिः कथिता मुनीन्द्रैः ।
वृत्तिः किलात्रारभटी च वेद्या लक्ष्मानयोः प्राक् प्रतिपादितं च ॥ ४७३ ॥

सा चूर्णिका शान्तरसे च गेया स्यात् पीतवर्णा विधिदेवता च ।
वैदर्भिका रीतिरिहोपदिष्टा सात्त्वत्यभिख्या खलु वृत्तिरस्याः ॥ ४७४ ॥

लक्ष्मोच्यते तल्ललिताभिधस्य सितोऽत्र वर्णो मदनश्च देवः ।
शृङ्गारनामात्र रसश्च रीतिः पाञ्चालिका कैशिकिका च वृत्तिः ॥ ४७५ ॥

लक्ष्मोच्यतेऽतः खलु वृत्तगन्धिसंज्ञस्य शान्तोऽत्र रसो निरुक्तः ।
वर्णश्च पीतो मुनिरत्र देवः पाञ्चालिका रीतिरिहोपदिष्टा ॥ ४७६ ॥

वृत्तिस्तु सात्त्वत्यभिधा परं तु पद्यैकदेशेन विमिश्रणं च ।
खण्डाभिधं गद्यमुदीरयामो वृत्तिस्तु सात्त्वत्यभिधा गणेशः ॥ ४७७ ॥

देवोऽस्य वर्णः सित एव हास्यो रसश्च वैदर्भ्यभिधा च रीतिः ।
चित्राख्यगद्यं प्रतिपादयामः शृङ्गारनामात्र रसस्तु विष्णुः ॥ ४७८ ॥

देवोऽस्य कृष्णाभिध एव वर्णो वैदर्भिका रीतिरिहोपदिष्टा ।
वृत्तिश्च कैशिक्यभिधात्र भेदद्वयं वदामोऽत्र मतान्तरेण ॥ ४७९ ॥

वेणी त्विहाद्या खलु मिश्रमन्यद्वेणी तु षड्भी रचिता पुरोक्तैः ।
चूर्णैः कृतं यत् खलु वृत्तगन्धिविमिश्रितैर्मिश्रमिदं निरुक्तम् ॥ ४८० ॥

पूर्वोक्तगद्येष्वपि षड्विधेषु षड्वक्ष्यमाणा गतयो भवन्ति ।
द्रुता गतिः स्यात् कलिकाख्यभेदे चूर्णाभिधे तत्र विलम्बिता स्यात् ॥ ४८१ ॥

मध्याभिधाना ललिते गतिः स्यात्तद्वृत्तगन्ध्याह्वयशालिगद्ये ।
द्रुतादिमध्या गतिरीरितैव खण्डे तु सा मध्यविलम्बिता स्यात् ॥ ४८२ ॥

गतिर्द्रुताद्या तु विलम्बिताख्या चित्राभिधाने खलु तत्र गद्ये ।
आद्या तु तत्रोत्कलिकाभिधाना भवेत् प्रबन्धैर्लघुभिर्निबध्या ॥ ४८३ ॥

चूर्णं तथाल्पैर्लघुभिर्निबध्यं समैर्निबध्यं लघुभिः क्रमेण ।
गद्यं निरुक्तं ललिताभिधानं पृथक्स्थितैस्तैर्लघुभिर्निबध्यम् ॥ ४८४ ॥

तद्वृत्तगन्ध्याह्वयशालिगद्यं पृथक्स्थितैस्तैर्गुरुभिस्तु खण्डम् ।
चित्राभिधानाह्वयवत्तु गद्यं कर्तव्यमेतल्लघुभिर्विमिश्रैः ॥ ४८५ ॥

क्रमेण तूक्तं गुरुभिस्तु वेद्यं हि तानि गद्यानि तु षड्विधानि ।
षड्भिः समाभिर्गतिभिः समेताः षट्त्रिंशदेताश्च भिदा भवन्ति ॥ ४८६ ॥

साधारणं लक्ष्म वदाम्यमीषां पूर्वोक्तरीत्याथ च षड्विधानाम् ।
उद्ग्राहखण्डः प्रथमं तु गेयश्चोंकारपूर्वः स च तालवर्जम् ॥ ४८७ ॥

युक्तश्च सर्वैर्गमकैः सपाटाक्षरं तया सस्वरमन्तिमे च ।
मध्ये तथोद्ग्राहमिमं च गीत्वा पदद्वयं तालयुतं पृथग्द्विः ॥ ४८८ ॥

गीत्वा प्रयोगो यदि गीयतेऽत्र ततः सतालं खलु गातृनाम ।
वर्णस्य नामापि विलम्बितेन तन्नामनी चाप्यविलम्बितेन ॥ ४८९ ॥

गीत्वा पुनश्चापि विलम्बिताख्ये न्यासो यदि स्यादिह गद्यमेतत् ।
गद्यप्रबन्धः कथितस्त्रिधा तु पदैः स्वरैश्चाप्यथ तालसंज्ञैः ॥ ४९० ॥

अङ्गैर्युतो भावनिकाख्यजातिस्तालाद्यनैयत्यवशेन सोऽयम् ।
भवेदनिर्युक्ततया प्रतीतो गद्यप्रबन्धस्त्विति वर्णितोऽसौ ॥ ४९१ ॥

---

— ॥ कैवाडप्रबन्धः ॥ —

निगद्य गद्यं त्विति सम्यगत्र कैवाडसंज्ञं त्वथ लक्षयामः ।
पाटाक्षरैरारचितावुभावुद्ग्राहध्रुवौ यत्र तु संभवेताम् ॥ ४९२ ॥

उद्ग्राहखण्डे परिपूर्तिरेषा कैवाडनामा कथितः प्रबन्धः ।
शुद्धैश्च पाटैरथ मिश्रितैश्च पाटैर्द्विधा यः प्रथितः प्रबन्धः ॥ ४९३ ॥

पाटेषु विज्ञा मुखवाद्यवर्णराहित्यमेवाहुरमिश्रितेति ।
मिश्रत्वमेतत् सहितत्वमेव प्रत्येकमेतच्च भवेद् द्विधैवम् ॥ ४९४ ॥

पाटैः सहार्थैरपि चार्थहीनैरेवं चतुर्धा भवति प्रबन्धः ।
आभोग एवात्र तु गातृनेतृप्रबन्धनामाङ्कपदैश्च गेयः ॥ ४९५ ॥

त्रिधातुरेवायमतः प्रबन्धस्तालाद्यनैयत्यवशेन सोऽयम् ।
भवेदनिर्युक्त इति प्रतीतस्तालैश्च पाटैश्च पदैश्च बन्धात् ॥ ४९६ ॥

अङ्गो भवेद्भावनिकाख्यजातिकैवाडनामैवमुदीरितोऽसौ ।

---

— ॥ अङ्कचारिणीप्रबन्धः ॥

सा त्वङ्कचारिण्युदितात्र वीररौद्रप्रधानैर्बिरुदैर्निबद्धा ॥ ४९७ ॥

यत्र प्रबन्धे कथितौ क्रमेणोद्ग्राहध्रुवाख्यानजुषौ तु खण्डौ ।
वीरस्त्रिधा स्यादिह दानवीरः संग्रामवीरश्च दयैकवीरः ॥ ४९८ ॥

आभोगखण्डोऽपि च दातृनेतृप्रबन्धनामाङ्कपदैरुपेतः ।
इत्यङ्कचारिण्युदिता प्रबन्धसामान्यलक्ष्मोदितमस्य भेदाः ॥ ४९९ ॥

एकेन तालेन तु यत्र चाष्टाधिकापि सम्यग्बिरुदानि नेतुः ।
सा वासवी यत्र तु तालयुग्माद्यष्टापि सम्यग्बिरुदानि गायेत् ॥ ५०० ॥

एषा निरुक्ता कलिकाभिधाना तालैस्त्रिभिश्चेद्बिरुदानि सम्यक् ।
द्वात्रिंशदुद्गायति सा तु वृत्ता सा त्वङ्कचारिण्युदिता तृतीया ॥ ५०१ ॥

तालैश्चतुर्भिर्बिरुदानि चेह पञ्चाशदुद्गायति चेत् क्रमेण ।
सा वीरवत्याह्वयसंयुता स्यादित्यङ्कचारिण्युदिता चतुर्थी ॥ ५०२ ॥

पञ्चैव ताला बिरुदानि नेतुर्यस्यां शतं स्याच्चतुरुत्तरं तु ।
वेदोत्तरा सा कथिताथ षष्ठी तालादिसंख्यानियमेन हीना ॥ ५०३ ॥

निरूपिता जातिमती च सेयमित्यङ्कचारिण्युदितात्र षोढा ।
आद्यासु पञ्चस्वपि तालसंख्यासत्त्वेऽप्यनैयत्यवशात् स्वरूपे ॥ ५०४ ॥

वदन्त्यनिर्युक्तपदं प्रबन्धं मेलापकाभाववशात् त्रिधातुः ।
तालैश्च योगाद्बिरुदैः पदैश्च त्र्यङ्गस्त्वयं भावनिकाख्यजातिः ॥ ५०५ ॥

---

— ॥ कन्दप्रबन्धः ॥ —

इत्यङ्कचारिण्युदिताथ वक्ष्ये कन्दप्रबन्धं सह लक्षणेन ।
कर्णाटदेशादिमदेशभाषापदैर्निबन्धो न तु संस्कृतेन ॥ ५०६ ॥

पाटाक्षरैस्तैर्बिरुदैश्च बद्धस्तालेन हीनः खलु यः प्रबन्धः ।
पाटैः समाप्तिं भजते तथार्यागीत्या कृतः कन्द इति प्रबन्धः ॥ ५०७ ॥

आर्यादिमार्धस्य यदेव लक्ष्म तदेव चान्त्येऽपि दले यदि स्यात् ।
एतेन युक्तां गुरुणाधिकेन त्वार्यादिगीतिं निगदन्ति सन्तः ॥ ५०८ ॥

आर्याख्यवृत्तस्य च लक्ष्म सम्यगत्रैव वक्ष्ये तदनुक्रमेण ।
उद्ग्राहमत्र प्रथमार्धमार्यागीतौ विधायैव पदैश्च गायेत् ॥ ५०९ ॥

३१४

द्वितीयमर्धं ध्रुवमेव कृत्वा पाटैश्च गायेद्विरुदैश्च सम्यक् ।
पाटान् ध्रुवस्यादित एव सम्यक् प्रक्रम्य पश्चान्न्यसनं च कुर्यात् ॥ ५१० ॥

तालस्वरूपेण विनैव गेयः सोऽयं प्रबन्धस्त्विति वर्णयन्ति ।
आभोगमत्राप्यथ कल्पयन्ति परैरनुक्तेषु हि सैव रीतिः ॥ ५११ ॥

कन्दप्रबन्धस्य मयैवमुक्तं सामान्यलक्ष्माथ च तद्विशेषाः ।
अमी भवेयुर्नव विंशतिश्चाप्यार्यादिमायामथ तत्र गीतौ ॥ ५१२ ॥

त्रिंशस्य भङ्गेन गुरोर्निरुक्तः कन्दस्य भेदः पवनाख्य आद्यः ।
गुरोस्तु भङ्गः कथितः प्रवीणैर्लघुद्वयापादनमेव सम्यक् ॥ ५१३ ॥

भङ्गाद्गुरोः स्यान्नवविंशकस्य रव्याह्वयः कन्द इति द्वितीयः ।
स्यादष्टविंशस्य गुरोर्विभङ्गात् कन्दस्य भेदो धनदस्तृतीयः ॥ ५१४ ॥

स्यात् सप्तविंशस्य गुरोर्विभङ्गात् तुर्यस्तु हव्यादिमवाहनोऽयम् ।
षड्विंशरूपस्य गुरोर्विभङ्गात् स्यात् पञ्चमोऽयं सुरनाथसंज्ञः ॥ ५१५ ॥

स्यात् पञ्चविंशस्य गुरोर्विभङ्गात् समुद्रसंज्ञः कथितस्तु षष्ठः ।
भङ्गाच्चतुर्विंशगुरोः क्रमेण स्यात् सप्तमोऽयं वरुणाभिधानः ॥ ५१६ ॥

तथा त्रयोविंशगुरोर्विभङ्गात् स्यादष्टमोऽयं शशिनामधेयः ।
द्वाविंशरूपस्य गुरोर्विभङ्गात् स्याच्छैलकाख्यो नवमोऽत्र भेदः ॥ ५१७ ॥

स्यादेकविंशस्य गुरोर्विभङ्गात् कन्दस्य भेदो मधुनामधेयः ।
तथैव विंशस्य गुरोर्विभङ्गात् कन्दस्य भेदः खलु माधवाख्यः ॥ ५१८ ॥

एकोनविंशस्य गुरोर्विभङ्गात् कन्दस्य भेदो मदनध्वजाख्यः ।
अष्टादशस्यैव गुरोर्विभङ्गात् कन्दस्य भेदस्तु जयन्तसंज्ञः ॥ ५१९ ॥

भङ्गाद् गुरोः सप्तदशस्य वेद्यः कन्दस्य भेदो मधुपाभिधानः ।
गुरोर्विभङ्गे न तु षोडशस्य शुकाभिधानः खलु कन्दभेदः ॥ ५२० ॥

भङ्गाद्गुरोः पञ्चदशस्य चैव कन्दप्रभेदः खलु सारसाख्यः ।
चतुर्दशस्यैव गुरोर्विभङ्गात् केकयाह्वयः स्यादिह कन्दभेदः ॥ ५२१ ॥

त्रयोदशस्यैव गुरोर्विभङ्गात् कन्दस्य भेदो हरिनामधेयः ।
स्याद् द्वादशस्यैव गुरोर्विभङ्गात् कन्दस्य भेदो हरिणाभिधानः ॥ ५२२ ॥

एकादशस्यैव गुरोर्विभङ्गात् कन्दस्य भेदः खलु हस्तिसंज्ञः ।
गुरोस्तु भङ्गाद्दशमस्य वेद्यः कादम्बसंज्ञः खलु कन्दभेदः ॥ ५२३ ॥

गुरोस्तु भङ्गान्नवमस्य वेद्यः कन्दस्य भेदः खलु कूर्मसंज्ञः ।
गुरोस्तु भङ्गेन किलाष्टमस्य कन्दस्य भेदो नयनामधेयः ॥ ५२४ ॥

गुरोस्तु भङ्गादिह सप्तमस्य कन्दस्य भेदो विनयाभिधानः ।
षष्ठस्य भङ्गेन गुरोर्निरुक्तः स्याद्विक्रमाख्यः खलु कन्दभेदः ॥ ५२५ ॥

स्यात् पञ्चमस्यापि गुरोर्विभङ्गादुत्साहनामा किल कन्दभेदः ।
गुरोश्चतुर्थस्य च भञ्जनेन धर्माभिधानः खलु कन्दभेदः ॥ ५२६ ॥

गुरोस्तृतीयस्य विभञ्जनेन त्वर्थाभिधानो भवतीह कन्दः ।
गुरोर्द्वितीयस्य विभञ्जनेन कामाभिधानः खलु कन्दभेदः ॥ ५२७ ॥

भङ्गस्त्विहाद्यस्य गुरोर्न कार्यः कन्दप्रबन्धे भवतीति वेद्यः ।
छन्दोविशेषस्य निबन्धनेन निर्युक्तसंज्ञोऽयमिह प्रबन्धः ॥ ५२८ ॥

मेलापकाभाववशात् त्रिधातुः पदैश्च तालैर्बिरुदैर्निबन्धात् ।
त्र्यङ्गो भवेद्भावनिकाख्यजातिः कन्दप्रबन्धस्त्विह लक्षितोऽयम् ॥ ५२९ ॥

---

— ॥ तुरङ्गलीलाप्रबन्धः ॥ —

अथोच्यतेऽयं सह लक्षणेन तुरङ्गलीलाख्य इह प्रबन्धः ।
तुरङ्गलीलाह्वयतालकेन निरूप्यते सात्र तुरङ्गलीला ॥ ५३० ॥

विरामशीर्षात् त्रितयद्रुतात्तु द्रुतद्वयं स्यात्तु तुरङ्गलीला ।
तालो मतस्तत्सहितः प्रबन्धस्तुरङ्गलीलेति मता द्विधा सा ॥ ५३१ ॥

गद्योद्भवा पद्यभवेति चैव पद्योद्भवा तत्र चतुर्विधा स्यात् ।
पूर्वार्धमेवेप्सिततालयुक्तं यदा तदा स्यादिह चाद्यभेदः ॥ ५३२ ॥

तत्रोत्तरार्धे किल तालयुक्ते भेदो द्वितीयो हयलीलकायाः ।
अर्धद्वयं चैव हि तालयुक्तं यदा तदा तत्र तृतीयभेदः ॥ ५३३ ॥

भेदत्रये तत्र विशेषितः स्यादार्यात्रयेणैव पुनर्निबद्धः ।
आद्यं दलं चेत् सपदैः सतालं स्वरैस्तथैवारचितं यदि स्यात् ॥ ५३४ ॥

तथोत्तरार्धं बिरुदैः सतालैर्विरच्यते चेत् स चतुर्थभेदः ।
एवं भवेयुर्हि तुरङ्गलीलागद्योद्भवा चापि चतुष्प्रकारः ॥ ५३५ ॥

स्याच्छन्दसा तत्र तुरङ्गलीलानाम्ना निबन्धं तुरगादिलीलाम् ।
प्रबन्धमाहुस्तुरगादिलीलाच्छन्दोऽभिधास्ये सह लक्षणेन ॥ ५३६ ॥

पादे यदीये नगणस्तथाद्यो भवेद् द्वितीयो जगणस्ततश्च ।
पुनश्च तद्वद्भगणो यदि स्याद्भवेद् द्वितीयो जगणस्ततश्च ॥ ५३७ ॥

पुनश्च तद्वद्भगणो लगौ च त्वेकादशे द्वादशके यतिः स्यात् ।
वृत्तं तदेतद्धयलीलमुक्तमेतत्प्रणीतं हयलीलमाहुः ॥ ५३८ ॥

तुरङ्गलीलाह्वयकस्य भेदः संहृत्य सम्यङ् नवधा निरुक्तः ।
एषां नवानामपि ताल एकस्तुरङ्गलीलाभिध एव वेद्यः ॥ ५३९ ॥

आर्यानिबन्धस्य तुरङ्गलीलाच्छन्दोनिबन्धस्य च वस्तुनो वा ।
गद्यस्य चाद्यावयवस्तथैवमुद्ग्राहरूपेण हि कल्पनीयः ॥ ५४० ॥

सर्वेषु चैतेषु तदुत्तराङ्गो ध्रुवात्मना चैव हि कल्पनीयः ।
आभोगकॢप्तिस्तु पदैरिह स्यात्तद्वर्णनाम्नाङ्कनवाद्भिरेव ॥ ५४१ ॥

अतस्त्रिधातुश्च भवेत् प्रबन्धस्तालादिनैयत्यवशेन सोऽयम् ।
निर्युक्तनामा च पदैः स्वरैश्च तालैर्निबन्धाद्बिरुदैश्च सम्यक् ॥ ५४२ ॥

स दीपनीजातियुतो हि वेद्यो यतः प्रबन्धश्चतुरङ्गबन्धः ।
तालैः पदैश्चापि निबध्यमानस्तारावलीजातियुतोऽपि वेद्यः ॥ ५४३ ॥

---

## — ॥ गजलीलाप्रबन्धः ॥ —

तुरङ्गलीलां निपुणं निरूप्य गजादिलीलामथ वर्णयामः ।
निबध्यते या गजलीलकेन तालेन सेयं गजलीलका स्यात् ॥ ५४४ ॥

विरामशीर्षं हि भवेल्लघूनां यस्मिंश्चतुष्कं स गजादिलीला ।
छन्दो विनास्मिन् किल वेदनीयं तुरङ्गलीलावदशेषमन्यत् ॥ ५४५ ॥

---

## — ॥ द्विपदीप्रबन्धः ॥ —

निरूपयामो द्विपदीप्रबन्धं तालेन या स्यात् कारुणाह्वयेन ।
विरच्यते सा द्विपदी प्रतीता तालश्च सोऽयं गुरुणैककेन ॥ ५४६ ॥

चतुर्विधेयं गदिता चतुर्धा खण्डा च मात्रादिरथापि पूर्णा ।
पादे यदीये छगणो यतः षण्मात्रायुतः स्युर्भगणाश्च पञ्च ॥ ५४७ ॥

अन्ते गुरुः स्याज्जगणं तु षष्ठद्वितीयकौ चैवमिहान्यपादाः ।
पादद्वयं ते प्रवदन्ति चान्ये स्वरप्रयोगं द्विपदीप्रबन्धे ॥ ५४८ ॥

चतुर्षु पादेषु भवेदिहाद्ये पादद्वयं चेन्नियतं हि लक्ष्म ।
तथोत्तरे चानियतं हि पादद्वये तदा स्यादियमेव खण्डा ॥ ५४९ ॥

स्थाने गुरुः षष्ठगणस्य यत्र मात्रादिसंज्ञा द्विपदी निरुक्ता ।
शुद्धैव पूर्णा गुरुणाधिकेन विरच्यते या प्रतिपादमेषः ॥ ५५० ॥

एवंविधा सा द्विपदी चतुर्धा सा मानवी तत्र भवेदिहाद्या ।
सा चन्द्रिका तत्र भवेद् द्वितीया धृतिस्तृतीयाप्यपरापि तारा ॥ ५५१ ॥

षण्मात्रिकेण च्छगणेन पादाश्चतुष्कलायुक् च गणद्वयेन ।
कृते भवेयुर्यदि मानवी सा तां चन्द्रिकामप्यथ लक्षयामः ॥ ५५२ ॥

तत्पञ्चमात्रौ यगणौ च यस्या वर्णात्मकः स्यान्नगणस्ततश्च ।
अन्ते लघुश्चापि गुरुस्तथैव पादेषु सोक्ता खलु चन्द्रिकेति ॥ ५५३ ॥

आदौ यदि स्याच्छगणस्त्रयश्च गणाश्चतुर्मात्रतया प्रतीताः ।
पादेषु यस्या धृतिरीरितासौ यस्याः पुरस्ताच्चरणस्ततश्च ॥ ५५४ ॥

चत्वार उक्ता यगणास्तथान्ते गुरुश्च पादेष्वियमेव तारा ।
यद्यप्यसौ पादचतुष्टयीयुक् तथा विवादः क विवक्षयार्धे ॥ ५५५ ॥

संलक्षणीया द्विपदित्वमाप्नेत्यष्टौ द्विपद्यः कथिताः क्रमेण ।

---

— ॥ चक्रवालप्रबन्धः ॥ —

निरूप्य चैवं द्विपदीप्रबन्धं स चक्रवालोऽपि निरूप्यतेऽथ ॥ ५५६ ॥

वर्णव्रजो यः खलु पूर्वपूर्वपदावसाने परिवर्तमानः ।
आदौ स्थितोऽसौ यदि चेत् पदस्योत्तरोत्तरस्यैष तु चक्रवालः ॥ ५५७ ॥

उद्ग्राहखण्डे ध्रुवके च वर्णवृत्तिष्वियं स्यान्नियमेन कार्या ।
आभोगखण्डेऽनियतेन चेयं स चक्रवालो द्विविधो मतोऽसौ ॥ ५५८ ॥

गद्योद्भवः पद्यभवस्तथासौ मेलापकाभाववशात् त्रिधातुः ।
तालादिनैयत्यवशात्तमेवानिर्युक्तसंज्ञां भजते प्रबन्धः ॥ ५५९ ॥

पदैश्च तालैश्च निबद्धभावात्तारावली जातिरसौ निरुक्तः ।

---

— ।। क्रौञ्चपदप्रबन्धः ।। —

निरूप्य चैवं खलु चक्रवालं क्रमात्ततः क्रौञ्चपदं वदामः ।। ५६० ।।

उद्ग्राहखण्डो गदितः स्वरैश्च ध्रुवाख्यखण्डस्तु पदैर्निबद्धः ।
लघुद्रुतद्वन्द्वसमन्वितेन यस्मिन्निबद्धः प्रतितालकेन ।। ५६१ ।।

उद्ग्राहमारभ्य भवेत् स्वरेषु न्यासो मतः क्रौञ्चपदाभिधोऽसौ ।
स च द्विधा क्रौञ्चपदाभिधोऽसौ स्याच्छन्दसा तद्रहितो द्वितीयः ।। ५६२ ।।

निरूप्यते क्रौञ्चपदाभिधस्य वृत्तस्य लक्ष्मास्य निवेदितं तत् ।
आदौ प्रयुक्तौ भगणस्तथैव पादे निरुक्ते मगणस्ततोऽन्यः ।। ५६३ ।।

सभौ गणौ स्तो नगणाश्च यत्र चत्वार उक्ताश्च गुरुस्तदन्ते ।
छन्दो मतं क्रौञ्चपदाभिधं तदाभोगक्लृप्तिस्तु पदैरिह स्यात् ।। ५६४ ।।

मेलापकाभाववशात् त्रिधातुस्तालादिनैयत्यवशात् प्रबन्धः ।
निर्युक्तसंज्ञश्च पदैः स्वरैश्च तालैर्भवेद्भावनिकाख्यजातिः ।। ५६५ ।।

---

— ।। स्वरार्थप्रबन्धः ।। —

एवं क्रमात् क्रौञ्चपदं निरूप्य ततः स्वरार्थाह्वयमामनामः ।
स्वराक्षरैर्यत्र मतः समस्तो विवक्षितोऽर्थः प्रतिपादितः स्यात् ।। ५६६ ।।

यस्मिन् स्वरार्थः स निगद्यतेऽत्र प्रबन्ध एवं द्विविधो निरुक्तः ।
आद्यस्तु शुद्धः खलु मिश्रकोऽन्यः शुद्धस्वरार्थं प्रतिपादयामः ।। ५६७ ।।

शुद्धस्वरैः स्याद्ग्रथितः स एष शुद्धस्वरार्थो मुनिभिर्निरुक्तः ।
स्वरैस्तु वर्णान्तरमिश्रितैश्चेत् कृतः स्वरार्थः स हि मिश्रनामा ।। ५६८ ।।

उद्ग्राहके तत्परिपूर्तिरिष्टा भवन्ति तस्यैव तु सप्त भेदाः ।
एकस्वरश्चैकपदं स आद्यः स्वरद्वयं त्वेकपदे द्वितीयः ।। ५६९ ।।

स्वरत्रयैकत्वपदे तृतीयश्चतुष्टये चैकपदे स्वराणाम् ।
भेदश्चतुर्थः कथितो हि पञ्चस्वरे पदे पञ्चम एष भेदः ।। ५७० ।।

पादे मतः षट्स्वरके तु षष्ठः सप्तस्वरे चैव तु सप्तमः स्यात् ।
शुद्धे स्युरेवं किल सप्त भेदा मिश्रेऽपि तावन्त इमे भवन्ति ।। ५७१ ।।

ते द्विस्वराद्यास्तु षडेव शुद्धा मिश्राश्च तद्वच्च षडेव ते स्युः ।
इमे पुनर्द्वादश च क्रमेण तथैव च व्युत्क्रमतो भवन्ति ।। ५७२ ।।

अनेकभेदा इह शुद्धमिश्रद्वयस्य चैकस्वरकस्य किं तु ।
अनुक्रमव्युत्क्रमयोरभावादेकस्वरे नास्ति हि भेदलेशः ॥ ५७३ ॥

गेयाविहैवं नियमेन चैवोद्ग्राहध्रुवौ तत्र पुनः पदैः स्यात् ।
आभोगकॢप्तिस्तु मता ततश्च त्रिधातुकोऽयं भवति प्रबन्धः ॥ ५७४ ॥

तालाद्यनैयत्यवशेन सोऽयं भवेदनिर्युक्त इति प्रतीतः ।
पदैश्च तालैश्च निबध्यमानस्तारावलीजातिरियं प्रबन्धः ॥ ५७५ ॥

स्वरप्रयोगे खलु वाचकत्वात्तेषां च नैव स्वरबन्धभावः ।
स्वरार्थमुक्त्वैवमिह प्रबन्धं निरूपयामो ध्वनिकुट्टिनीं ताम् ॥ ५७६ ॥

---

— ॥ ध्वनिकुट्टिनीप्रबन्धः ॥ —

उद्ग्राहतालो भवतीह भिन्नो ध्रुवे तु तालस्तदुभावपीमौ ।
मण्ठाच्च कङ्कालकतो विभिन्नौ तालौ भवेतां समसंख्यकोऽसौ ॥ ५७७ ॥

मात्रासु जायेत यतिश्च मेलापकस्तु तत्र क्रियतां न वायम् ।
ज्ञेयस्तु सोऽयं ध्वनिकुट्टिनी तु मेलापकाभाववशात् त्रिधातुः ॥ ५७८ ॥

तालस्य नैयत्यवशेन सेयं निर्युक्तरूपा ध्वनिकुट्टिनी स्यात् ।
तारावली स्यात् पदतालबन्धादित्येवमुक्ता ध्वनिकुट्टिनीयम् ॥ ५७९ ॥

निरूप्य सम्यग्ध्वनिकुट्टिनीं तामार्याप्रबन्धं प्रतिपादयामः ।

---

— ॥ आर्याप्रबन्धः ॥ —

अर्थस्य यद्वा चरणस्य चान्ते न्यस्येत् स्वरांस्तान् सरिगादिरूपान् ॥ ५८० ॥

आर्याभिधच्छन्दस एव तत् स्यादर्धद्वयं द्विः खलु गेयमाद्यम् ।
अर्धं द्वितीयं सकृदेव गेयं तत्रायमुद्ग्राहमुशन्ति चाद्यम् ॥ ५८१ ॥

अर्धं द्वितीयं ह्यपखण्डमाहुराभोगखण्डे पुनरत्र खण्डे ।
निबन्धनीयानि च गातृनेतृप्रबन्धनामानि हि गातृमुख्यैः ॥ ५८२ ॥

न्यस्येत्तथोद्ग्राहसमाह्वखण्डे स्वार्याभिधानो यदिह प्रबन्धः ।
षड्विंशतिस्तस्य भवन्ति भेदा लक्ष्म्यादयस्तत्र वदामि लक्ष्मीम् ॥ ५८३ ॥

आर्यास्वरूपं तु निरूपयामस्तदर्थमादौ प्रथमे यदर्धे ।
गणा भवेयुर्यदि सप्त पूर्वमन्ते गुरुः स्यान्नियमेन चेज्जः ॥ ५८४ ॥

षष्ठो यतः स्याज्जगणोऽथवास्मिंश्चत्वार एवं लघवः पृथग्वा ।
इत्येवमार्याप्रथमार्धलक्ष्म चार्धे द्वितीयेऽपि गणस्तु षष्ठः ॥ ५८५ ॥

एको लघुः स्यान्न परस्तथा च स्यात् षष्ठमात्रे यगणोऽपि स स्यात् ।
प्राधान्यतः स्यादिह लक्ष्म तस्यां षष्ठे गणे नाम ततो विशेषः ॥ ५८६ ॥

तेनार्धयुग्मे तु विना विकारं गणस्य षष्ठस्य गणान्तरेषु ।
सन्तो विकारा यदि ते तु भेदलक्ष्माणि तच्चैतदुदीरयामः ॥ ५८७ ॥

प्रत्येकमस्यां गुरुयुक्तसप्तगणात्मनः पूर्वपरात्मनोश्च ।
अन्ये गणात् षष्ठगणात् किल द्वादशैव तत्रापि गुरुद्वयं चेत् ॥ ५८८ ॥

गणे गणे स्याद्गुरवो भवेयुरेवं चतुर्विंशतिरेव तस्याः ।
तत्राधिकेनापि गुरुद्वयेन षड्विंशतिस्ते मिलिता भवन्ति ॥ ५८९ ॥

तेनैव सर्वे गुरुभिर्गणैः स्यात् षष्ठं गणं तत्र विनैव लक्ष्मीः ।
आद्यस्य भङ्गेन गुरोस्तु बुद्धिरार्याप्रबन्धस्य किलातिरेकम् ॥ ५९० ॥

भङ्गेन बुद्धिस्तु भवेदिहाद्यद्वितीययोरक्षरयोस्तु गुर्वोः ।
भङ्गे गुरूणां भवति त्रयाणां लीला चतुर्णां पुनरत्र भङ्गे ॥ ५९१ ॥

लज्जाथ भङ्गे गुरुपञ्चकस्य क्षमा तु षण्णामपि भञ्जनेन ।
दीर्घा भवेत् सा खलु सप्तभङ्गे स्यादष्टभङ्गे खलु तत्र गौरी ॥ ५९२ ॥

राजी नवानां भवतीह भङ्गे ज्योत्स्नात्र भङ्गे तु भवेद्दशानाम् ।
एकादशानामपि भञ्जनेन च्छाया मही द्वादशभञ्जनेन ॥ ५९३ ॥

त्रयोदशानामपि भञ्जनेन कीर्तिर्भवेदत्र चतुर्दशानाम् ।
विभञ्जनेनैव मनोरमा स्यात् पञ्चोत्तराणां दशभञ्जनेन ॥ ५९४ ॥

रोहिण्यभिख्या कथिता दशानां भवेद्विशालात्र षडुत्तराणाम् ।
सप्तोत्तराणां वसुधा दशानां विभञ्जने स्यादिति वेदितव्यम् ॥ ५९५ ॥

अष्टादशानामपि भञ्जनेन शिवा भवेदित्यवधारणीयम् ।
नवोत्तराणां हरिणी दशानां विभञ्जने स्यादिति वेदितव्यम् ॥ ५९६ ॥

तथा गुरूणामिह विंशतेस्तु विभञ्जनेन प्रथिता हि चक्रा ।
भङ्गादिहैकस्य च विंशतेश्च सा सारसी नाम भवेदिहार्या ॥ ५९७ ॥

द्वाविंशतेरप्यथ भञ्जने स्यादार्या कुरर्याह्वयनामधेया ।
हंसी त्रयोविंशतिभञ्जनेन वधूश्चतुर्विंशतिभञ्जने स्यात् ॥ ५९८ ॥

पञ्चोत्तराया अथ विंशतेश्च भङ्गे क्षमा नाम भवेदिहार्या ।
नैवान्तिमस्यापि गुरोर्विभङ्गः पथ्यादिकायाः खलु सन्ति ताश्च ॥ ५९९ ॥

छन्दोविचित्यां परिशीलनेन निरूपणीयाः खलु नैपुणेन ।
मेलापकाभाववशात् त्रिधातुर्नियुक्तनामा नियमात्तथैव ॥ ६०० ॥

स्याच्छन्दसस्तालपदस्वरैश्च निबन्धनाद्भावनिकाख्यजातिः ।

---

— ॥ गाथाप्रबन्धः ॥ —

इत्येवमार्या विहिताथ वक्ष्ये गाथाप्रबन्धं च यथाक्रमेण ॥ ६०१ ॥

आर्यैव चेदुक्तविधोपपन्ना पदं पुनः प्राकृतमाश्रयन्ति ।
सुगीयते सा जगति प्रतीता गाथा ततः संस्कृतलक्षणार्या ॥ ६०२ ॥

अन्यत् पुनर्लक्षणमत्र सर्वं ज्ञातव्यमार्यागतमेव सम्यक् ।
नेच्छन्ति भाषागतमेव लक्ष्म केचित्तु ये जन्मत एष भेदः ॥ ६०३ ॥

गाथा भवेत् पञ्चपदी तथा त्रिपदी भवेत् सा खलु षट्पदी वा ।

---

— ॥ द्विपदप्रबन्धः ॥ —

गाथाभिधां तां विनिरूप्य सम्यक् ततः प्रवक्ष्ये द्विपदप्रबन्धम् ॥ ६०४ ॥

यश्छन्दसा स्याद् द्विपथाह्वयेन तं वर्णयन्ति द्विपदप्रबन्धम् ।
तं दोधकं वृत्तमुदीरयन्ति गुरुद्वयात् प्राग्भगणत्रयं चेत् ॥ ६०५ ॥

न्यासं च सोऽयं लभते स्वरेषु सतालको वाथ वितालको वा ।
चतुर्विधः स प्रथमस्तु तत्रोद्ग्राहध्रुवाख्ये खलु खण्डयुग्मे ॥ ६०६ ॥

स्वरैर्निबन्धो भवति द्वितीयः पुनः प्रयोगैर्लभते निबन्धम् ।
स्वरप्रयोगद्वितयेन बन्धो भवेत्तृतीयोऽथ भवेत्तुरीयः ॥ ६०७ ॥

ताभ्यामुभाभ्यामभितस्तु तत्रोद्ग्राहध्रुवौ तत्र पदैर्निबद्धौ ।
आभोगक्लृप्तिस्तु पदैरिह स्यात् स्यात् प्राकृते दोहपदाभिधेयः ॥ ६०८ ॥

स संस्कृते स्याद् द्विपदाभिधानो लभेत वा दोधकनामधेयम् ।
सत्येव चैतस्य नव प्रभेदास्तेषु ब्रुवे सारसमाद्यभेदम् ॥ ६०९ ॥

यस्मिंश्च युग्मे प्रथमे तृतीये पादे च मात्रा दश तिस्र एव ।
समे द्वितीये चरणे चतुर्थे मात्रास्तथा द्वादश सारसोऽयम् ॥ ६१० ॥

पादद्वये चेद्विषमे भवन्ति मात्राश्चतस्रो दश चापि तत्र ।
समे तु पादद्वितये पुनर्द्वादशैव मात्राश्च यदा भवेयुः ॥ ६११ ॥

तदा द्वितीये भ्रमराभिधानख्यातः प्रबन्धो भवतीति वेद्यः ।
मात्रा यदा पञ्चदशासमे स्युस्त्रयोदश स्युश्च समे तदायम् ॥ ६१२ ॥

हंसस्तृतीयो भवति प्रबन्धस्त्रयोदश स्युर्विषमे यदीमाः ।
तदा प्रतीतः कुररश्चतुर्थो मात्राः पुनः पञ्च समे दशापि ॥ ६१३ ॥

यत्र प्रबन्धे विषमे तु पादे समे पुनर्द्वादश ता भवन्ति ।
स चन्द्रलेखः खलु पञ्चमः स्यात् पादे यदि स्युर्विषमे तु मात्राः ॥ ६१४ ॥

दशापि तिस्रश्च समे भवन्ति दशैव पञ्चापि च कुञ्जरोऽसौ ।
अङ्घ्रौ यदा स्युर्विषमे तु पञ्चदशापरस्मिन् हि चतुर्दशैव ॥ ६१५ ॥

मात्रा भवेयुस्तिलकाख्य एष स्यात् सप्तमोऽयं खलु वेदितव्यः ।
त्रयोदश स्युर्विषमे यदाङ्घ्रौ समे पुनः षोडश सन्ति मात्राः ॥ ६१६ ॥

सोऽयं प्रबन्धः कथितस्तु हंसक्रीडोऽष्टमोऽसाविति वेदितव्यः ।
एषां पुनर्दोहपदाभिधानमन्तेऽर्धयोः पञ्च लघुः शिखा चेत् ॥ ६१७ ॥

शिखादिमं तं द्विपदं वदन्ति प्रपन्धनिर्माणविधानदक्षाः ।
मयूरकश्चाप्ययमेव बोध्यः शिखादिमासु द्विपदीषु चैषु ॥ ६१८ ॥

यावत्य एषा विषमाङ्घ्रिमात्राः समे च पादे खलु ता भवेयुः ।
याश्चैव मात्राः समपादनिष्ठा भवेयुरेतद्विषये च पादे ॥ ६१९ ॥

पादस्य चैषां प्रथमस्य गानं सकृद्विधेयं द्विपदाभिधानाम् ।
द्विरेव गानं भवतीतरेषां तथा द्विरङ्घ्रेः प्रथमस्य गानम् ॥ ६२० ॥

सकृत् परेषामपि रीतिभेदाद्भेदास्त्वमीषां बहवो भवन्ति ।
प्रसिद्धिवैधुर्यवशात्तु लक्ष्ये नास्माभिरेते कथिता विशेषात् ॥ ६२१ ॥

मेलापकाभाववशात् त्रिधातुर्नियुक्तनामा नियमात् पुरोक्तात् ।
स्वरैश्च तालैश्च पदैश्च बन्धात् त्र्यङ्गो भवेद्भावनिकाख्यजातिः ॥ ६२२ ॥

कश्चिच्च तारावलिकाख्यजातिर्निबध्यमानः पदतालमात्रात् ।

— ॥ कलहंसप्रबन्धः ॥ —

एवं निरुक्तो द्विपदाभिधानस्ततः प्रवक्ष्ये कलहंससंज्ञम् ॥ ६२३ ॥

निबध्यमानः कलहंसनामच्छन्दोविशेषेण निबध्यमानः ।
अन्ते स्वरैश्चापि समन्वितश्चेत् पदैः स्वरेषु न्यसनं तदा चेत् ॥ ६२४ ॥

झम्पाख्यतालेन युतश्च सोऽयं कथ्येत विज्ञैः कलहंसनामा ।
द्वेधा त्वयं वर्णगणेन तद्वन्मात्रागणेनापि निबध्यमानः ॥ ६२५ ॥

यद्येष गद्येन विरच्यमानस्तदा स्वराङ्गं प्रथमं प्रगाय ।
ततः परं गेयमिति क्रमोऽयमुक्तं तथाद्ये भरतेऽस्य लक्ष्म ॥ ६२६ ॥

पदाक्षरैर्द्वादशभिः समेते क्रमाद् द्वितीयश्च तुरीयषष्ठौ ।
स्यात् सप्तमोऽयं दशमस्तथा द्वादशोऽयमेते गुरवो यदि स्युः ॥ ६२७ ॥

छन्दस्तदा स्यात् कलहंससंज्ञं तस्यानुवादावधि च स्वराः स्युः ।
खण्डेषु च न्यासविधिर्निरुक्तस्तालश्च झम्पा हि तथोपदिष्टः ॥ ६२८ ॥

झम्पाख्यताले तु विरामशीर्षद्रुतद्वयं चापि लघुद्वयं च ।
झम्पाख्यतालेन समानमात्रा तालान्तरं वात्र पुनर्विधेयम् ॥ ६२९ ॥

स च द्विधा वर्णजमात्रिकौ च भेदेन पद्यैरिह वर्णजः स्यात् ।
गद्येन चेन्मात्रिक एष उक्तो मात्राख्यसंख्यासदृशी च यान्या ॥ ६३० ॥

स्यादुत्तरार्धं ध्रुवखण्डमस्मिन् पदैरिहाभोगकृतिः पृथक् स्यात् ।
प्रबन्ध एषोऽपि भवेत् त्रिधातुर्नियुक्तसंज्ञा नियमाद् द्वयोश्च ॥ ६३१ ॥

तालस्य च च्छन्दस एष उक्तः स्वरैः पदैर्बन्धनतोऽपि तालैः ।
त्र्यङ्गो भवेद्भावनिकाख्यजातिरिति प्रबन्धः कलहंसनामा ॥ ६३२ ॥

---

— ॥ तोटकप्रबन्धः ॥ —

इत्येवमुक्ते कलहंससंज्ञे ततः परं तोटकमीरयामः ।
यश्छन्दसा तोटकनामकेन प्रगीयते तोटकमाहुरेनम् ॥ ६३३ ॥

तत्तोटकच्छन्द इति प्रतीतं यत् स्याच्चतुर्भिः सगणैरुपेतम् ।
पादस्य चान्ते भवति स्वरेषु न्यासान्वितस्तोटकनामधेयः ॥ ६३४ ॥

वृत्तप्रबन्धान्ननु वक्ष्यमाणात् पृथङ् न वाच्यं पुनरुक्त एषः ।
सत्यं यदि स्यादिह वृत्तशब्दसामन्यतश्छन्द इहाभिदध्यात् ॥ ६३५ ॥

येषां मतेऽयं खलु वृत्तशब्दो वृत्ताभिधं छन्द इहाभिधत्ते ।
तेषां मतेऽयं पुनरुक्तिदोषो नास्तीति तल्लक्षणमीरयामः ॥ ६३६ ॥

कृत्याह्वये छन्दसि यस्य पादे पूर्वं गुरूणां जगणान्वितानाम् ।
भवेत्तदा विंशतिरक्षराणां वृत्ताह्वयं छन्द इदं वदन्ति ॥ ६३७ ॥

एवं निवार्या पुनरुक्तिरार्याकन्दादिकानां च पुरोदितानाम् ।
पूर्वार्धमेतस्य हि तोटकस्योद्ग्राहो ध्रुवं चापि तथोत्तरार्धम् ॥ ६३८ ॥

आभोगकॢप्तिश्च पदैरिह स्यात्तस्मादयं चापि भवेत् त्रिधातुः ।
स्याच्छान्दसोऽयं नियमेन युक्तो नियुक्तनामा भवति प्रबन्धः ॥ ६३९ ॥

स्वरैश्च तालैश्च पदैर्निबद्धस्त्र्यङ्गो भवेद्भावनिकाख्यजातिः ।

## — ॥ घटप्रबन्धः ॥ —

इतीरितस्तोटकनामधेयो घटप्रबन्धं प्रतिपादयामः ॥ ६४० ॥

आलिक्रमाख्येषु पुनः प्रबन्धेषूद्देशको नैव विवक्षितः स्यात् ।
इत्येव संदर्शयितुं क्रमं तमुल्लङ्घ्य वृत्तिं घटमीरयामः ॥ ६४१ ॥

अत्राद्यमेतत् खलु तेन्नकैः स्यादर्धद्विपद्या च पुरोक्तया स्यात् ।
स्यात्तेन्नके चैव समाप्तिरेष घटाभिधानो भवति प्रबन्धः ॥ ६४२ ॥

अनुक्तमन्यत् खलु धर्मजातं सर्वं द्विपद्यामिव बोध्यमेतत् ।

## — ॥ वृत्तप्रबन्धः ॥ —

इत्येवमुक्त्वात्र घटप्रबन्धं वृत्तप्रबन्धस्य तु लक्ष्म वक्ष्ये ॥ ६४३ ॥

यच्छन्दसा स्वाभिमतेन येन केनापि तालेन तथैककेन ।
प्रगीयते वृत्तमिदं च तस्य पादस्य चान्तेऽप्यथ वृत्तकाले ॥ ६४४ ॥

स्वरप्रयोगो भवतीति केचित्तद्धीनमेवेति वदन्त्यथान्ये ।
वृत्ताभिधे छन्दसि चाहुरेके तल्लक्ष्म पूर्वं कथितं समस्तम् ॥ ६४५ ॥

समादयो वृत्तभिदाः समस्ताश्छन्दोविचित्यामिह वेदनीयाः ।

## — ॥ मातृकाप्रबन्धः ॥ —

वृत्तप्रबन्धं प्रतिपाद्य सम्यक् तां मातृकां संप्रति लक्षयामः ॥ ६४६ ॥

एषां पदानामिह मातृकाया एकैकवर्णः पुनरानुपूर्व्यात् ।
आदावकारादितया निबद्धस्तन्मातृकाख्यं हि विदुः प्रबन्धम् ॥ ६४७ ॥

सा च त्रिधा स्यात् प्रथमात्र दिव्या स्यान्मानुषीति प्रथिता द्वितीया ।
सा दिव्यमानुष्युदिता तृतीया तासां च लक्ष्म प्रतिपादयामः ॥ ६४८ ॥

या संस्कृतैरेव पदैर्निबद्धा स्यान्मार्गतालैरपि गीयमाना ।
दिव्यैव सान्या तु पदैः क्रियेत या प्राकृतैः स्यादपि देशितालैः ॥ ६४९ ॥

सा मानुषी स्यादुभयोस्तु योगाद्या संस्कृतप्राकृतयोस्तु वाचोः ।
या मार्गदेश्योरपि तालयोः स्यात् सा दिव्यमानुष्युदिता मुनीन्द्रैः ॥ ६५० ॥

एकैककेनाप्यवधेः पदेन भवेत् प्रयोगो बहुधा विभिन्नः ।
खण्डे ध्रुवे संस्कृतशब्दमार्गतालद्वयस्यापि सहप्रयोगात् ॥ ६५१ ॥

तथैव च प्राकृतशब्ददेशीतालद्वयस्यापि सहप्रयोगात् ।
तयोर्द्वयोरेकतरप्रयोगाद्भवन्ति भेदा बहवस्तथापि ॥ ६५२ ॥

भवेद् द्विधासौ कथितः प्रबन्धः पुनर्निबद्धश्च तयोस्तु पूर्वः ।
गद्यैर्विरच्येत पुनर्निबद्धः पद्यैः कृतो यः खलु सोऽपि चान्यः ॥ ६५३ ॥

प्रबन्धवर्गेष्वखिलेषु सोऽयं भवेत् प्रशस्तः खलु देवहृद्यः ।
पदैरकारादिभिरेव तत्रोद्ग्राहो भवेत् षोडशभिः प्रतीतः ॥ ६५४ ॥

तथा ककारादिभिरेव पञ्चत्रिंशत् पदानि ध्रुवखण्डमाहुः ।
आभोगकॢप्तिस्त्विह बोधनीया दिव्यादिभेदाननुसृत्य शब्दैः ॥ ६५५ ॥

संस्कृत्रिमाद्यैश्च पदैस्तु गातृनेतृप्रबन्धाङ्कनयैव कार्यम् ।
तेन त्रिधातुः कथितस्तथैव तालादिनैयत्यवशेन सोऽयम् ॥ ६५६ ॥

निर्युक्तनाम्ना पदतालबन्धात्तारावलीजातिरिहैष वेद्यः ।
इत्येवमुक्तः खलु मातृकाख्यप्रबन्ध एष प्रथितानुभावः ॥ ६५७ ॥

---

## — ॥ रागकदम्बप्रबन्धः ॥ —

निरूप्यते रागकदम्बनामा गातृप्रसिद्धो द्विपदप्रबन्धः ।
तत्रादिमः स्यात् प्रथितस्तु नन्द्यावर्ताभिधः स्वस्तिकनामकोऽन्यः ॥ ६५८ ॥

आद्यस्य लक्ष्माकलये चतुर्भिर्व्यक्तैश्च तालैर्बहुभिश्च रागैः ।
निबध्यमानः किल तत्र नन्द्यावर्ताभिधानो भवति प्रबन्धः ॥ ६५९ ॥

कार्यश्च सोऽयं प्रतिवृत्तभिन्नस्तालस्तथासौ प्रतिवृत्ततालम् ।
प्रत्यर्धकं वा प्रतिपादकं वा विभिन्नरागः परिकल्पनीयः ॥ ६६० ॥

तालस्य वृत्ते खलु योजितस्य न्यासस्तथा वृत्तियुगेन कार्यः ।
उद्ग्राहखण्डेऽप्यथ वा समाप्तिर्गद्यात्मकं केचिदिमं वदन्ति ॥ ६६१ ॥

अथोच्यते स्वस्तिकलक्षणं तु स्यादष्ट वृत्ताः पुनरष्ट तालाः ।
स्यात् स्वस्तिकश्चाष्टभिरेव रागैर्मतान्तरे तस्य भिदास्तु तिस्रः ।। ६६२ ।।

स्यादब्जपत्रश्च ततोऽब्जगर्भ आम्रेडितः स्याद्भ्रमरादिरन्यः ।
वृत्तैः पुनः षोडशभिश्च तालैस्तत्संख्यतालैः पुनरब्जपत्रः ।। ६६३ ।।

द्वात्रिंशता तत्र च वृत्तरूपैस्तालैश्च रागैः पुनरब्जगर्भः ।
वृत्तैश्चतुःषष्टिमितैश्च तालै रागैश्च तावद्भिरिहान्तिमः स्यात ।। ६६४ ।।

एते त्रयः स्वस्तिकवस्तुभेदास्तेषां च खण्डादिभिदां वदामः ।
पूर्वार्धमुद्ग्राह इहोपदिष्टः स्यादुत्तरार्धं ध्रुवखण्ड एषु ।। ६६५ ।।

द्विधातवश्चैक इह प्रबन्धो महाप्रबन्धावयवत्वमाप्तः ।
महाप्रबन्धाङ्कितया निरुक्तः पुरातनै रागकदम्बसंज्ञः । ६६६ ।।

यथा प्रतिज्ञादिभिरङ्गपादैर्न्यायो महावाक्यमिति प्रसिद्धः ।
आभोगको यद्यपि चात्र नास्ति तथापि वृत्ते पुनरन्तिमे तु ।। ६६७ ।।

खण्डः पदैः कैश्चन गातृनेतृप्रबन्धनामाङ्कयुतश्च कार्यः ।
उद्ग्राहमुख्येषु च वर्णितं न स्वरादिमाङ्गं चयकल्पनं तु ।। ६६८ ।।

तस्मात् स्वराद्या अपि कर्तुरिच्छावशाच्च लक्ष्यानुमतैश्च कार्याः ।
इच्छावशेनैव षडङ्गक्लृप्त्या स्यान्मेदिनीजातिरयं प्रबन्धः ।। ६६९ ।।

भवेदनिर्युक्तकनामधेयस्तालाद्यनैयत्यवशेन सोऽयम् ।

---

— ।। पञ्चतालेश्वरप्रबन्धः ।। —

इतीरितो रागकदम्बनामा तं पञ्चतालेश्वरमीरयामः ।। ६७० ।।

यस्मिन् पुरा तालविवर्जितः स्यादालापने पञ्चपदानि पञ्च ।
तालेन चच्चत्पुटनामकेन गेयानि च द्विः पुनरेव तेन ।। ६७१ ।।

तालेन गेयाः स्वरपाटवर्णाः मानेन चच्चत्पुटयोर्द्वयस्य ।
पाटाक्षरैः स्यात् पटहोद्भवैस्तु यद्यन्तरश्चाचपुटेन पञ्च ।। ६७२ ।।

पदानि तालेन ततो द्विवारं गेयान्यथो चाचपुटेन तेन ।
स्वराश्च पाटाश्च भवन्ति गेया मानद्वयाच्चाचपुटश्च पश्चात् ।। ६७३ ।।

हौडुक्कतालः क्रियतेऽन्तरोऽथ स्यात् षट्पितापुत्रकनामतालात् ।
पदानि पञ्चैव पृथग्द्विवारं गेयानि तेनैव पुनः स्वराश्च ।। ६७४ ।।

पादानि गेयास्तदनन्तरस्तु स्यात् षट्पितापुत्रकनामयुग्मात् ।
तैः शङ्खपाटैः कथितोऽन्तरस्तु प्रगीयतेऽसौ तदनन्तरं तु ॥ ६७५ ॥

पादानि षट् चैव पदानि संपक्केष्टाकतालेन तथा स्वरश्च ।
पाटाश्च गेयाः खलु मानयुग्मात्तस्यैव पश्चात् क्रियतेऽन्तरस्तु ॥ ६७६ ॥

कांस्योद्भवैरेव च तालपाटैरुद्घट्टनाम्नः पुनरत्र तालात् ।
पादानि षट् चैव तथा स्वराश्च पाटाश्च गेया अथ मानयुग्मात् ॥ ६७७ ॥

तस्यैव पश्चान्मुरजोद्भवैस्तु पाटैर्विधेयोऽन्तरखण्ड एषः ।
मानेन पश्चादविलम्बितेनाभोगश्च कार्यः पुनरत्र खण्डः ॥ ६७८ ॥

प्रबन्धनाम प्रथमं तु गेयं ततः परं नायकनामधेयम् ।
प्रगेयमाशीर्वचनं ततः स्यादनन्तरं स्यात् खलु वाक्यरूपे ॥ ६७९ ॥

मेलापके स्याद्बहुलप्रयोगे न्यासश्च सोऽयं द्विविधः प्रबन्धः ।
वीरादिमः स्यात्तिलकस्तथाद्यो वीरे रसे चेद्विनिबध्यतेऽसौ ॥ ६८० ॥

शृङ्गारसंज्ञे तु रसे निबद्धः शृङ्गारपूर्वस्तिलकोऽवसेयः ।
स्युः पञ्चतालेश्वरगीतिमात्रात् सर्वेऽपि देवाः परितोषभाजः ॥ ६८१ ॥

एवं प्रबन्धः कथितस्तु पञ्चतालेश्वरो नाम ततः परं तु ।

---

— ॥ तालार्णवप्रबन्धः ॥ —

तालार्णवं संप्रति वर्णयामो निबध्यतेऽसौ बहुभिश्च तालैः ॥ ६८२ ॥

द्वेधा च सोऽयं भवति प्रबन्धः स्याद्द्व्यजः पद्यजनामकोऽन्यः ।
तालार्णवः सम्यगुदीरितोऽसावित्थं सभेदं चतुरीरितास्ते ॥ ६८३ ॥

---

— ॥ अथ विप्रकीर्णप्रबन्धाः ॥ — ॥ श्रीरङ्गप्रबन्धः ॥ —

विशिष्य पश्चादिह विप्रकीर्णप्रबन्धवर्गं प्रतिपादयामः ।
षट्त्रिंशदेते कथितास्तु पूर्वं श्रीरङ्गमत्रादिममामनामः ॥ ६८४ ॥

तालैश्चतुर्भिश्च तथैव रागैश्चतुर्भिरेवेह विरच्यते यः ।
अन्ते पदेनापि समन्वितश्च रसादिषु प्राक्कथितेषु चान्ते ॥ ६८५ ॥

स्वरप्रयोगः प्रतिरागमत्र कर्तव्य एवेत्यवधारणीयम् ।
उद्ग्राहखण्डादिविभागक्लृप्तिस्तथा प्रबन्धादिमनामधेयम् ॥ ६८६ ॥

सर्वं त्विदं रागकदम्बक्लृप्त्या ततो द्विधातुः कथितः प्रबन्धः ।
तालाद्यनैयत्यवशेन सोऽयं भवेदनिर्युक्त इति प्रतीतः ॥ ६८७ ॥

पुरा निरुक्तो नियमश्च संख्यासमाश्रयो नैष तु तालरूपे ।
षड्भिस्तथाङ्गैर्विनिबध्यमानः स्यान्मेदिनीजातिरयं प्रबन्धः ॥ ६८८ ॥

अन्यानि चाङ्गानि तु वाञ्छितेन क्रमेण योज्यान्युदितप्रबन्धे ।

---

— ॥ श्रीविलासप्रबन्धः ॥ —

श्रीरङ्गसंज्ञं प्रतिपाद्य तु श्रीविलासमेतं प्रतिपादयामः ॥ ६८९ ॥

समान्वितः पञ्चभिरेव तालै रागैस्तथा पञ्चभिरेव युक्तः ।
अन्ते स्वरैश्चोपनिबध्यते यः स श्रीविलासो भवति प्रबन्धः ॥ ६९० ॥

अनुक्तमत्राखिलपूर्वमुक्तं श्रीरङ्गवत् स्यादिति वेदितव्यम् ।

---

— ॥ पञ्चभङ्गिप्रबन्धः ॥ —

तं श्रीविलासे प्रकथय्य पञ्चभङ्गिप्रबन्धं प्रतिपादयामः ॥ ६९१ ॥

रागद्वयेनापि च तालयोस्तु युगेन युक्ते युततेन्नकोऽन्ते ।
स्यात् पञ्चभङ्गिः प्रथितः प्रबन्धः पञ्चाननं चापि निरूपयामः ॥ ६९२ ॥

---

— ॥ पञ्चाननप्रबन्धः ॥ —

यो रागयोरेव च तालयोश्च द्वयेन युक्तो भवति प्रबन्धः ।
पाटैस्तथान्ते सहितस्तमेनं पञ्चाननं प्राञ्च उदीरयन्ति ॥ ६९३ ॥

---

— ॥ उमातिलकप्रबन्धः ॥ —

वक्ष्याम्यथोमातिलकप्रबन्धं त्रिभिश्च रागैस्त्रिभिरेव तालैः ।
तथान्त्यभागे बिरुदान्वितश्चेत्येते हि सर्वाङ्गयुताः प्रबन्धाः ॥ ६९४ ॥

श्रीरङ्गमुख्याः खलु वेदितव्यास्ततः परं तु त्रिपदीं वदामः ।

---

— ॥ त्रिपदीप्रबन्धः ॥ — तालात् ।

आद्याविहाङ्घ्री गणयोर्द्वयेन पादस्तृतीयस्तु गणैश्चतुर्भिः ॥ ६७४ ॥

तयोर्गणानां त्रितयेन युक्त एवं किलैकादश वै गणाः स्युः ।
एकादशस्वेषु गणेषु मध्ये षष्ठो गणः स्याद्दशमस्तथैव ॥ ६९६ ॥

गणेन युक्ता रतिसंज्ञकेन त्वन्ये गणा मान्मथसंज्ञकास्ते ।
अथास्य गाने नियमेन गीत्वा गीत्वाद्यपादौ प्रथमं ततश्च ॥ ६९७ ॥

पादस्तृतीयः खलु किंचिदूनो गेयः समग्रस्त्वथवा क्रमेण ।
ततश्चतुर्थश्चरणश्च गेयः कर्णाटभाषाग्रथिता च सेयम् ॥ ६९८ ॥

त्वया च यासौ त्रिपदी निरुक्ता तस्याश्चतुर्भिश्चरणैर्युतत्वात् ।
त्रिपद्यभिख्या घटते कथं वा तस्योत्तरं संप्रति वर्णयामः ॥ ६९९ ॥

तत्राद्यपादद्वितयस्य योगे नवैकपादत्वगता प्रतीतिः ।
तत्राद्यपादद्वितयं भवेदुद्ग्राहो ध्रुवाख्यस्तु तृतीयपादः ॥ ७०० ॥

ओव्यादिमानां च ततश्चतुर्णामाभोगराहित्यमुदीरितं यत् ।
पादैरिहाभोगविधा विधेया तस्मात् त्रिधातुस्त्रिपदी किलेयम् ॥ ७०१ ॥

गणैश्च कर्णाटकभाषया च निर्युक्तनामा नियमेन सोऽयम् ।
स्वरप्रयोगो द्विपदीवदेवं तारावली व्यक्ततया प्रबन्धः ॥ ७०२ ॥

---

## — ॥ चतुष्पदीप्रबन्धः ॥ —

इत्थं त्रिपद्यां प्रतिपादितायां चतुष्पदीं साधु निरूपयामः ।
द्वितीयतुर्यौ चरणौ च यस्याः समन्वितौ षोडशमात्रिकाभिः ॥ ७०३ ॥

आद्ये तृतीये चरणे च पञ्चदशैव मात्राश्चरणाश्च यस्मात् ।
यदर्धयोर्द्वौ यमकावभिन्नार्थकौ वदन्त्येव चतुष्पदीं ताम् ॥ ७०४ ॥

भिन्नार्थकानामपि यत्पदानां वर्णैकरूप्यं यमकं तदाहुः ।
तस्यां स्वराः स्युस्तदनन्तरं च न्यासो भवेत्तेन्नकनाम चान्ते ॥ ७०५ ॥

निर्युक्तसंज्ञैश्च पदैः स्वरैश्च तेन्नैरयं भावनिकाख्यजातिः ।

---

## — ॥ षट्पदीप्रबन्धः ॥ —

अथोच्यते संप्रति षट्पदी सा षष्ठस्तृतीयस्त्रिगणश्च पादः ॥ ७०६ ॥

पादाः परे द्विद्विगणा भवन्ति बाणो गणः षष्ठतृतीयकान्ते ।
कामः परे कामगणोपपन्ना कर्णाटभाषारचिता विताला ॥ ७०७ ॥

स्थायिस्वरे न्याससमन्विता च सा षट्पदी नाम बुधैर्निरुक्ता ।
चतुष्पदी षट्पदिकेति ते द्वे वेद्ये परं स्वार्थकनामधेये ॥ ७०८ ॥

पूर्वं तु पादक्रममत्र चोक्तमुद्ग्राहसंज्ञं ध्रुवमुत्तरं स्यात् ।
आभोगक्लृप्तिस्तु पुरेव वेद्या तस्मादियं स्यात् कथिता त्रिधातुः ॥ ७०९ ॥

भाषागणानां नियमान्निरुक्तैर्निर्युक्तसंज्ञो भवति प्रबन्धः ।
तारावलीजातिरियं च वेद्या प्रपञ्चिताङ्गा च पदस्वराभ्याम् ॥ ७१० ॥

---

## — ॥ वस्तुप्रबन्धः ॥ —

वस्तुप्रबन्धं त्वथ वर्णयामश्चाद्ये तृतीयेऽपि च पञ्चमे च ।
पादैः स्थिताः पञ्चदशैव मात्रा द्वितीयके द्वादश ताश्चतुर्थे ॥ ७११ ॥

स्वराश्च पाटाः प्रथमार्धकान्ते द्वितीयतुर्यान्तजुषः स्वराः स्युः ।
तेन्नास्ततो लक्षितदोधकश्च न्यासश्च तेन्ने स तु वस्तुसंज्ञः ॥ ७१२ ॥

अङ्गैर्निबद्धा बिरुदातिरिक्तैः पञ्चाङ्गकानन्दिनिकाख्यजातिः ।

---

## — ॥ विजयप्रबन्धः ॥ —

विवेचयामो विजयप्रबन्धं राज्ञां च यः स्याद्विजयाभिधायी ॥ ७१३ ॥

तेन्नैः स्वरैः पाटपदैश्च बद्धस्तालेन युक्तो विजयाह्वयेन ।
न्यासश्च तेन्ने विजयप्रबन्धः स कीर्तितो याष्टिककोहलाद्यैः ॥ ७१४ ॥

प्लुतो गुरुः स्याद्विजयाभिधाने पुनः प्लुतश्चैव लघुद्वयं च ।
निर्युक्तसंज्ञः कथितस्त्रिधातुरानन्दिनी स्याद्बिरुदस्य पाठात् ॥ ७१५ ॥

---

## — ॥ त्रिपथप्रबन्धः ॥ —

ततो वदामस्त्रिपथप्रबन्धमाद्यस्तु पाटैश्चरणो निबद्धः ।
स्वरैर्द्वितीयश्चरणश्च बद्धः पादस्तृतीयो बिरुदैर्निरुक्तः ॥ ७१६ ॥

पादास्त्रयो यत्र भवन्ति चैवं प्रकीर्तितोऽयं त्रिपथीप्रबन्धः ।
भवेदनिर्युक्त इह त्रिधातुरानन्दिनी तेन्नकवर्जितेन । ॥ ७१७ ॥

---

— ॥ चतुर्मुखप्रबन्धः ॥ —

चतुर्मुखं संप्रति लक्षयामो वर्णस्वरैः स्थायिनि चाद्यपादः ।
आरोहिणि स्यादपरस्तु पाटैः पदैस्तृतीयस्त्ववरोहिवर्णे ॥ ७१८ ॥

तुर्यस्तु संचारिणि तेन्नकस्य न्यासो ग्रहे यस्य चतुर्मुखोऽयम् ।
भवेदनिर्युक्त इह त्रिधातुरानन्दिनी स्याद्बिरुदैर्व्यपेतः ॥ ७१९ ॥

---

— ॥ सिंहलीलप्रबन्धः ॥ —

संकीर्तयामस्त्वथ सिंहलीलं यः सिंहलीलेन च तालकेन ।
स्वरैश्च पाटैर्बिरुदैश्च तेन्नैर्विरच्यतेऽसौ खलु सिंहलीलः ॥ ७२० ॥

आद्यन्तयोर्यस्य लघुर्हि मध्ये द्रुतास्त्रयोऽसौ खलु सिंहलीलः ।
निर्युक्तसंज्ञः कथितस्त्रिधातुः स्यान्मेदिनीजातिरयं प्रबन्धः ॥ ७२१ ॥

---

— ॥ हंसलीलप्रबन्धः ॥ —

अथोच्यते संप्रति हंसलीलो यो हंसलीलाह्वयतालकेन ।
पदैर्निबद्धश्चरणः किलाद्यः पाटैर्द्वितीयो भवति प्रणीतः ॥ ७२२ ॥

स हंसलीलः कथितः प्रबन्धो निर्युक्तसंज्ञः कथितः प्रवीणैः ।
तालेन पाटैश्च पदैश्च बद्धस्त्र्यङ्गो भवेद्भावनिकाख्यजातिः ॥ ७२३ ॥

---

— ॥ दण्डकप्रबन्धः ॥ —

संलक्ष्य चैवं किल हंसलीलं निरूप्यते संप्रति दण्डकाख्यः ।
यश्छन्दसा दण्डकनामकेन पदैः स्वरैश्चापि निबध्यते च ॥ ७२४ ॥

स दण्डकाख्यः कथितः प्रबन्धस्तस्य प्रभेदास्तु निरूपणीयाः ।
ते चण्डवृष्टिप्रमुखाः समस्ताश्छन्दोविचित्यां चतुरं निरुक्ताः ॥ ७२५ ॥

निर्युक्तसंज्ञः कथितस्त्रिधातुस्त्र्यङ्गोऽपि तालेन पदैः स्वरैश्च ।
निबद्ध एतैरुदितैर्विशेषैः सोऽयं भवेद्भावनिकाख्यजातिः ॥ ७२६ ॥

---

— ॥ झम्पटप्रबन्धः ॥

वक्ष्यामहे झम्पटलक्षणं तच्छन्दोविचित्यां हि निरूपितं यत् ।
वृत्तेन यो झम्पटनामकेन क्रीडाख्यतालेन च यः प्रबन्धः ॥ ७२७ ॥

तं झम्पटाख्यं जगदुः प्रबन्धं क्रीडाख्यतालस्य वदामि लक्ष्म ।
द्रुतद्वयं चैव विरामशीर्षं क्रीडाख्यतालं कथयन्ति सन्तः ॥ ७२८ ॥

उद्ग्राहमाद्यं चरणद्वयं च तृतीयपादं ध्रुवमामनन्ति ।
आभोगक्लृप्तिस्तु यथापुरं स्यात् त्रिधातुमेतं कथयन्ति तस्मात् ॥ ७२९ ॥

छन्दोविधानस्य च तालकस्य निर्युक्तनामा नियमात् स एषः ।
तालैः पदैश्चापि निबध्यमानः स्याद्भावनीजातिरयं प्रबन्धः ॥ ७३० ॥

---

— ॥ कन्दुकप्रबन्धः ॥ —

ततः परं कन्दुकनामधेयं प्रबन्धमत्र प्रतिपादयामः ।
पदैस्तु पादः प्रथमो द्वितीयः पाटैस्तृतीयो बिरुदैश्च यस्य ॥ ७३१ ॥

स कन्दुको नाम भवेत् पुरेवोद्ग्राहादिभेदो व्यवधारणीयः ।
अयं ह्यनिर्युक्त इति प्रतीतः स्याद्दीपनी च स्वरतेन्नहीनः ॥ ७३२ ॥

तत् सिंहलीलादिषु पञ्चसु स्यादुद्ग्राहके न्यास इहोपदिष्टः ।
अनीरितन्यासपदेषु चान्येषूद्ग्राहके न्यासविनिर्णयः स्यात् ॥ ७३३ ॥

---

— ॥ त्रिभङ्गिप्रबन्धः ॥ —

इतीरितः कन्दुकनामधेयस्ततस्त्रिभङ्गिं प्रतिपादयामः ।
स्वरैश्च पाटैश्च पदैश्च गेयस्त्रिभङ्गिसंज्ञः स च पञ्चधा स्यात् ॥ ७३४ ॥

त्रिभङ्गितालेन भवेदिहाद्यस्त्रिभङ्गिवृत्तेन ततो द्वितीयः ।
तालैस्त्रिभिश्च त्रिभिरेव रागैस्त्रिभङ्गिसंज्ञस्य तृतीयभेदः ॥ ७३५ ॥

छन्दोभिरेष त्रिभिरन्वितश्चेत् त्रिभङ्गिसंज्ञस्य चतुर्थभेदः ।
देवत्रयस्य स्तुतिसंयुतश्चेत् त्रिभङ्गिभेदः खलु पञ्चमः स्यात् ॥ ७३६ ॥

निर्युक्तकोऽयं कथितस्त्रिधातुः स्याद्दीपनी तेन्नकवर्जनेन ।

---

— ॥ हरविलासप्रबन्धः ॥ —

त्रिभङ्गिमुक्त्वा क्रमशः प्रबन्धं हरादिकं वच्मि विलासमेनम् ॥ ७३७ ॥

पदैश्च बद्धो बिरुदैश्च पाटैस्तेन्नैर्हरादिस्तु विलासकः स्यात् ।

---

— ॥ सुदर्शनप्रबन्धः ॥ —

पदैश्च युक्तं बिरुदैश्च तेन्नैः सुदर्शनाख्यं खलु निर्दिशन्ति ॥ ७३८ ॥

स च स्वराणां बिरुदस्य चैवाभावान्निरुक्तश्चतुरङ्ग एषः ।
न्यादीपनीजातिरयं प्रबन्धस्ततः स्वराङ्कं प्रतिपादयामः ॥ ७३९ ॥

---

— ॥ स्वराङ्कप्रबन्धः ॥ —

उद्ग्राह एकोऽत्र पदैस्तथैकस्तालो मतो यत्र भवेत् प्रगेयः ।
स्वरैश्च तालद्वितयेन बद्धो मेलापकाख्यः खलु यत्र गेयः ॥ ७४० ॥

त्रिभिश्च तालैर्बिरुदैश्च बद्धो ध्रुवाख्यखण्डः खलु यत्र गेयः ।
न्यासःस्वरैः स्यादिह मालवश्रीसंज्ञेन रागेण च यस्य गानम् ॥ ७४१ ॥

मेलापकोऽन्यत्र विशेषरीत्या नोक्तोऽत्र मेलापक एव च स्यात् ।
न्यायोऽयमन्यत्र तथा प्रबन्धो निबन्धनीयः सुधिया स्वराङ्कः ॥ ७४२ ॥

आभोगखण्डस्तु पुरेव कार्यस्तस्माच्चतुर्धातुरयं प्रबन्धः ।
निर्युक्तसंज्ञः खलु रागबन्धान् स्यादीपनी तेन्नकपाटवर्जः ॥ ७४३ ॥

---

— ॥ श्रीवर्धनप्रबन्धः ॥ —

इति स्वराङ्कं प्रतिपाद्य सम्यक् श्रीवर्धनं चाथ निरूपयामः ।
निबध्यमानो बिरुदैश्च पाटैः पदैः स्वरैस्तालयुगेन युक्तः ॥ ७४४ ॥

श्रीवर्धनाख्यः स मतः प्रबन्ध उद्ग्राहकोऽस्मिन् बिरुदैश्च पाटैः ।
ध्रुवाख्यखण्डस्तु पदस्वराभ्यामन्यत्ततः स्यात् सुगमं प्रबन्धे ॥ ७४५ ॥

---

— ॥ हर्षवर्धनः ॥ —

श्रीवर्धनं चापि निरूप्य सम्यग्घर्षादिमं वर्धनमीरयामः ।
पदैर्निबद्धो बिरुदैः स्वरैश्च पाटैश्च हर्षादिमवर्धनं स्यात् ॥ ७४६ ॥

---

— ॥ वदनप्रबन्धः ॥ —

हर्षादिमं वर्धनमीरयित्वा ततो वदामो वदनप्रबन्धम् ।
स च द्विधा स्याद्वदनं त्विहाद्यं तथोपपूर्वं वदनं द्वितीयम् ॥ ७४७ ॥

वस्त्वादिमं स्याद्वदनं तृतीयं तेषां च लक्ष्म प्रतिपादयामः ।
आदौ च यस्याश्छपयोर्द्वयं स्यात्ततो निरुक्तो दगणश्च पादे ॥ ७४८ ॥

उद्ग्राहसंज्ञं त्विदमेव यस्याः स्वरैश्च पाटैश्च युतं द्वितीये ।
छपद्वयं दश्च हि तत्र खण्डे तच्चान्तराख्यं भजते विकल्पम् ।। ७४९ ।।

आभोगखण्डश्च पदान्तरैः स्यात्तच्चोपपूर्वं वदनं द्वितीयम् ।
तदेव यत्र स्वरपाटबद्धं स्याच्छद्वयेनाथ दतान्वितं च ।। ७५० ।।

तदेव यत्र स्वरपाटबद्धं यदि च्छयुग्माद् दचछैरुपेतम् ।
तद्वस्तुपूर्वं वदनं वदन्ति षण्मात्रकोऽत्र च्छगणो निरुक्तः ।। ७५१ ।।

गणश्चतुर्मात्रक एव चः स्यात् त्रिमात्रकस्तो दगणो द्विमात्रः ।
इत्युक्तमेव स्मरणीयमत्र चाभोगक्लृप्तिस्तु पदान्तरैः स्यात् ।। ७५२ ।।

त्रिधातुकोऽयं कथितः प्रबन्धो मतो ह्यनिर्युक्ततया तथैव ।
विवर्जितत्वाद्बिरुदैश्च तेन्नैश्चतुर्विधाङ्गः खलु दीपनी च ।। ७५३ ।।

---

## — ।। चच्चरीप्रबन्धः ।। —

इतीरयित्वा वदनप्रबन्धं तां चच्चरीं संप्रति लक्षयामः ।
हिन्दोलको रागवरश्च यस्मिंस्तालस्तथा चच्चरिकाह्वयः स्यात् ।। ७५४ ।।

पादास्तथा षोडशमात्रिकाः स्युः पादावनुप्रासयुतौ तथा द्वौ ।
सा चच्चरी नाम बुधैर्निरुक्ता सा प्राकृतैरेव पदैर्निबद्धा ।। ७५५ ।।

गेया वसन्तोत्सव एव सैषा प्रबन्धवर्या खलु चच्चरी स्यात् ।
केचित् पुनश्चच्चरिकाह्वयेन स्याच्छन्दसा चच्चरिकेति चाहुः ।। ७५६ ।।

क्रीडाख्यतालेन च केचिदाहुश्छन्दोऽन्तरेणाप्यपरे वदन्ति ।
बद्धं तु यच्छन्द इहास्य नाम प्रबन्धनामापि निरूपणीयम् ।। ७५७ ।।

पूर्वार्धं उद्ग्राह इहोपदिष्टः स्यादुत्तरार्धं ध्रुवसंज्ञकं च ।
आभोगक्लृप्तिस्तु पदैरिह स्यात्ततस्त्रिधातुः कथितः प्रबन्धः ।। ७५८ ।।

तालादिनैयत्यवशेन सोऽयं निर्युक्तसंज्ञः पदतालबन्धात् ।
तारावलीजातिरिहाङ्गयुग्मवतीति चच्चर्यभिधा निरूढा ।। ७५९ ।।

---

## — ।। चर्याप्रबन्धः ।। —

चर्याप्रबन्धं प्रतिपादयामः पुराविदां गीतविदां मतेन ।
या पद्धटीराहटिकाग्रगण्यच्छन्दोविशेषेण समन्विता च ।। ७६० ।।

पादान्तगप्रासविशेषरम्या चाध्यात्मसंबोधिपदैरुपेता ।
चर्येति नाम्ना कथिता तदीयो द्वितीयसंज्ञः पुनरत्र तालः ।। ७६१ ।।

अन्योऽथ वा तत्सममात्रतालः सा च द्विधा स्यादिह वृत्तपूर्त्या ।
पूर्णा त्वपूर्णा तदपूर्तितः स्याच्चर्याद्वयश्चैव पुनर्द्विधा स्यात् ॥ ७६२ ॥

समध्रुवा स्याद्विषमध्रुवान्या तत्रादिमायाः खलु लक्ष्म वक्ष्ये ।
आवृत्तिभाजो यदि सर्वपादाः समध्रुवा सा कथिता मुनीन्द्रैः ॥ ७६३ ॥

ततो द्वितीया ध्रुवखण्डमात्रस्यावृद्धितस्सा विषमध्रुवाख्या ।
आभोगक्लृप्तिस्तु पृथक्पदैः स्यात् त्रिधातुकस्तेन मतः प्रबन्धः ॥ ७६४ ॥

निर्युक्तसंज्ञः पदतालबन्धात्तारावलीजातिरयं निरुक्तः ।

---

## — ॥ पद्धटीप्रबन्धः ॥ —

चर्याप्रबन्धं प्रतिपाद्य सम्यङ्निरूप्यते पद्धटिकाप्रबन्धः ॥ ७६५ ॥

पादान्तगप्राससमन्विता या स्यात् पद्धटीच्छन्दसि चैव बद्धा ।
स्यात् पद्धटी नाम बुधैर्निरुक्ता तस्या विभागं प्रतिपादयामः ॥ ७६६ ॥

आद्यं त्विहार्धं बिरुदैर्विधाय स्वरान् प्रयुञ्जीत तथा द्वितीयम् ।
अर्धं च गीत्वा बिरुदैस्ततश्च पाटान् प्रयुञ्जीत च गीतविज्ञः ॥ ७६७ ॥

उद्ग्राहकः सस्वरमादिमार्धं सपाटमन्यार्धमिह ध्रुवश्च ।
आभोगक्लृप्तिश्च पदैर्विधेया तस्मादियं स्यात् कथिता त्रिधातुः ॥ ७६८ ॥

निर्युक्तसंज्ञो गततेन्नकः स्यादानन्दिनीजातिरयं प्रबन्धः ।
उक्त्वेत्यमुं पद्धटिकाप्रबन्धं तां राहडीं संप्रति लक्षयामः ॥ ७६९ ॥

---

## — ॥ राहडीप्रबन्धः ॥ —

यस्यां भवेद्वीररसेन सम्यक् संग्रामवृत्तस्य परिष्टुतिश्च ।
पादेषु भूरिष्विह केचन स्युरुद्ग्राहसंज्ञास्त्वपरे ध्रुवाख्याः ॥ ७७० ॥

आभोगसंज्ञश्च पृथक्पदैः स्यात्तस्मादयं संकथिता त्रिधातुः ।
धुता ह्यनिर्युक्ततया पदैश्च तालेन तारावलिजातिरेषः ॥ ७७१ ॥

---

## — ॥ वीरश्रीप्रबन्धः ॥ —

उक्त्वेत्यमुं राहडिकाप्रबन्धं वीरश्रियं संप्रति लक्षयामः ।
उद्ग्राह एकस्तु पदैर्यदीयो ध्रुवस्तु खण्डो बिरुदैर्निबद्धः ॥ ७७२ ॥

वीरश्रियं तां विबुधा वदन्ति पदैस्तदाभोग इह क्रियेत ।
भवेदनिर्युक्त इह प्रबन्धस्तालेन बन्धाद्विरुदैः पदैश्च ॥ ७७३ ॥

त्र्यङ्गो भवेद्भावनिकाख्यजातिः स्यान्मङ्गलाचारमथामनामः ।

---

— ॥ मङ्गलाचारप्रबन्धः ॥ —

यः कैशिकीसंज्ञकरागयुक्तो निःसारुतालेन तथा निबद्धः ॥ ७७४ ॥

अन्ते स्वरैश्चापि समन्वितो यस्तं मङ्गलाचारमुदीरयन्ति ।
स च त्रिधा स्यादिह वृत्ततो वा गद्येन वा स्यादथ वोभयेन ॥ ७७५ ॥

स्यात् कैशिकी नाम भवेत्तु भाषा शुद्धस्य रागस्य तु पञ्चमस्य ।
विरामशीर्षं तु लघुद्वयं स्यान्निःसारुताले मुनिभिः प्रणीतम् ॥ ७७६ ॥

स्वरप्रयोगोऽपि भवेदिहाङ्घ्रेरन्तेऽथ वार्धस्य तथावसाने ।
स्वरैः समेतः प्रथमार्धमात्रोद्ग्राहो ध्रुवः सस्वरमुत्तरार्धम् ॥ ७७७ ॥

आभोगखण्डः पृथगेव कार्यस्तेन प्रबन्धोऽयमिह त्रिधातुः ।
भवेदनिर्यक्त इह स्वरैस्तु पदेन तालेन च भावनी स्यात् ॥ ७७८ ॥

---

— ॥ धवलप्रबन्धः ॥ —

ततो वदामो धवलप्रबन्धं स च त्रिधा स्यात् प्रथमा तु कीर्तिः ।
ततो द्वितीयो विजयस्तृतीयः स्याद्विक्रमो लक्ष्म वदामि तेषाम् ॥ ७७९ ॥

कीर्तिश्चतुर्भिश्चरणैर्निबद्धा तथैव षड्भिर्विजयोऽङ्घ्रिभिः स्यात् ।
स्यादष्टभिर्विक्रम एष पादैस्तेषां च मात्रानियमं वदामः ॥ ७८० ॥

आद्ये तृतीये चरणे तु कीर्तेः षण्मात्रिका सा छगणावुभौ च ।
तुर्ये द्वितीये नगणोऽधिकः स्यात्तथाधिकः स्याद्गणोऽथ वा चेत् ॥ ७८१ ॥

कीर्त्याख्यमेतं धवलं वदन्ति तथा वदामो विजयस्य लक्ष्म ।
आद्ये चतुर्थे च तथैव षष्ठे पादे द्वितीये दगणावुभौ स्तः ॥ ७८२ ॥

कीर्तेस्तु पादादधिकौ भवेतां शेषस्तृतीयोऽपि च पञ्चमोऽङ्घ्रिः ।
षण्मात्रकेण च्छगणेन वा स्यात्तथाधिकौ तौ पगणेन वा स्तः ॥ ७८३ ॥

अथोच्यते विक्रमलक्षणं तु पूर्वस्य पादे चगणास्त्रयश्च ।
अनन्तरं स्याद्गणस्तथैव ततस्तृतीये दगणास्तथैव ॥ ७८४ ॥

तुर्ये च पादे च गणास्त्रयो दास्तथा द्वितीये दगणास्त्रयश्च ।
षष्ठेऽष्टमेऽङ्घ्रौ दगणा निरुक्ताश्चत्वार एते खलु विक्रमोऽयम् ॥ ७८५ ॥

सोऽयं च गेयो धवलस्त्विहाशीर्वादेन सम्यग्धवलेन शब्दैः ।
यदृच्छया वा धवलप्रबन्धो लोकप्रसिद्धो निपुणेन गेयः ॥ ७८६ ॥

भवेदनिर्युक्त इह त्रिधातुस्तारावली स्यात् पदतालबन्धात् ।

---

### — ॥ मङ्गलप्रबन्धः ॥ —

अथोच्यते मङ्गलनामधेयो गेयः स शुद्धस्य तु पञ्चमस्य ॥ ७८७ ॥

कैशिक्यभिख्ये भवतीह भाषारागेऽथ वान्यत्र तु बोट्टरागे ।
पदैर्युतो मङ्गलवाचकैश्च विलम्बितेनैव लयेन गेयः ॥ ७८८ ॥

यद्वा भवेन्मङ्गलनामकेन यच्छन्दसा साधु विरच्यते सः ।
तच्छन्दसो लक्षणमीरयामो भवेयुरस्मिन् भगणाश्च पञ्च ॥ ७८९ ॥

प्रत्यङ्घ्रि चेत् स्युर्भगणा चतुश्च ततो गुरू मङ्गलवृत्तमेतत् ।
उद्ग्राहमुख्यं त्विह पूर्ववत् स्यादुक्तं प्रबन्धस्त्विह मङ्गलाख्यः ॥ ७९० ॥

---

### — ॥ ओवीप्रबन्धः ॥ —

ओवीप्रबन्धः कथितस्तथैव तस्मिंश्च भेदा बहवो भवन्ति ।
पादत्रयस्यापि च पूर्वपादावावृत्तिभेदात् प्रतिपादमेव ॥ ७९१ ॥

प्रासैस्तथाद्यान्तिममध्यभाग्भिश्छन्दोभिरोव्यो बहवो वदन्ति ।

---

### — ॥ डो(लो)लीप्रबन्धः ॥ —

डो(लो)लीप्रबन्धं प्रतिपादयामः स्थाने यदोवीति पदस्य युक्त्या ॥ ७९२ ॥

डो(लो)लीति शब्दं विनिवेश्य सम्यग्गायन्ति चेत् प्राकृतभाषया च ।
डो(लो)लीप्रबन्धं तमुदीरयन्ति वक्ष्यामहे संप्रति डोल्लरीं ताम् ॥ ७९३ ॥

---

### — ॥ डो(ढो)ल्लरीप्रबन्धः ॥ —

डोलीपदं चेत् प्रविहाय तस्याः स्थाने प्रयुज्येत च डो(ढो)ल्लरीति ।
या डो(ढो)ल्लरी सा खलु लाटवाचा गेया निरुक्तेति हि डो(ढो)ल्लरीयम् ॥ ७९४ ॥

---

— ॥ दन्तीप्रबन्धः ॥ —

दन्तीप्रबन्धं प्रतिपादयामः पूर्वोदिता या खलु ढो(ढो)ल्लरीति ।
तस्या अनुप्रासयुते निधानं पदत्रयान्ते खलु दन्तिनाम्नः ॥ ७९५ ॥

पदप्रयोगात् प्रभवन्ति दन्तिसंज्ञं प्रबन्धं भरतागमज्ञाः ।
आभोगखण्डस्त्विह येषु नोक्तास्तेषां पदैस्तत्परिकल्पनं स्यात् ॥ ७९६ ॥

चत्वार ओवीप्रमुखाः प्रबन्धा आभोगहीना इति वेदितव्याः ।
मेलापकाभोग विवर्जितत्वाद् द्विधातवस्ते कथिताः प्रबन्धाः ॥ ७९७ ॥

उद्ग्राहकस्त्वादिमखण्डयुग्मं खण्डस्तृतीयो ध्रुवसंज्ञकः स्यात् ।
एते ह्यनिर्युक्ततया निरुक्ताः साङ्गद्वयाः स्युः पदतालबन्धात् ॥ ७९८ ॥

एवं निरुक्ताः खलु विप्रकीर्णाः षट्त्रिंशदेते सह लक्षणेन ।

---

— ॥ सालगसूडलक्षणम् ॥ —

प्रबन्धजातं प्रतिपाद्य तत्रानुद्दिष्टपूर्वाः किल ये प्रबन्धाः ॥ ७९९ ॥

वक्ष्यामि तान् सालगसूडसंज्ञान् प्रबन्धभेदान् सह लक्षणेन ।
सूडप्रबन्धो विविधोऽत्र शुद्धश्छायालगश्चेत्यवधारणीयम् ॥ ८०० ॥

अष्टाविहैलप्रमुखाः प्रबन्धाः प्रोक्ताः प्रवीणैः किल शुद्धसूडाः ।
शास्त्रोक्तनैयत्यसमन्वितत्वं शुद्धत्वमित्याहुरिह प्रवीणाः ॥ ८०१ ॥

छायालगः सालग इत्युभौ च पर्यायभावं भजतश्च शब्दौ ।
छाया तु सादृश्यपदाभिधेया शुद्धस्य या तां लगतीति योगात् ॥ ८०२ ॥

छायालगाख्यः किल शब्द एष व्युत्पादितोऽसौ विशदं मुनीन्द्रैः ।
ध्रुवं समारभ्य किलैकतालीं यावद्भवेत् सालगसूडसंज्ञः ॥ ८०३ ॥

षाड्जीमुखा जातय एव शुद्धा जात्या तु तासां खलु ये श्रयन्ते ।
एलादयः सालगनामधेयाः शुद्धत्वमेषां कथमत्र चोक्तम् ॥ ८०४ ॥

अत्रोच्यते शास्त्रनियन्त्रितत्वरूपस्य धर्मस्य समानभावात् ।
षाड्जीमुखानामिव शुद्धतैषां मेलादिमानामुपचारतः स्यात् ॥ ८०५ ॥

ध्रुवादिमानां किल सालगत्वं शास्त्रोक्तनैयत्यविवर्जनात् स्यात् ।
षाड्ज्यादयोऽष्टादश जातयश्च कपालगानं किल कम्बलं च ॥ ८०६ ॥

ते ग्रामरागाश्च तथोपरागा रागा विभाषान्तरभाषिकाश्च ।
एते तु शुद्धाः कथिताः प्रवीणैः शास्त्रोक्तनैयत्यसमन्वितत्वात् ॥ ८०७ ॥

— ॥ ध्रुवलक्षणम् ॥ —

गेयो हि तुल्यस्वरगुम्भयुक्तौ खण्डाविहोद्ग्राहपदाभिधेयौ ।
स्यादन्तराख्यः किल खण्ड एकः स्यादीषदुच्चस्वरगुम्भयुक्तः ॥ ८०८ ॥

खण्डत्रयं द्विः खलु गेयमेवं खण्डद्वयेनाथ समन्वितस्तु ।
आभोगखण्डः पुनरत्र कार्यस्तत्राद्यखण्डः पुनरेकधातुः ॥ ८०९ ॥

द्वितीयखण्डः पुनरत्र खण्डद्वयात्मकस्तत्र किलाद्यखण्डः ।
स्यादीषदुच्चस्वरगुम्भयुक्तस्त्वेतादृगाभोगपदाभिधेयः ॥ ८१० ॥

स्यान्नेतृनामाङ्कित एव कार्यो मतान्तरेष्वेष विशेष उक्तः ।
उच्चैकखण्डात्मक एव सोऽयमाभोगनामावयवः किलेति ॥ ८११ ॥

उद्ग्राहकस्यादिमखण्ड एव न्यासो भवेदस्य समस्तमेतत् ।
ध्रुवस्य सामान्यमिदं हि लक्ष्म वक्ष्यामहे षोडश तद्विशेषान् ॥ ८१२ ॥

जयन्तनामा प्रथमः किलैको दशाक्षरोदञ्चितखण्डयुक्तः ।
स्यादादितालेन समन्वितश्च तथैव शृङ्गाररसे च गेयः ॥ ८१३ ॥

श्रोतुश्च गातुश्च तथैव नेतुरायुष्यसंपत्प्रद एष उक्तः ।
स्याच्छेखराह्वानयुतात् परो द्वादशाक्षरोदञ्चितखण्डयुक्तः ॥ ८१४ ॥

निःसारुतालेन समन्वितश्च वीराभिधाने च रसे च गेयः ।
श्रोतुश्च गातुश्च तथैव नेतुः सौभाग्यऋद्धिप्रद एष उक्तः ॥ ८१५ ॥

उद्ग्राहसंज्ञः स तु यस्य खण्डे त्रयोदश स्युः पुनरक्षराणि ।
हास्यो रसः स्यात् प्रतिमण्ठतालो नेतुश्च वंशर्द्धिकरश्च सोऽयम् ॥ ८१६ ॥

भवेत्तुरीयो मधुरोऽस्य खण्डे चतुर्दश स्युः पुनरक्षराणि ।
तालेन युक्तो ह्यलीलनाम्ना भोगप्रदोऽयं करुणे च गेयः ॥ ८१७ ॥

स्यान्निर्मलाख्यं खलु निर्मलोऽस्य खण्डो भवेत् पञ्चदशाक्षरीभाक् ।
क्रीडाख्यतालः प्रथमो रसश्च प्रथां विधत्ते पुनरेष नेतुः ॥ ८१८ ॥

स्यात् कुन्तलः षोडशवर्णयुक्तः खण्डस्तु तालो लघुशेखरस्य ।
ताले लघुः स्याल्लघुशेखराख्ये विरामशीर्षः पुनरेक एव ॥ ८१९ ॥

रसोद्भटा नेतुरभीष्टदायी स्यात् सप्तमः कोमलनामधेयः ।
खण्डो भवेत् सप्तदशाक्षरीयुक्तालस्तु झम्पाख्य इहोपदिष्टः ॥ ८२० ॥

झम्पाख्यताले तु विरामशीर्षं द्रुतद्वयं चापि लघुस्तथैव ।
शृङ्गारभेदे किल विप्रलम्भे गेयो रसे शीलकरश्च नेतुः ॥ ८२१ ॥

चाराभिधानः पुनरष्टमोऽष्टादशाक्षरीरञ्जितखण्डयुक्तः ।
निःसारुतालोऽत्र च वीरसंज्ञे रसे च गेयोऽधिकहर्षदायी ॥ ८२२ ॥

स नन्दनो यस्य च खण्ड एव चैकोनिता विंशतिरक्षराणि ।
वीरे च शृङ्गाररसे निरुक्तस्तथैकताल्या युत इष्टदश्च ॥ ८२३ ॥

चन्द्रादिमः शेखर एष तस्य खण्डे तथा विंशतिरक्षराणि ।
शृङ्गारहास्यौ च तथैव वीरो रसश्च तालः प्रतिमण्ठनामा ॥ ८२४ ॥

नेतुस्तथैवेष्टफलप्रदायी स कामदो यस्य तु खण्डकेऽस्मिन् ।
एकाधिका विंशतिरक्षराणि तथैव तालः प्रतिमण्ठनामा ॥ ८२५ ॥

शृङ्गारनामात्र रसश्च नेतुः श्रोतुस्तथैवेष्टफलप्रदायी ।
ध्रुवस्य भेदो विजयोऽस्य खण्डे द्वाविंशतिश्चैव तथाऽक्षराणि ॥ ८२६ ॥

हास्यो रसस्तस्य तु ताल एष द्वितीयकश्चायुरभीष्टदश्च ।
कंदर्पसंज्ञः पुनरत्र खण्डे भान्ति त्रयोविंशतिरक्षराणि ॥ ८२७ ॥

शृङ्गारहास्यौ करुणो रसश्च स्यादाततालः स हि भोगदश्च ।
नृणां तथायं शिवसंमतश्च निरूप्यतेऽसौ जयमङ्गलोऽस्य ॥ ८२८ ॥

खण्डे चतुर्विंशतिरक्षराणि क्रीडाख्यतालः प्रथमो रसश्च ।
जयप्रदो मङ्गलदश्च नेतुरुत्साहदायी भवति प्रबन्धः ॥ ८२९ ॥

ध्रुवस्य भेदस्तिलकोऽस्य खण्डे पञ्चोत्तरा विंशतिरक्षराणि ।
तथैकताल्या रचितश्च वीरशृङ्गारयोरेष भवेत् प्रयोगः ॥ ८३० ॥

ध्रुवस्य खण्डो ललितोऽस्य खण्डे षडुत्तरा विंशतिरक्षराणि ।
तालेन युक्तः प्रतिमण्ठनाम्ना शृङ्गारयोगः स हि शीलदः स्यात् ॥ ८३१ ॥

उक्तस्त्वयं वर्णविधिः प्रबन्धे खण्डद्वये वा निखिले च खण्डे ।
वेद्योऽस्य गाने किल शास्त्ररीत्या शतक्रतूनां फलमामनन्ति ॥ ८३२ ॥

---

— ॥ मण्ठप्रबन्धः ॥ —

ध्रुवप्रबन्धं प्रतिपाद्य पश्चान्मण्ठप्रबन्धस्य च लक्ष्म वक्ष्ये ।
उद्ग्राहखण्डं यदि युग्मयुक्तं यद्वैकयत्यान्वितमेव कार्यम् ॥ ८३३ ॥

द्विर्गेयमस्मात् परतो ध्रुवाख्यं वैकल्पिकं चैक ततोऽन्तराख्यम् ।
ध्रुवाख्यखण्डं पुनरेव गीत्वाभोगाख्यखण्डः सकृदेव गेयः ॥ ८३४ ॥

न्यासो ध्रुवे यत्र स मण्ठनामा प्रोक्तः स मण्ठाभिधतालयुक्तः ।
षोढा भवेदेष च तद्विधासु जयप्रियाख्यः प्रथमो निरुक्तः ॥ ८३५ ॥

वीरे रसे यो जगणात्मकेन तालेन मण्ठेन समन्वितश्च ।
शृङ्गारसंज्ञे भगणात्मकेन मण्ठेन चेन्मङ्गलको द्वितीयः ॥ ८३६ ॥

शृङ्गारसंज्ञे सगणात्मकेन मण्ठेन चेत् सुन्दरकस्तृतीयः ।
मण्ठेन युक्तो रगणात्मकेन स्याद्वल्लभोऽसौ करुणे नियोज्यः ॥ ८३७ ॥

विरामसंयुक्तगणात्मकेन कलापको हास्यरसे नियोज्यः ।
विरामसंयुग्द्रुतयुग्मकश्च लघ्वात्मना मण्ठपदाभिधेन ॥ ८३८ ॥

स्याददद्भुतेऽसौ कमलस्तु षष्ठो मण्ठप्रबन्धास्तु षडेवमुक्ताः ।
मण्ठाख्यतालस्य च षड्विधत्वान्मण्ठप्रबन्धोऽपि च षट्प्रकारः ॥ ८३९

---

## — ॥ प्रतिमण्ठप्रबन्धः ॥ —

मण्ठप्रबन्धं प्रतिपाद्य सम्यङ् निरूप्यतेऽसौ प्रतिमण्ठसंज्ञः ।
प्रबन्धकस्य प्रतिमण्ठनाम्न उद्ग्राहमुख्यं खलु लक्षणं चेत् ॥ ८४० ॥

सर्वं तु तन्मण्ठवदेव वेद्यं ततो विशेषः प्रतिपाद्यतेऽस्मिन् ।
तालेन गेयः प्रतिमण्ठनाम्ना चतुर्विधः सोऽयमिह प्रबन्धः ॥ ८४१ ॥

आद्यः प्रबन्धस्त्वमराभिधानः शृङ्गारसंज्ञे गुरुणैककेन ।
विरामशीर्षद्रुतयुग्मकश्च लघुद्वयेनैव तु गीयमानः ॥ ८४२ ॥

ताराभिधोऽसौ प्रतिमण्ठभेदा वीरे च रौद्रे च रसे द्वितीयः ।
विरामयुक्तेन लघुत्रयेण गीतो विचारः करुणो रसः स्यात् ॥ ८४३ ॥

अयं तृतीयः प्रतिमण्ठभेदः कुन्दाभिधानप्रतिमण्ठसंज्ञः ।
विराममध्येन लघुत्रयेण स्याददद्भुते चैष रसे नियोज्यः ॥ ८४४ ॥

चत्वार एते प्रतिमण्ठभेदाः शृङ्गारके चेति वदन्ति केचित् ।

---

## — ॥ निःसारुप्रबन्धः ॥ —

निरूप्य चैवं प्रतिमण्ठभेदान्निःसारुकं संप्रति लक्षयामः ॥ ८४५ ॥

तल्लक्षणं चोदितमण्ठवन् स्यान्निःसारुतालोऽत्र भवेद्विशेषः ।
स षड्विधस्तत्र तथाद्य एष वैकुन्दनामाथ च तस्य लक्ष्म ॥ ८४६

द्रुतद्वयाच्चैव लघुद्वयेन स मङ्गले गीयत एष भेदः ।
आनन्दसंज्ञो भवति द्वितीयो विरामशीर्षो द्रुतयोर्युगेन ॥ ८४७ ॥

आनन्दहेतुः स भवेत् प्रबन्धः कान्तारकस्त्वत्र भवेत्तृतीयः ।
स गीयमानः किल विप्रलम्भे लघोः परस्ताद् गुरुणा निबद्धः ॥ ८४८ ॥

भवेच्चतुर्थः समरः स वीरे लघुद्वयेनैव विरामशीर्षः ।
स पञ्चमः स्यादिह वाञ्छिताख्यो लघुत्रयाच्च द्रुतयोर्युगेन ॥ ८४९ ॥

स वाञ्छितानां भवति प्रदाता षष्ठो विशालोऽस्य च लक्ष्म वक्ष्ये ।
संभोगशृङ्गाररसे स गेयो द्रुतद्वयाच्चेल्लघुना निबद्धः ॥ ८५० ॥

एवं निरुक्तः खलु षड्विधोऽयं निःसारुकाख्यो भवति प्रबन्धः ।

---

— ॥ अड्डुप्रबन्धः ॥

अथाड्डुतालाह्वयवत्प्रबन्धं निरूपयामः सह लक्षणेन ॥ ८५१ ॥

यस्त्वड्डुतालेन निबध्यमानः षोढा भवेदेष किल प्रबन्धः ।
निःशङ्कनामाऽत्र भवेदिहाद्यो लघोर्गुरोश्च द्रुतयोर्युगेन ॥ ८५२ ॥

स विस्मये चैव रसे नियोज्यः शङ्काभिधस्त्वत्र भवेद् द्वितीयः ।
लघोः परस्ताद् द्रुतयोर्युगेन वीरे च शृङ्गाररसे प्रयोज्यः ॥ ८५३ ॥

शीलाख्यभेदस्तु भवेत्तृतीयो विरामशीर्षो द्रुतयुग्मतस्तु ।
एष प्रबन्धो लघुना च शान्ते रसे नियोज्यः खलु शीलनामा ॥ ८५४ ॥

चारो भवेत्तत्र हि तच्चतुर्थो द्रुतद्वयोश्चैव लघोर्गुरोश्च ।
वीरेऽद्भुते चैव रसे नियोज्यश्चाराभिधेयो भवति प्रबन्धः ॥ ८५५ ॥

स्यात् पञ्चमोऽयं मकरन्दनामा द्रुतद्वयाद्यो गुरुणा निबद्धः ।
शृङ्गारसंज्ञे च रसे नियोज्यः षष्ठोऽस्य भेदो विजयाभिधेयः ॥ ८५६ ॥

द्रुतद्वयाद्यो लघुना निबद्धो वीरे रसे यश्च भवेन्नियोज्यः ।
एतस्य तालस्य मताः प्रभेदा निरूपिताः संप्रति लक्षणेन ॥ ८५७ ॥

---

— ॥ रासप्रबन्धः ॥ —

रासप्रबन्धस्तु निरूप्यतेऽथ यो रासतालेन भवेन्निबद्धः ।
स चादिताले लघुरेव चोक्तः सोऽयं प्रबन्धस्तु मतश्चतुर्धा ॥ ८५८ ॥

आद्यो भवेत्तत्र विनोदनामा चालापकश्चेत् क्रियते ध्रुवान्ते ।
स कौतुके चैव रसे नियोज्यस्तस्य द्वितीयो वरदोऽथ भेदः ॥ ८५९ ॥

आलापकश्चेद् ध्रुवखण्डमध्ये देवस्तुतौ स्याद्वरदाभिधानः ।
नन्दस्तृतीया कथिता भिदाऽस्योद्ग्राहस्य खण्डद्वयसंयुतस्य ॥ ८६० ॥

आलापबद्धं यदि चाद्यखण्डं नन्दाभिधश्चाभ्युदये स गेयः ।
तुर्यः स भेदः खलु कम्बुजाख्यस्त्वालापकश्चेद् ग्रथितो ध्रुवादौ ॥ ८६१ ॥

स कम्बुजाख्यः करुणे रसे स्याच्चतुर्विधोऽसाविति रास उक्तः ।
रासप्रबन्धेष्वखिलेष्वथैषूद्ग्राहो द्विखण्डः परिकल्पनीयः ॥ ८६२ ॥

---

## — ॥ एकतालीप्रबन्धः ॥ —

रासप्रबन्धं प्रतिपाद्य सम्यगथैकतालीं प्रतिपादयामः ।
शुद्धा निरुक्ता हि परैकताली निरूप्यते सालगसंज्ञकैषा ॥ ८६३ ॥

स्यादेकताल्या रचितैकताली त्रिधा मतोऽसौ भवति प्रबन्धः ।
आद्यः प्रभेदोऽस्य भवेद्रमाख्य उद्ग्राहको यद्विरतिद्वयीभाक् ॥ ८६४ ॥

स तूच्चगीतस्तदनन्तरं चान्तराख्यखण्डोऽक्षरनिर्मितश्च ।
एषा रमा नाम मतैकताली श्रोतुश्च गातुर्भवति श्रियै सा ॥ ८६५ ॥

तस्या द्वितीया खलु चन्द्रिका चोद्ग्राहो द्विखण्डो भवतीह यस्याम् ।
आलापरूपः पुनरन्तराख्यो घनद्रुता स्याद्रुतयत्यभिख्या ॥ ८६६ ॥

ज्ञेया घनप्राससमन्विता च सौभाग्यदा सैव तु चन्द्रिका स्यात् ।
अथैकताली विपुला तृतीयोद्ग्राहस्य चालाप इहादिमः स्यात् ॥ ८६७ ॥

आनन्ददा सा विपुला मता स्यादालापलक्ष्माथ निरूपयामः ।
आलप्तिरुक्ता गमकप्रधाना या त्वक्षरेणैव विवर्जिता स्यात् ॥ ८६८ ॥

आलापमेतं प्रवदन्ति सन्तः प्रयोगशब्देन स एव वाच्यः ।
इतीरिताः सालगसूडसंज्ञाः सप्त प्रबन्धाः सह लक्षणेन ॥ ८६९ ॥

---

## — ॥ रूपकलक्षणम् ॥ —

अथ प्रबन्धस्य किलोत्तमादिभेदानशेषान् प्रतिपादयामः ।
व्यक्त्यादिभिर्यत्तु गुणैः समेतं लोकादिदुष्टत्वविवर्जितं च ॥ ८७० ॥

नवं च तद्रूपकमुत्तमं स्यान्नवत्वहेतूनथ वर्णयामः ।
रागस्य धातोश्च तथैव मातोस्तालस्य चैवाथ लयस्य चैव ॥ ८७१ ॥

तथौडुवस्यापि नवत्वयोगात् स्याद्रूपकं नूतनशब्दवाच्यम् ।
स्थायस्य रागांशपदोदितस्य भेदेन रागस्तु नवत्वमेति ॥ ८७२ ॥

रागान्तरस्यावयवस्तु रागे स्यादंशनामा कथितः पुरेव ।
तेषां विभेदेन च धातुभेदे मातोर्नवत्वं त्वभिधीयतेऽथ ॥ ८७३ ॥

वाक्यार्थभेदेन रसप्रभेदैः शब्दार्थतालंकृतिभेदतश्च ।
मातोर्नवत्वं प्रवदन्ति सन्तस्तालस्य नव्यत्वविधान्वदामः ॥ ८७४ ॥

लयप्रभेदाद् ग्रहभेदतश्च तालेन चोक्ता नवता मुनीन्द्रैः ।
हेतुं वदामो लयनूतनत्वे तथाऽस्य विश्रान्तिविधां विहाय ॥ ८७५ ॥

खण्डस्य विश्रान्तिविधान्तरेण तालस्य विश्रान्तिविपर्ययेण ।
अथौडुवस्यापि नवत्वहेतून् सर्वान् वदामो रचनात्मकस्य ॥ ८७६ ॥

छन्दोविशेषाद्गणभेदतो वा न्यासप्रभेदाद् ग्रहभेदतो वा ।
तथा प्रबन्धावयवप्रभेदः स्यादौडुवात्मा रचना नव स्यात् ॥ ८७७ ॥

तन्मध्यकस्यापि च रूपकः स्यात् त्रैविध्यमेवं प्रतिपादयामः ।
आद्यं तु तेषां परिवृत्तमुक्तं पटान्तरं तत्र भवेद् द्वितीयम् ॥ ८७८ ॥

स्याद्भञ्जनीमिश्रमिदं तृतीयं तेषां च लक्ष्म प्रतिपादयामः ।
छाया भवेद्रूपकसंश्रितायाः स्थानान्तरं गच्छति चैतदेव ॥ ८७९ ॥

स्वस्थानकेनाथ नवेन तद्वद्रागेण यस्यां परिवृत्तिरिष्टा ।
तालेन वा तत्परिवृत्तमुक्तं तस्यैव लक्ष्मान्तरमामनामः ॥ ८८० ॥

यत् स्थानकं स्थायिनि यत्र पूर्वं स्याद्रूपके संचरितं तदेव ।
स्वस्थानमुक्तं हि तदन्यभावः स्थायिन्यभिन्ने परिवर्तनं स्यात् ॥ ८८१ ॥

रागाय तस्मिन् परिवृत्ततो वा तालस्य वा तत् परिवृत्तमुक्तम् ।
पटान्तरं संप्रति लक्षयामो रागे च ताले च रसे च बन्धम् ॥ ८८२ ॥

स्थायस्य मातोश्च विचित्रभावाद् गुणैरुपेतं तु पटान्तरं स्यात् ।
तद्भञ्जनीसंश्रितमामनामस्त्वन्येन यद्रूपकधातुतस्तु ॥ ८८३ ॥

तस्य द्वितीयस्त्वनुसारयुक्तः खल्लोत्तरं संप्रति लक्षयामः ।
छाया मता या खलु रूपकस्य स्थानान्तराप्तौ खलु पूर्वकस्य ॥ ८८४ ॥

मात्वन्तरेणैव विरच्यते चेत्तदा खलोत्तारममुं वदन्ति ।
पूर्वत्र रागे च तथैव ताले किंचित्तु धात्वन्तरनिर्मितोऽयम् ॥ ८८५ ॥

तदानुसारः कथितः प्रभेद इतीरिताश्चात्र तु तत्प्रभेदाः ।

---

— ॥ गीतगुणाः ॥ —

तद्रूपकं च त्रिविधं निरूप्य ततः परं गीतगुणान् वदामः ॥ ८८६ ॥

दशैव ते गीतगुणाः प्रदिष्टास्तेषां गुणानामिह लक्ष्म वक्ष्ये ।
स्फुटैः स्वरैर्व्यक्तपदाभिधेयो गीतस्य चाद्यस्य गुणो निरुक्तः ॥ ८८७ ॥

पूर्णाभिधे रागपदस्वराणां पूर्त्या द्वितीयस्तु गुणो मतः स्यात् ।
प्रसन्नसंज्ञस्तु गुणस्तृतीयो वेद्यस्तथायं प्रकटार्थभावात् ॥ ८८८ ॥

तुर्यो गुणः स्यात् सुकुमारसंज्ञो निरूपितः सुष्ठुतरत्वयोगात् ।
अलंकृताख्यस्तु गुणस्तथान्यः स्थानत्रये चापि समुद्भवत्वे ॥ ८८९ ॥

स्थानस्य वर्णस्य लयस्य चापि समानतायाः समनामकोऽन्यः ।
स्याद्वल्लकीवंशनिनादसाम्ये सुरक्तनामा किल सप्तमः स्यात् ॥ ८९० ॥

नीचोच्चमध्यप्रमुखस्वराणां स्याच्छ्लक्ष्णतायां च गुणोऽष्टमोऽयम् ।
श्लक्ष्णाभिधोऽन्यस्तु विकृष्टनामा चोच्चैस्तथोच्चारणयोगतः स्यात् ॥ ८९१ ॥

अन्यो जनानां च मनोहरत्वे गुणो निरुक्तो मधुराभिधानः ।
इतीरिता गीतगुणा दशैवं गीतस्य दोषान् दश वर्णयामः ॥ ८९२ ॥

---

— ॥ गीतदोषाः ॥ —

यल्लोकदुष्टं तु तथाद्यदोषः शास्त्रेण दुष्टं तु तथा द्वितीयः ।
अथो भवेन्न्यूनतया तृतीयो दोषो निरुक्तः श्रुतितो विरोधी ॥ ८९३ ॥

निषिद्धकाले खलु गानतः स्याद्दोषो भवेत् कालविरोधिरूपः ।
अन्यस्तु दोषः पुनरुक्तियुक्तं कलाविहीनं तु परोऽस्य दोषः ॥ ८९४ ॥

गतक्रमं सप्तम एष दोषस्तथाष्टमः स्याच्च पदार्थरूपः ।
ग्राम्यं तु यत् स्यान्नवमो निरुक्तः संदिग्धरूपं दशमो मतः स्यात् ॥ ८९५ ॥

गीतस्य दोषा दश ये निरुक्ता यथाक्रमं गायकबोधहेतोः ।
निरूपितोऽस्माभिरिह प्रबन्धाध्यायो बुधानां परितोषहेतोः ॥ ८९६ ॥

इति रघुनाथभूपविरचितायां सङ्गीतसुधायाम्
चतुर्थः प्रबन्धाध्यायः समाप्तः

---